THE

# KASHI-SANSKRIT-SERIES

## NO. 80.

( Vyākaraṇa Section, No. 10 )

# पाणिनिव्याकरणे वादरत्नम् ।



( द्वितीयो भागः )



JAI KRISHNADAS-HARIDAS GUPTA,

*..e Chowkhamba Sanskrit Series Office,*

*Benares City.*



1932.

THE

# KASHI-SANSKRIT-SERIES

## NO. 80.

( Vyākaraṇa Section, No. 10 )

THE

# Pāṇinīvyākaraṇa Vādaratnam

By

NYĀYA VYĀKARAṆĀCHĀRYA MĪMĀMSAKA SIROMAṆI

PANDIT S'RĪ SŪRYANĀRĀYAṆA S'ŪKLA

Professor, Government Sanskrit College,

Benares.



**( Part II )**

JAI KRISHNADAS-HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office,*

*Benares City.*

1932.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालाया

८०

व्याकरणविभागे (१०) दशमं पुष्पम् ।



# पाणिनिव्याकरणे वादरत्नम् ।

न्यायव्याकरणाचार्यमीमांसकशिरोमणिना
काशीस्थराजकीयपाठशालायां न्यायशास्त्राध्यापकेन
पं० श्रीसूर्यनारायणशुक्लेन विरचितम् ।

## द्वितीयोभागः ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः-
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।

१९८९

विश्वेश्वरः शरणम् ।

# सूचना ।

विदाङ्कुर्वन्तु संस्कृतप्रणयिनो विद्वांसश्छात्राश्च यद् न्यासरत्नावलीन्यासकौमुदीप्रभृतिन्यासग्रन्थानामलाभेन भवतां हृदि महती उत्कण्ठाऽसीद्यत् कोऽपि न्यासग्रन्थो नवीनः प्रकाशनीय इति तदुत्कण्ठाशान्तये 'वादरत्न'स्य प्रथमो भागः प्रकाशितः स चाचिरादेव श्रीमद्भिर्महताऽऽदरेण गृहीत इति प्रथमभागस्य कियन्त्येव पुस्तकानि सन्त्यवशिष्टानीत्यतस्त्वर्यतां तस्य संग्रहाय अन्यथा द्वितीयसंस्करणापेक्षा स्यात् ।

तस्य 'वादरत्नस्य' द्वितीयभागोऽपि विक्रयाय सन्नद्धः तस्य मूल्यम् १।) सपादरूप्यकम् अस्मिन्भागे च प्रधानसूत्रेषु परिष्काराः महताडम्बरेण विचारिताः किंबहुना वादरत्नस्य भागद्वये संगृहीते न्यासरत्नावली न्यासकौमुदी पाणिनितन्त्रक्रोडपत्रम् शिशुतोषिणी भावकुतूहलम् शास्त्रार्थरत्नावली एतेषां शास्त्रार्थग्रन्थानामपेक्षा न भवति इति शास्त्रार्थरसिकैः वादरत्नस्य भागद्वयमवश्यं सग्रहीतव्यम् परिशिष्टभागोऽपि झटिति भवतां दृष्टिपथमधिगमिष्यति वादरत्नस्य रचयिता काशीस्थसुप्रसिद्धपण्डितः वाराणसेयराजकीयसंस्कृतपाठशालान्यायशास्त्राध्यापकः न्यायव्याकरणाचार्यः मीमांसकशिरोमणिः सुगृहीतनामधेयः सूर्यनारायणशर्म शुक्ल एवेति एतेनैव ग्रन्थमहत्त्वं विदितं भविष्यतीति ।

काशी
कृष्णजन्माष्टमी
१९८९

किमधिकलेखनेनेनेति
जयकृष्णदास हरिदास गुप्तः--
चौखम्बा संस्कृत ग्रन्थमाला कार्यालय, काशी ।

# द्वितीयभागस्य विषयसूची ।

# प्रार्थना

अस्मिन्वादरत्नस्य द्वितीयभागे मुद्रयितुमारब्धे दैवदुर्विपाकवशेन रोगनिपीडितेनाऽपि कथञ्चिल्लेखनं शोधनं च मया कृतम् अतो मदीयं चेतोऽस्य सर्वथा निर्दोषत्वे न प्रमाणमिति भूयोभूयः प्रार्थये गुणग्राहिणो विद्वद्वरान् यन्ममापराधः क्षन्तव्यः, स्याच्चेद्भवतामाशीःपरम्परा तर्हि भागद्वयस्य त्रुटिसंशोधनपुरस्सरम् परिशिष्टभागमपि प्रकाशयिष्ये तस्मिंश्चभागे गुरुवर श्रीचन्द्रधरशर्मव्याकरणसाहित्याचार्यैरत्यन्तगोप्यत्वेनोपदिष्टाः विषया निवेशिता भविष्यन्तीति ।

विदुषामनुचरस्य
सूर्यनारायणशर्मशुक्लस्य ।

## अशुद्धिसंशोधनम् ।

७ पृष्ठे १ पङ्क्तौ–स्वप्रयोज्यत्वेत्यस्यस्थाने 'स्वप्रयोजकज्ञानप्रयोज्यत्व' इति पाठो बोध्यः ।

७ पृष्ठे ३ पङ्क्तौ–बोध्यम् । इत्यस्याग्रे 'तथाहि—अजादिप्रत्याहारविषयकज्ञानप्रयोजकं ज्ञानमादिरन्त्येन सहेतेति वाक्यार्थज्ञानं तत्प्रयोज्यत्वं हल्प्रत्याहारज्ञानद्वारा णकारादिधर्मिकेत्वज्ञाने इति सम्बन्धद्वयसमन्वयस्तु स्पष्ट एवेति ।

७ पृष्ठे १८ पङ्क्तौ 'तत्प्रयोज्यं हल्प्रत्याहारज्ञानद्वाराऽन्कारधर्मिकमित्वज्ञानं तत्प्रयोज्यत्वस्य' इत्यस्य स्थाने 'हल्प्रत्याहारज्ञानद्वारा तत्प्रयोज्यत्वस्य' इति पाठो बोध्यः।

७८ पृष्ठे ७ पङ्क्त्यनन्तरं 'कत्व स्वावच्छेदक' इति त्रुटिः ।

श्रीगुरुचरणेभ्यो नमः।

# अथ वादरत्न द्वितीयप्रकरणम् ।

## अइउण् १

नन्वत्र आदिभ्यो 'वर्णात्कार' इति कारप्रत्ययः कुतो नेति चेदुच्यते-वर्णात्कार इति वार्त्तिके रागाख्यायां ण्वुल्वहुलमिति सूत्राद्वहुलग्रहणानुवृत्त्या वाहुलकत्वेनाप्रवृत्तिरिति।

अथ 'वर्णात्कार' इत्यस्य कोऽर्थः, न तावत्स्वरूपशास्त्रवलाद्वर्णशब्दात्कार-प्रत्ययो भवतीति, वर्णशब्दात्कारप्रत्ययापत्तेरकारादौ तदनापत्तेश्च

न च वर्णात्कारप्रत्यय इत्यर्थः वर्णत्वं च वर्णसमाम्नायपठितवर्णवृत्ति-जातिमत्त्वं ततश्च न पूर्वोक्ताव्याप्त्यतिव्याप्ती इति वाच्यम् घटशब्दे प्रतिवर्ण कारप्रत्ययापत्तेः

न च 'इक्श्तिपौधातुनिर्देशे' इत्यतो निर्देशे इत्यनुवर्त्य प्रत्यासत्त्या वर्णनिर्देशे (वर्णबोधकतया वर्णोच्चारणे) वर्णात्कार इत्यर्थः, उच्चारणार्थाकारविशिष्ट-कादीनां वर्णत्वाभावात् तेभ्यः कारप्रत्ययानापत्तेः

न च व्यञ्जनमात्रात्कारप्रत्ययं कृत्वा तत आगन्तुनाऽकारेण ककार इत्या-दीनां सिद्धिरिति युक्तं वर्णादव्यहितोत्तरत्वेन कारप्रत्यस्यानुशिष्टतया व्यवधा-नेऽसाधुतापत्तेः।

न च वर्णबोधकात्कारप्रत्यय इत्यर्थाद् घटादिशब्दे घादीनां वर्णबोधकत्वा-भावान्नायं दोष इति वाच्यम् वर्णशब्दप्रमेयशब्दयोरपि वर्णबोधकतया ताभ्यां कारप्रत्ययापत्तौ वर्णकारः ;प्रमेयकार इति प्रयोगापत्तेः ङीप्टाप्प्रत्ययादिशब्दा नामपि वर्णबोधकतया तेभ्यस्तदापत्तेश्च

न च वर्णत्वविशिष्टधर्मावच्छिन्नविषयताकबोधजनकात्कारप्रत्यय इत्यर्थः वै० च स्वव्याप्यत्व स्वभिन्नत्वोभयसम्बन्धेन आद्येन प्रमेयशब्दे द्वितीयेन वर्ण-शब्दे उक्तापत्तिवारणं ङीप्टावादिशब्दाश्च ङीप्त्वाद्यवच्छिन्नविषयताकबोधज-नका इति न तेभ्योऽप्यापत्तिरिति वाच्यम्। एवमपि इगादिशब्देभ्यः ह्रस्वदीर्घा-दिशब्देभ्यश्च कारप्रत्ययस्य दुर्वारत्वात्। तथा हि आदिरन्त्येन सहेतेति सूत्रेण इगादिपदे इकारादिकान्तसमुदायघटकत्वोपलक्षितेत्वाद्यवच्छिन्ने शक्तेर्बोधनेन ऊकालेतिसूत्रेण ह्रस्वादिपदे मात्रकालिकत्वसमानाधिकरणाकारादिचान्तस-मुदायघटकत्वोपलक्षितात्वाद्यवच्छिन्ने शक्तेर्बोधनेन तेषां वर्णत्वविशिष्टधर्मा-वच्छिन्नबोधकतयोक्तदोष इति।

न च इगादिपदमिक्पदवत्त्वेनैवोपस्थापकं नेत्यादिना शक्त्यानन्त्यप्रसङ्गात् न वेत्याद्यन्यतमत्वेन गौरवादेवं च वर्णत्वविशिष्टधर्मावच्छिन्नविषयताप्रयोजकात् कारप्रत्ययः इति पूर्वोदीरितार्थेनैव निर्वाह इति वाच्यम् । इक्पदवत्त्वस्यापि वर्णत्वव्याप्यतया उक्तापत्तितादवस्थ्यात्

न च वर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधजनकात्कार इत्यर्थेन इक्पदवत्त्वादेः वर्णत्वव्याप्यजातित्वाभावान्निर्वाह इति वाच्यम् ककारबोधतात्पर्येणोच्चरितात् तच्छब्दात्कारप्रत्ययस्य दुर्वारत्वात् ।

न च वर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधजनकात् वर्णात्कार प्रत्यय इत्यर्थान्न दोषः इति वाच्यम् । उच्चारणार्थाकारविशिष्टस्य हशब्दस्य वर्णत्वाभावेन कारप्रत्ययस्यानापत्तेः ।

न च यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधजनकात्कारप्रत्यय इत्यर्थान्न दोष इति वाच्यम् अनुनासिकशब्दघटकनकारवृत्तिर्वर्णत्वव्याप्यो धर्मोऽनुनासिकत्वरूपस्तदवच्छिन्नविषयताकबोधकजनकतया अनुनासिकशब्दात्कारप्रत्ययापत्तेः

न च यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधजनकात् कारप्रत्यय इत्यर्थात् 'अनुनासिक्यं नाम गुण' इति भाष्येण अनुनासिकत्वस्य गुणत्वोक्त्या जातित्वाभावान्नायं दोषः व्याप्यत्वघटितेषु सर्वेष्वर्थेषु वर्णत्वव्याप्यत्वं स्वभिन्नत्वस्वव्याप्यत्वोभयसंबन्धेन वर्णत्वविशिष्टत्वरूपं बोध्यम् तेन न वर्णत्वव्याप्यं वर्णत्वमादायदोषसंभव इति वाच्यम्, गुणपदघटकाकारवृत्त्यत्वादिजात्यवच्छिन्नबोधकाद् गुणशब्दात्कारप्रत्ययापत्तेः

न च गुणपदं गुणपदवत्त्वेनैव बोधकमिति नायं दोषः किंच अ ए ओ एतदन्यतमत्वेन बोधकत्वेऽपि निरुक्तजात्या साक्षादवच्छिन्नाया विषयताया निवेशान्नायं दोष इति वाच्यम् एवमपि तकारबोधतात्पर्येणोच्चरितात्तच्छब्दात्कारप्रत्ययापत्तेर्दुर्वारत्वादिति चेदुच्यते—

वर्णत्वव्याप्यजातिविशिष्टात्कारप्रत्ययो भवतीति वै० च स्वावच्छिन्नविषयताकबोधतात्पर्यणोच्चरितत्व स्वविशिष्टशक्तिपर्याप्त्यधिकरणत्वोभयसंबन्धेन अत्र वै० स्वावच्छिन्ननिरूपितत्व स्वेतरधर्मावच्छिन्नानिरूपितत्वोभयसंबन्धेन तच्छब्दस्य बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्ततया तच्छब्दनिष्ठायास्तत्त्वावच्छिन्ननिरूपिताया एव शक्तेस्तत्त्वेतरघटत्वादिधर्मावच्छिन्ननिरूपितत्वेन द्वितीयसम्बन्धाभावेन दोषाभावात् ।

न च वैयाकरणमते अर्थे इव शब्देऽपि तत्तच्छब्दानां शक्तेः सिद्धान्तितत्वेन अकारादिपदानामपदबोध्यात्वावच्छिन्ने शक्ततया अत्वेतरापदत्वावच्छि-

न्ननिरूपितत्वस्यैव अकारादिपदशक्तौ सत्त्वेन कुत्रापि कारप्रत्ययानापत्तिरिति वाच्यम् शब्देऽर्थे च भिन्नशक्त्योरङ्गीकारेण दोषाभावात्

यदि शब्दार्थयोर्भिन्नशक्त्यङ्गीकारे सकृदुच्चरितन्यायात् युगपच्छब्दार्थोभय-बोधाप्रसङ्गेन—

न सास्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इत्यभियुक्तोक्तिविरोध इति शब्दार्थोभयनिरूपिताया एकस्याः शक्तेरङ्गीकार आवश्यक इति पूर्वोक्तो दोषस्तदवस्थ इत्युच्यते तर्हि स्वेतरधर्मावच्छिन्नानि-रूपितत्वेत्यस्य स्थाने स्वेतरशब्देतरधर्मावच्छिन्नानिरूपितत्वेति निवेशेन सक-लदोषपरिहारसम्भव इति ध्येयम् ।

अन्ये तु वर्णत्वव्याप्यधर्मविशिष्टात्कारप्रत्ययो भवतीति वै० च स्वाव-च्छिन्नविषयकबाधतात्पर्येणोच्चरितत्व स्वानाश्रयीभूतो य उच्चारणार्थकाजितरो वर्णस्तदघटितत्वोभयसम्बन्धेन वासुदेवबोधतात्पर्येणोच्चरिताशब्देऽतिव्याप्तिवा-रणाय प्रथमः अनुस्वारविसर्गतदादिशब्देऽतिव्याप्तिवारणाय द्वितीयः । दिव उत् इत्यादौ तकारस्योच्चारणार्थत्वेन उच्चारणार्थकाजितरतकारघटितत्वेन तृतीय-सम्बन्धाभावान्न उत्कार इति प्रयोगः ।

नन्वेवमुच्चारणार्थेकारघटितकिशब्दात्कारप्रत्ययापत्तिः न च इकारादिषु पुनः पुनरकारोच्चारणेन इकारादेर्नोच्चारणार्थत्वमितिवाच्यम् 'सुट्तिथोः, यीव-र्णयोः, अदसोऽसेः,' इत्यादौ इकारस्यापि तथाभूतस्य दर्शनादिति चेन्न-किकार इत्यादेरिष्टापत्तिग्रस्ततयाऽदोषात् अनिष्टत्वे वा अजितरेत्यस्य स्था-नेऽकारेतरत्वस्य निवेशनीयत्वादिति वदन्ति ।

परे तु स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताकबोध-तात्पर्येणोच्चरितत्व स्वेतरोच्चारणार्थाकारेतरवर्णाघटितत्वोभयसम्बन्धेन वर्ण-विशिष्टात् कारप्रत्यय इति स्वीकारान्न कापि दोष इति प्राहुः ।

वस्तुतस्तु वर्णविशिष्टात्कारप्रत्ययो भवति । वै० स्वाद्यवयवकत्व स्ववृ-त्तिश्रावणप्रत्यक्षविषयतावच्छेदकवर्णत्वव्याप्यजात्यवच्छिन्नबोधकत्वेनतात्पर्य-विषयत्व स्वविशिष्टाघटितत्व त्रितयसम्बन्धेन अत्र वै० स्वेतरत्व स्वसमभिव्या-हृताकारेतरत्वोभयसम्बन्धेन अकार इत्यादौ स्वाद्यवयवकत्वं व्यपदेशिवद्भावेन तकारतात्पर्यकतच्छब्दे आदिमसम्बन्धद्वयसत्त्वेऽपि तृतीयसम्बन्धाभावात् वा-सुदेवतात्पर्यकाशब्दे आद्यन्तसम्बन्धसत्वेऽपि मध्यमसम्बन्धाभावात् न कारप्र-त्ययः प्रथमदलं तु स्वरूपपरिचायकम् इति बोध्यम् ।

अत्रेदं बोध्यम् अनिनस्मन्नितिवार्तिकमनादिषु वर्णत्वमतिदिशति अत एव न तेषु अर्थवत्परिभाषाप्रवृत्तिः एवं च अन्कारः अस्कारः इति प्रयोगाणां

नानुपपत्तिः एवकारः वषट्कार इत्यादयस्तु बाहुलकाद्, घञन्तकारशब्देन समासाद्वा, समाधेया इति सर्वं सुस्थम् ।

## लणूसूत्रेऽकारश्च २

तुल्यास्यसूत्रे 'लपरत्वंवक्ष्यामीति' भाष्यम् तस्य लणसूत्रघटकाकारोनुनासिकत्वादित्संज्ञकस्तेन रप्रत्याहारसिद्धिरिति तवल्कार इत्यत्र लकारस्य सिद्धिरन्यथा रपर एव स्यादित्याशयं मत्वा लपरत्वं व्याख्यास्यामीत्यर्थं कैयट आह तदनुराधेनाह—लणसूत्रेऽकारश्चेति ।

शेखरकृता च लपरत्वं वक्ष्यामीत्यत्र वचपदस्वारस्यात् उरणूरलपर इति न्यासे उरणूरपरो लपरश्चेति न्यासे वा भाष्यतात्पर्यमवधार्य तवल्कार इत्यस्य सिद्ध्या तत्साधानाय अनुनासिकत्वेनेत्त्वं कृत्वा कैयटेनाश्रितो रप्रत्याहारः खण्डितः ।

तथा हि यदि लण्सूत्रेऽकारस्येत्त्वं सूत्रकृदभिमतं भवेत्तदा अतोल्रान्तस्येत्यत्र लकारोच्चारणमनर्थकं स्यात् रप्रत्याहारेणैव निर्वाहादतो लण्सूत्रेऽकारस्येत्त्वं नास्तीति प्रतीयते ।

न च तेन रप्रत्याहारस्यानित्यत्वं ज्ञाप्यते अतएव कमलानामित्यादौ रषभ्यामिति णत्वं नेति वाच्यम् रप्रत्याहारस्य नित्यत्वेऽपि उभयगतिरिहभवतीति न्यायेन क्वचित् रेफमात्रस्य ग्रहणसम्भवेन ज्ञापनस्यानुपयोगात् ।

किञ्च रप्रत्याहाराऽनित्य इत्यस्य कोर्थः यदि रत्वावच्छेदेन रेफलकारोभयनिरूपिता शक्तिरनित्येति कदाचिदस्ति कदाचिन्नास्तीति यावत् । तच्च न सम्भवति 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिकेन शक्तिरूपशब्दार्थसम्बन्धस्य नित्यत्वावगमात्

कस्यां चिद्व्यक्तौ सा शक्तिरस्ति कस्यांचिच्च नास्तीत्यपि नार्थः केवलरत्वावच्छिन्ननिरूपितलौकिकशक्त्यैव कार्यनिर्वाहसम्भवे अनित्यत्वज्ञापने फलाभावात् अत एव अणादिपदशक्तेरनित्यत्वाभावेऽपि क्वचित्प्रत्याहारस्य क्वचिदणादिप्रत्ययस्य च बोधः किं च बोधजनकतारूपशक्तेः कारणतावच्छेदकधर्मवति अवश्यम्भावनियमेन अनित्यत्वज्ञापनासम्भवश्चेति लकारोच्चारणेन-लण्सूत्रेऽकारस्यानुनासिकत्वाभाव एवोचितः ।

*ननु रषाभ्यामित्यादौ यथा षसाहचर्येण रेफस्य ग्रहणं न प्रत्याहारस्य तथा अतोल्रान्तस्येत्यत्र अत्साहचर्येण रेफस्यैव ग्रहणं भविष्यति न रप्रत्याहारस्येति शङ्कानिवृत्तये लग्रहणमावश्यकमित्यरुचेराह–किंचेति—

अयमाशयः लण् सूत्राकारस्यानुनासिकत्वे तमादाय यप्रत्याहारो णमादाय यण्प्रत्याहारश्चेति यत्र यप्रत्याहाराश्रयणे लाघवं तत्र य एवाश्रयणीयः यत्र यण आश्रयणे लाघवं तत्र स एवाश्रयणीयः यथा इको यणाचीति सूत्रे यण-

चीत्यत्र सार्धपञ्चमात्राः योचीतिकरणे चतस्रोमात्राः इति तत्र यप्रत्याहारेणैव व्यवहरेत् । यणो मयो द्वे इत्यत्र यण इति तन्त्रेण षष्ठ्यन्तपञ्चम्यन्तयोरुभयोर्निर्देशात् याद्यस्य इति करणे गौरवमिति तत्र यण्प्रत्याहारेणैव व्यवहरेत् न तु सर्वत्र यप्रत्याहारेणैव व्यवहरेत् इति तदेतद्ध्वनयता उक्तम् बहुषु यण्पदघटितसूत्रेष्विति न तु सर्वेष्वित्यर्थः ।

नन्विदमसङ्गतं पर्यायशब्दानां लाघवगौरवानादरात् संज्ञाशब्दानामर्धमात्रिकत्वमिति सिद्धान्ताच्चेति चेन्न–प्रकृतेऽणादिपदशक्तिग्राहकादिरन्त्येनेति शास्त्रेण लाघवाद् यत्वमेव शक्ततावच्छेदकं कुतो नाङ्गीकृतं न तु यण्त्वम् लण्सूत्रे णकारोच्चारणं च मास्तु इण्पदस्थाने इ अ अण् पदस्थाने अ अ इत्येवास्तु एवं च उभयविधप्रत्याहारानाश्रयणेन ययणोः पर्यायत्वाभाव इत्याशयात् परन्त्वेवमाशयवर्णने 'बहुषु' इत्यक्षरास्वारस्यम् इण् इत्यत्र इ अ इत्यस्योच्चारणे गौरवं च अत इमामेवारुचिमनुसन्धायाह द्वितीयं किंचेति सदाशिवभट्टोक्तं सम्यगेव ।

*नन्नु उभयविधप्रत्याहाराश्रयणे यवरलनिरूपितयणपदनिष्ठशक्तिद्वयस्वीकारे गौरवं, यणप्रत्याहारे णकारोच्चारणमकारेण रप्रत्याहार एव भवति न यादिरिति ज्ञापनाय चरितार्थं च अत एव ङ्यैः योचीत्यादौ न प्रत्याहारग्रहणम् किं च यपदे यत्वावच्छिन्ननिरूपिताया यादिचतुष्टयनिरूपितायाश्च शक्तेः स्वीकारे यस्य हल इत्यदौ कृत्रिमन्यायबाधनाय व्याख्यानाश्रयणे गौरवं च इत्यरुचेराह द्वितीयम् किंचेति ।

अयमभिप्रायः अनुबन्धानां प्रत्याहारजन्यबोधविषयत्वाभावाय भाष्याभिमतस्य लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोः पक्षतावच्छेदकाव्यापकत्वापत्त्या पक्षतावच्छेदकसामानाधिकरण्येन हेतोरसिद्धिरूपभागासिद्ध्यापत्तिः तथा हि अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात् इत्यनुमानप्रयोगः तत्र च इत्संज्ञायोग्यत्वरूपानुबन्धत्वरूपपक्षतावच्छेदकस्य लण्सूत्रघटकीभूताकारे सत्त्वेन हल्प्रत्याहारनिष्पत्तेः प्रागच्पदार्थज्ञानाभावेन तस्य लोप इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोरभावेन भागासिद्धिरिति । इदं चानुमानमनुबन्धत्वावच्छेदेन चिकीर्षितं न तु अनुबन्धत्वरूपपक्षतावच्छेदकसामानाधिकरण्येन अनुबन्धत्वावच्छेदेन चानुमितौ पक्षतावच्छेदकव्यापकत्वं हेतावपेक्षितम् नागेशमते तु नायं दोषः अनुनासिकत्वाभावादेवेत्संज्ञायोग्यत्वरूपानुबन्धत्वरूपपक्षतावच्छेदकस्यापि तत्राभावेन भागासिद्ध्यभावात् ।

नन्विदमनुमानमयुक्तं णकाराद्यनुबन्धानां हल्प्रत्याहारजन्यबोधविषयत्वस्यैव सत्त्वेन प्रत्याहारजन्यबोधविषयत्वाभावानुमितेर्बाधेनानुत्पादादिति

चेन्न स्वघटितसमुदायोपलक्षितशक्तिमत्प्रत्याहारजन्यबोधविषयत्वाभावस्यैवानुबन्धेषु साधनेन अइउण्सूत्रघटकणकारघटितसमुदायोपलक्षितशक्तिमदजादिप्रत्याहारजन्यबोधविषयत्त्वाभावस्य सत्त्वात् अइउण्घटकणकाराघटितसमुदायोपलक्षितशक्तिमद्धलादिप्रत्याहारजन्यबोधविषयत्त्वाभावस्यासाधनेन तदभावेऽपि क्षत्यभावात् ।

न चैवमपि लण्सूत्रघटकणकारे बाधो दुरुद्धरः लण्सूत्रघटकणकारघटितसमुदायोपलक्षितशक्तिमद्धल्प्रत्याहारजन्यबोधविषयत्वस्यैव सत्त्वात् एवमइउण्सूत्रघटकणकारेऽपि तादृशशक्तिमदल् अम् अशादिप्रत्याहारजन्यबोधविषयत्वस्यैव सत्त्वादिति वाच्यम् स्वविशिष्टवर्णाघटितसमुदायोपलक्षितशक्तिमत्प्रत्याहारजन्यबोधविषयत्वाभावस्यैव साधनीयतया दोषाभावात् वै० स्वेतरत्व स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन स्वपदमनुबन्धपरम् । तथा हि अइउण्घटकणकारे अलादिप्रत्याहारबोध्यत्वेऽपि अलादिपदानां अइउण्घटकणकारेतरणत्वावच्छिन्न 'ञमङणनम्' घटकणकारघटिततया तादृशशक्तिमत्त्वाभावेन क्षत्यभाव इति ।

एवं च अनुबन्धाः स्वविशिष्टवर्णाघटितसमुदायोपलक्षितशक्तिमत्प्रत्याहारजन्यबोधविषयत्वाभाववन्तः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादिति अनुमानाकारः वै० स्वेतरत्व स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वोभयसम्बन्धेन ।

ननु लकारधर्मिकेत्त्वज्ञानानन्तरं हल्प्रत्याहारसिद्धिः तत ऐऔच्घटकचकारे हल्त्वज्ञानं ततश्चकारस्येत्त्वं ततोऽच्प्रत्याहारसिद्धिः ततो लण्घटकाकारेऽच्त्वज्ञानं तत इत्त्वमिति लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोरपि लण्घटकाकारे सत्त्वेन न भागासिद्धत्वं हेतोरिति चेन्न—

शास्त्राणां प्रवृत्तौ निवृत्तौ वा वस्तुसत्ताया अनपेक्षणेन तज्ज्ञानस्यैवापेक्षणे-न च तादृशप्रत्याहारज्ञानसमानकालिकलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वस्यैव हेतोर्विवक्षणेन हल्प्रत्याहारज्ञानकाले लण्घटकाकाकारे इत्वज्ञानाभावेन हेतोरसत्त्वेन भागासिद्धितादवस्थ्यात् ।

न च शिष्यवृत्तिहल्प्रत्याहारज्ञानकालसमकालमेव गुरोर्लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानमस्तीति न भागासिद्धत्वमिति वाच्यम् । तत्प्रत्याहारज्ञानविशिष्टलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वरूपस्य हेतोर्विवक्षणेनादोषात् वै० च स्वसमानकालिकत्व स्वसमवायिसमवेतत्वोभयसम्बन्धेन ।

न च पाणिनेरेव ज्ञानद्वयं गृहीत्वा हेतोर्न भागासिद्धत्वं पाणिनेः प्रत्याहारज्ञानप्राक्कालेऽपि लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्त्वज्ञानसत्त्वात् गुरोस्तु

न तथा प्रत्याहारज्ञानानन्तरमेवेत्त्वज्ञानादिति वाच्यम् । स्वप्रयोज्यत्वरूपतृतीयसम्बन्धस्यापि निवेशेन पणिनेर्ज्ञानस्य प्रत्याहारज्ञानाप्रयोज्यतयाऽदोषात् एतेन ईश्वरज्ञानमादाय भागासिद्धिपरिहारशङ्कापि पराहतेति बोध्यम् ।

तथाच अनुबन्धाः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदधर्मावच्छिन्नत्व स्वेतरत्वोभयसम्बन्धेन स्वविशिष्टवर्णाघटितसमुदायोपलक्षितशक्तिमत्प्रत्याहारजन्यबोधविषयत्वाभाववन्तः स्वसमानकालिकत्व स्वसमवायिसमवेतत्व स्वप्रयोज्यत्वैतत्त्रितयसम्बन्धेन तत्प्रत्याहारज्ञानविशिष्टलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वप्रकारकज्ञानविषयत्वात् ।

ननु हल्सूत्रघटकलकारधर्मिकेत्त्वज्ञानानन्तरं झल्प्रत्याहारः सेद्धुमर्हति ञकारस्येत्संज्ञा च हल्प्रत्याहारसिद्ध्यनन्तरमिति झल्प्रत्याहारज्ञानसमकालं न ञकारे तादृशावच्छेदकाक्रान्तत्वज्ञानमिति भागासिद्धत्वं नवीनानामपीति चेन्न–

हल् वल् द्विविधप्रत्याहारकरणेन हल्प्रत्याहारसिद्ध्यनन्तरमेव लान्तप्रत्याहाराणां सिद्धिरिति ज्ञापनेनादोषात् । पुनः पुनरकारोच्चारणार्थवर्णरहितहलामग्रहणार्थतया आदिसाहचर्येण मध्यपातिनामपि ग्रहणार्थानामेव प्रत्याहारजन्य बोधविषयतया झलादिपदे ञकारादिग्रहणाभावाच्चेत्यलम् ।

केचित्तु हेतुदले स्वप्रयोजकज्ञानप्रयोज्यत्व स्वप्रयोज्यज्ञानाप्रयोज्यत्वसम्बन्धाभ्यां वैशिष्ट्यं निवेश्य दोषनिकरं वारयन्ति तथा हि–झल्प्रत्याहारविषयकज्ञानप्रयोजकं ज्ञानमादिरन्त्येनेति वाक्यार्थज्ञानं तत्प्रयोज्यं हल्प्रत्याहारज्ञानद्वारा ञकारधर्मिकमित्वज्ञानं तत्प्रयोज्यत्वस्य झल्प्रत्याहारप्रयोज्यं लक्ष्यधर्मिकसाधुत्वज्ञानं तत्प्रयोज्यत्वाभावस्य च ञकारधर्मिकेत्त्वज्ञाने सत्त्वेन ञकारादौ तादृशहेतोः सत्त्वेन भागासिद्ध्यभाव इति लण्घटकाकारधर्मिकमित्वज्ञानं तु हल्प्रत्याहारज्ञानप्रयोज्यं यदत्त्वज्ञानं तत्प्रयोज्यमेवेति द्वितीयसम्बन्धाभावाद्भागासिद्धत्वं हेतोरित्यलम् ।

ननु नागेशनये उच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्तिरिति लणसूत्राकारे अनुबन्धत्वमावश्यकमिति अव्यापकत्वापत्तिरेतन्मतेपीति चेन्न विधेयविषये एव प्रयोगसमवायित्वभिया उच्चारणार्थानामित्संज्ञालोपाभ्यां निवृत्तिस्वीकारात् अनङादौ प्रयोगसमवायित्वभिया इत्संज्ञालोपयोरावश्यकत्वेऽपि सोऽस्तीत्यादिप्रयोगदर्शनेन लण्घटकाकारे हल्प्रत्याहाराग्राह्यत्वस्य निर्णीतत्वेन प्रकृते इत्संज्ञालोपयोरनावश्यकत्वादित्यलम् ।

केचित्तु अनुबन्धेषु प्रत्याहारजन्यबोधविषयत्त्वाभावसाधने अइण्घटकणकारे हल्प्रत्याहारजन्यबोधविषयत्वस्य प्रमाणप्रमितत्वेन बाधापत्तिरतः प्रत्याहारजन्यबोधीयघटकत्वावच्छिन्नविषयत्वाभाव एव साध्यः लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वमेव हेतुः तथा च अइउण्घटकणकारे प्रत्याहारजन्य-

वोधीयघटकत्वावच्छिन्नविषयत्वाभावसिद्धौ अकारादिचान्तसमुदायघटकत्वस्य णकारेऽसत्वेनलक्ष्यस्थणकारादीनां न ग्रहणापत्तिः न वा अनुवन्धणकारादौ हल्प्रत्याहारजन्यबोधविषयत्वेन बाधादिशङ्का ञमङणनम्घटकणकारस्य हल्प्रत्याहारजन्यवोधविषत्वसत्त्वादित्याहुः ।

*नन्वनुबन्धत्वं नेत्संज्ञायोग्यत्वमपि त्विसंज्ञकत्वमेवेति हल्प्रत्याहारसिद्धिकाले लण्सूत्रघटकाकारे इत्त्वज्ञानाभावेन अनुवन्धत्वरूपपक्षतावच्छेदकस्याभावेन न हेतोः पक्षतावच्छेदकाव्यापकत्वमतआह—किंचेति ।

अयंभावः उक्तानुमानस्यादुष्टत्वेऽपि अकारस्य हल्प्रत्याहारे मध्यपतितत्वेन ग्रहणापत्तेर्दुवारत्वमिति हल्प्रयुक्तकार्यापत्तिरिति । नागेशभट्टमते तु अकारस्योच्चारणार्थत्वेन मध्यपतितत्वाभावेन ग्रहणापत्त्यभावः ।

न च तस्य हल्प्रत्याहारे ग्रहणेऽपि तस्मिन् हल्निमित्तकस्य हल्स्थानिकस्य वा कार्यस्य न प्राप्तिसम्भवः इति हल्प्रत्याहारे तस्य ग्रहणेऽपि क्षत्यभाव इति वाच्यम् अवात्तामित्यादौ तद्वयस्य झल्प्रत्याहारे ग्रहणाय जातिपक्षाश्रयणस्यावश्यकत्वेन आद्यन्तघटितसमुदायघटकवृत्तिजात्यवच्छिन्नस्य संज्ञेति आदिरन्त्येन सूत्रार्थात् सोऽस्तीत्यादौ एतत्तदोरिति सुलोपापत्तेः

न चानुनासिकनिर्देशेनानुनासिकत्वसमनाधिकरणत्वजात्यवच्छिन्नस्यैव ग्रहणेन नात्र दोष इतिवाच्यम् अनितीति आन् अनुनासिकस्य क्वीति दीर्घः मामांस्त्रायस्वेत्यत्र मोनुस्वार इति अनुस्वारापत्तेर्दुर्वारत्वात् ।

न च ह्रस्वत्वसमानाधिकरणानुनासिकत्वसमानाधिकरणत्वजात्याश्रयस्य ग्रहणान्नायं दोष इति वाच्यम् तावतापि अन्धातोर्विचि मामंस्त्रायस्वेत्यत्रानुस्वारापत्तेर्दुवारत्वात् ।

*ननु अइउण् इति सूत्रचतुष्टयानन्तरं प्रत्याहारेऽनुबन्धानां कथमग्रहणेषु नेति भाष्योक्त्या अच्प्रत्याहारस्य नामग्रहणेन अइउणादिसूत्रघटकानेवानुवन्धान्पक्षीकृत्य बोधविषयत्वाभावः साध्यते इत्येव प्रतीयते इति लण्सूत्रघटकाकारे अनुवन्धत्वेऽपि नाव्यापकत्वापत्तिशङ्का नवाकारे हल्त्वप्रयुक्तकार्यप्रसङ्गः अल्झलोर्द्वैराश्येन पाठात् अचोऽन्तु हलो हल्षु इति भाष्योक्त्या हकाराद्यकारवत्तस्याप्युच्चारणार्थत्वेन तस्याग्रहणार्थत्वरूपाप्राधान्यादग्रहणात् इत्यरुचेराह—अत एवेति—

अयं भावः हलादिप्रत्याहारेपि सूत्रान्तरस्थानुबन्धमादाय दोषसम्भवे प्रत्याहारविशेषसूत्रविशेषग्रहणेन अन्यसूत्रघटकानुवन्धे ग्रहणाग्रहणयोर्विशेषाभावसूचनासङ्गतिः स्यादिति ।

न च नागेशमते सूत्रचतुष्टयविषयकत्वपक्षेऽपि हशादिप्रत्याहारे इत्संज्ञकटादीनामपि ग्रहणापत्त्या प्रत्याहारविशेषोपादानमसङ्गतमेवेति वाच्यम् हकारा-

दिषु पुनःपुनरकारोच्चारणेन उच्चारणार्थवर्णरहितहलां ग्रहणाभावबोधनेना-दोषात् तद्विषयप्रयोगाणामनभिधानाच्च । न चैवं कोयष्टिकष्टीकते इतिभव-भूतिप्रयोगासंगतिरिति वाच्यम् हश्निमित्तककार्यघटितप्रयोगाणामनभिधान-मित्याशयेनादोषात् ।

तस्माल्लण्सूत्रेऽकारस्यानुनासिकत्वे मानाभावेन रप्रत्याहारो नास्तीति उरण्रलपर इति न्यासे भाष्यतात्पर्यमिति शेखरकृतामाकूतम् ।

वस्तुतस्तु उरण्रपरसूत्रे लकारानुच्चारणरूपलाघवेन रप्रत्याहाराश्रयणमेव श्रेयः इत्संज्ञकत्वरूपानुवन्धत्वस्यैव पक्षतावच्छेदकत्वाङ्गीकारेण पक्षतावच्छे-दकाव्यापकत्वापत्तिरपि न हल्प्रत्याहारसिद्धेः प्राक् लणोऽकारे इत्संज्ञकत्वरू-पानुवन्धत्वस्यैवाभावात् किं च नागेशमते उच्चारणार्थनामपीत्संज्ञालोपाभ्यामे-वापहारस्य दिवऔत्सूत्रे वक्ष्यमाणतया हयवरडित्यादौ हकारोत्तराकारमादाय पक्षतावच्छेदकाव्यापकत्वतादवस्थ्यात् हल्पदेनाकारग्रहणे मामांस्त्रायस्वेत्यादा-वनुस्वारापत्तेश्च द्वयोर्द्वयोर्व्यञ्जनयोर्मध्ये एकैकाकारोच्चारणे कर्तव्ये प्रतिव्य-ञ्जनमकारोच्चरणेन 'यत्तुल्यजातीयान् तुल्यजातीयेषूपदिशति अचोऽच्षु हलो-हल्षु' इति भाष्येण च प्रत्याहाराणामाद्यशब्दसजातीयमध्यपातिवोध्यवोधकत्वम-ङ्गीक्रियते साजात्यञ्च वोधकत्वप्रकारकाचार्यतात्पर्यविषयत्वेनैव अत एव सुवा-दिपदैर्भ्यामाद्येकदेशस्य हलादिपदैर्मध्यपातिवर्णसंघातस्य वा न ग्रहणम् हल्त्वा-च्त्वादिना तु न साजात्यं सुवादावभावात् एवं च इत्संज्ञायोग्यत्वात्मकानुवन्ध-त्वाङ्गीकारे तृतीयहेतोरव्यापकत्वापत्तिसहनं परमेतन्मतेऽतिरिच्यते न चोच्चा-रणार्थानामपीत्संज्ञालोपाभ्यामपहार इति विधेयविषय एवेति नैतन्मतेऽव्याप-कत्वापत्तिरिति श्रीधरोक्तं युक्तमिति वाच्यम् हइत्यादीनामपि साधुत्वविधा-यकत्वाङ्गीकारेण विधेयविषयतायास्सुवचत्वादिति कैयटोक्तं रप्रत्याहाराश्रयण-मेव युक्तमिति बोध्यम् ।

## तुल्यास्यप्रयत्नं सवर्णम् ३

तुल्यावास्यप्रयत्नौ यस्येति विग्रहः जनकत्वं षष्ठचर्थः इति शेखरः ननु आस्यविशेषणं तुल्यं प्रयत्नविशेषणं तुल्यः तुल्यं च तुल्यश्चेति विग्रहे नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति नपुंसकस्यैकशेषे तुल्ये इत्येव व-क्तुमुचितम् न तु तुल्याविति ।

नचाद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यमिति वार्तिकेन निषेधान्न नपुं-सकमित्यस्य प्रवृत्तिरिति वाच्यम् अस्यवचनस्य त्यदादीनिसर्वैर्नित्यमिति सूत्रे पठचमानतया तत्सूत्रस्थत्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानीतिवा-र्तिकनिषेधस्यैवौचित्यात् ।

न च सामान्यत एवैकशेषनिषेधकत्वमस्त्वस्य वचनस्येति वाच्यम् तथा

सति 'पुमान् स्त्रिया' इत्यस्यापि निषेधापत्तौ भगवतोर्भगनीविश्वनाथयोरित्यभियुक्तप्रयोगस्यासंगत्यापत्तेः तुल्यावित्येकशेषानुपपत्तेस्तादवस्थ्याच्चेति चेन्न

यत्र प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितव्यक्तिनिष्ठनानाविशेष्यताकबोधेच्छा तत्र 'प्रत्यर्थं शब्दनिवेश' इति भाष्यान्नानाशब्दोच्चारणप्रसङ्गः प्रतिप्रकारतमिति हि तस्यार्थः इति तत्रैवैकशेषः यत्र तु प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाव्यक्तिनिष्ठैकविशेष्यताकबोधनेच्छा तत्र न नानाशब्दोच्चारणप्रसङ्गः इति नैकशेषोपयोगः प्रकृते तुल्यत्वनिष्ठैकप्रकारतानिरूपिततुल्यद्वयनिष्ठैकविशेष्यताकबोधनेच्छया एकतुल्यशब्दस्य द्विवचनान्तस्य प्रयोगः न त्वेकशेष इत्यदोषात् न च न ब्राह्मणं हन्यादित्यत्र यथा नानाव्यक्तिबोधेऽपि एकवचनं तद्वदिहापि किं न स्यादिति वाच्यम् जातिगतैकत्वविवक्षया तत्रैकवचनप्रयोगेऽपि व्यक्तिगतद्वित्वविवक्षयेहद्विवचनस्यैव न्याय्यत्वादित्यलम् ।

नन्वस्य सूत्रस्य कीदृशोऽर्थ इति चेदुच्यते तुल्यावास्यप्रयत्नौ यस्येत्यत्र जनकत्वार्थकषष्ठ्यर्थे समासात् यद्वर्णजनकावास्यप्रयत्नौ तुल्यौ तत्सवर्णसञ्ज्ञमिति तत्र वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षबोधकप्रशब्दबलात् प्रयत्नशब्देन आभ्यन्तरप्रयत्नस्य लाभः आस्यपदं च आस्ये भवमास्यमिति व्युत्पत्त्या कण्ठादिपरं ततश्च यद्वर्णजनककण्ठादिस्थानाभ्यन्तरप्रयत्नौ तुल्यौ स सवर्णसञ्ज्ञ इत्यर्थः पर्यवसितः ।

ननु आस्यप्रयत्नयोः सादृश्यं वर्णेऽनुपपन्नं तयोरेकधर्मवत्त्वाभावादिति चेन्न यद्वर्णजनकास्यप्रयत्नौ यद्वर्णजनकास्यप्रयत्नाभ्यां तुल्यौ तौ सवर्णसंज्ञकावित्यर्थेनादोषात् ।

नन्वास्यपदेन आस्यभवग्रहणे प्रयत्नस्यापि आस्यभवत्वात्तेषामपि ग्रहणसंभवे प्रयत्नग्रहणं व्यर्थं प्रयत्नस्याप्यास्येऽवच्छेदकतासम्बन्धेन आस्यभवत्वाद्वर्णोपयोगित्वाच्चेति चेन्न—

शब्दो हि समवायेन आकाशे उत्पद्यमानोऽवच्छेदकतासम्बन्धेन कण्ठादावुत्पद्यते एवंचावच्छेदकतासम्बन्धावच्छिन्नवर्णनिष्ठजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजनकतावच्छेदकधर्मवत आस्यभवपदेन ग्रहणम् इत्यत्रैव प्रयत्नग्रहणस्य मानत्वात् तादृशजन्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नाजनकता तत्तत्स्थाने, तत्तत्स्थानावच्छेदेन आत्मनि प्रयत्नस्य जायमानत्वात् प्रयत्ननिष्ठा वर्णजनकता तु अवच्छेदकत्वसम्बन्धावच्छिन्ना इत्यदोषात् ।

एतेन ह्रस्वदीर्घाकारयोरुत्पादकवायुसंयोगस्य आस्यभवस्यातुल्यत्वात् तयोः सावर्ण्याभावेन तुल्यास्य इति निर्देशासंगतिरित्यपास्तम् वायुसंयोगेप्यवच्छेदकत्वसम्बन्धावच्छिन्नजनकत्वस्यैव सत्त्वेनादोषात् ।

ननु लकारवकारयोः सावर्ण्यवारणाय यावदास्यभवतुल्यत्वविवक्षावश्यिका

एवं च उदात्तानुदात्ताकारयोः सवर्ण्यं न स्यात् कण्ठोर्ध्वभागादौ तादात्म्यसम्बन्धावच्छिन्नजनकतयाः सत्त्वेन कण्ठोर्ध्वभागाधोभागयोरप्यास्यभवपदेन ग्रहणसम्भवेन तयोरतुल्यत्वादिति चेन्न—

प्रयत्नसाहचर्येणास्यभवानां वर्णविभाजकधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवतामेव ग्रहणेन कण्ठोर्ध्वभागादीनामुदात्तत्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वेऽपि वर्णविभाजककत्वाद्यवच्छिन्नजन्यतानिरूपितजनकतावत्त्वाभावान्नास्यभवपदेन ग्रहणमित्यदोषात् वर्णविभाजकत्वं च कत्वादीनामेव नोदात्तत्वादीनां 'त्रिषष्टिश्चतुष्षष्टिर्वा वर्णा' इति शिक्षोक्त्या तेषामेव वर्णविभाजकत्वलाभात् एवं च अवच्छेदकतासम्बन्धावच्छिन्नवर्णविभाजकधर्मावच्छिन्नजन्यतानिरूपितादात्म्यसम्बन्धावच्छिन्नजनकतावच्छेदकधर्मवत्त्वमेव प्रकृते आस्यभवत्वमिति सर्वं सूपपन्नम् ।

ननु यावदास्यभवतुल्यत्वविवक्षणे किं फलमिति चेदुच्यते यावदास्यभवतुल्यत्वविवक्षणाभावे इकारजनककण्ठस्थानविवृतप्रयत्नयोः एकारजनककण्ठस्थानविवृतप्रयत्नयोश्च तुल्यतया सावर्ण्यापत्तिः अत्र मानं तु तद्वानासामिति निर्देश एव अन्यथा लकारवकारयोः सावर्ण्यापत्तौ अणुदित्सूत्रबलेन लग्रहणेन वकारस्यापि ग्रहणापत्तौ तोर्लीति परसवर्णः स्यात् ।

ननु 'तसौ मत्वर्थे' इति सूत्रे दकारस्यापि प्रश्लेषाद् दान्तस्य तदो भत्वान्नायं दोष इति चेत्तर्हि यजुष्येकेषामिति निर्देश एव मानमिति गृहाण एवं च यद्वर्णजनकानि यावन्ति स्थानानि तावत्स्थानजन्यो यो वर्णः तयोः सावर्ण्यमित्यर्थः फलति प्रकृते च एकारजनकं कण्ठतालु तदुभयजन्यत्वस्य इकारेऽभावात् न सावर्ण्यमित्यदोषः तेन तद्वास इत्यादौ न लकारः परसवर्ण इति ।

नन्वेवमर्थकरणे यत्पदस्य यत्किंचिदेकवर्णव्यक्तिपरत्वे तद्वर्णातिरिक्तस्य सावर्ण्यानापत्तिः सकलवर्णव्यक्तिपरत्वे यच्छब्दार्थाननुगमः किञ्च तुल्यास्यप्रयत्नो वर्णः सवर्ण इत्यर्थस्यैव सूत्रतो लाभेन अन्येन तुल्यास्यप्रयत्नोऽन्यस्य सवर्णः स्यात् ततश्च उपेन्द्र इत्यादौ दीर्घापत्तिः न च सवर्णसञ्ज्ञावचनस्य, तत्र तत्र सवर्णपदस्य च सामर्थ्येन तस्येत्यध्याहृत्य तस्य तुल्यास्यप्रयत्नः तं प्रति सवर्ण इत्यर्थान्नायं दोष इति वाच्यम् सूत्रे सवर्णपदस्य संज्ञाशब्दत्वेन शब्दपरतया सञ्ज्ञायाश्च सनिरूपकत्वाभावेन तं प्रति सवर्ण इत्यर्थस्य वक्तुमशक्यत्वात् न हि देवदत्तो यज्ञदत्तं प्रत्येव देवदत्तो न विष्णुदत्तं प्रतीति केनाप्यभ्युपेयते इति ।

न च सवर्ण इति महासंज्ञया सदृशत्वसमानाधिकरणसवर्णपदवान् इत्यर्थात् सादृश्यस्य ससम्बन्धिकत्वात्कस्य सदृश इति जिज्ञासायां तं प्रति सवर्ण इत्यर्थलाभसम्भव इति वाच्यम् तावताप्यननुगमापत्तेस्तादवस्थ्यात् यावदा-

स्यभवतुल्यत्वविवक्षया एकारसावर्ण्यस्य इकारे वारणेऽपि इकारसावर्ण्यस्य एकारे वारयितुमशक्यत्वच्चेति चेदत्रोच्यते—

वर्णविशिष्टो वर्णः सवर्ण इति सूत्रार्थेनादोषात् । वै० स्वजनकमात्रस्थानजन्यत्व स्वजनकस्थाननिष्ठजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्व स्वजनकप्रयत्नजन्यत्वैतत्सम्बन्धत्रयेण । प्रथमसम्बन्धनिवेशादेकार इकारस्य न सवर्णः द्वितीयसम्बन्धनिवेशादेकारस्य इकारो न सवर्णः एकारजनककण्ठस्थाने जनकत्वसम्बन्धेनेकारो नास्तीति प्रतीतिसाक्षिकाभावप्रतियोगित्वस्येकारे सत्त्वात् तृतीयसम्बन्धनिवेशात् चकारयकारयोर्न सावर्ण्यम् । स्वजनकमात्रस्थानजन्यत्वं च स्वजनकस्थानजन्यत्वे सति स्वाजनकस्थानाजन्यत्वम् ।

वस्तुतस्तु सत्यन्तं व्यर्थम् एवं च प्रथमसम्बन्धः स्वाजानकस्थानाजन्यत्वरूपो बोध्यः जनकत्वसम्बन्धस्य वृत्त्यनियामकत्वेन वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावानाभ्युपगमे द्वितीयसम्बन्धस्थाने स्वजनकनिष्ठस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रतियोगिजनकतानिरूपितजन्यत्वाभावत्वरूपः सम्बन्धो निवेश्यः ।

कौमुदीकृतस्तु तुल्यस्थानप्रयत्नौ वर्णौ परस्परं सवर्णसञ्ज्ञौ इत्यर्थमभिप्रयन्ति परस्परत्वं च संसर्गविशिष्टसंसर्गवत्वं वै० स्वभिन्नत्व स्ववृत्तिसंसर्गतावच्छेदधर्मावच्छिन्नसंसर्गतावत्त्व स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्व स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वैतत्सम्बन्धचतुष्टयेन । यथा यज्ञदत्तदेवदत्तौ परस्परं नमत इत्यत्र देवदत्तस्य यज्ञदत्ते स्वकर्तृकनमनकर्मत्वं संसर्गः देवदत्ते यज्ञदत्तस्यापि स्वकर्तृकनमनकर्मत्वं संसर्गः तत्रान्तिमसम्बन्धे पूर्वसम्बन्धस्य वैशिष्ट्यमस्ति यतः स्वं पूर्वसम्बन्धः तद्भिन्नत्वं स्ववृत्तियत्संसर्गतावच्छेदकं स्वकर्तृकनमनकर्मत्वत्वं तदवच्छिन्नसंसर्गतावत्त्वमप्यस्ति स्वप्रातियोगिता देवदत्तनिष्ठा तत्समानाधिकरणानुयोगिताकत्वं स्वीयानुयोगिता यज्ञदत्तनिष्ठा तत्समानाधिकरणप्रतियोगिताकत्वमप्यस्ति इति भवति तत्र परस्परपदप्रयोगः ।

यत्र चैत्रः स्वमेव नमति तत्र स्वकर्तृकनमनकर्मत्व सम्बन्धश्चैत्रस्य श्चैत्रे एवेति एकप्रतियोग्यनुयोगिकत्वेन सम्बन्धभेदाभावात् अग्रिमसम्बन्धत्रयेण वैशिष्ट्यसत्त्वेऽपि आद्यसम्बन्धाभावात्संसर्गविशिष्टसंसर्गाभावेन न परस्परपदप्रयोगः ।

यत्र चैत्रो देवदत्तं नमति देवदत्तश्च चैत्रं ताडयति तत्र चैत्रस्य देवदत्ते स्वकर्तृकनमनकर्मत्वं देवदत्तस्य च चैत्रे स्वकर्तृकताडनकर्मत्वं सम्बन्धः तत्र स्वकर्तृकनमनकर्मत्वसम्बन्धभेदस्य स्वीयानुयोगितासमानाधिकरणप्रतियोगिकत्वस्य स्वीयप्रतियोगितासमनाधिकरणानुयोगिताकत्वस्य च स्वकर्तृकताड-

नकर्मत्वसम्बन्धे सत्त्वेऽपि स्ववृत्तिसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गतावत्त्वं-रूपद्वितीयसम्बन्धाभावान्न परस्परपदप्रयोगः ।

यत्र देवदत्तो यज्ञदत्तं नमति यज्ञदत्तश्च विष्णुमित्रं तत्र देवदत्तस्य यज्ञदत्ते स्वकर्तृकनमनकर्मत्वंसम्बन्धः तदीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वस्य तद्भिन्नत्वस्य स्ववृत्तिसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गतावत्त्वस्य च यज्ञदत्तस्य यः विष्णुमित्रे स्वकर्तृकनमनकर्मत्वरूपः सम्बन्धस्तत्र सत्त्वेऽपि स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वाभावान्न परस्परपदप्रयोगः ।

एवं यज्ञदत्तस्य विष्णुमित्रे यः स्वकर्तृकनमनकर्मत्वं सम्बन्धः तद्भिन्नत्वस्य स्ववृत्तिसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गतावत्त्वस्य स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वस्य सत्त्वेऽपि स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वस्य देवदत्तस्य यो यज्ञदत्ते स्वकर्तृकनमनकर्मत्वरूपः सम्बन्धस्तत्राभावान्न परस्परपदप्रयोगः । प्रकृते च स्वजनकस्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्व सम्बन्धाभ्यां एकारवैशिष्ट्यस्य इकारे सत्त्वेऽपि इकारवैशिष्ट्यस्यैकारेऽसत्त्वेन परस्परं वर्णवैशिष्ट्याभावान्न सावर्ण्यमिति एवं च परस्परं स्वविशिष्टे वर्णः स्वसवर्ण इत्यर्थे कौमुदीतात्पर्यम् वै० स्वजनकस्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्वसंबन्धाभ्यामित्यलम् ।

शेखरकृन्मते तु यावदास्यभवतुल्यत्वविवक्षणेन स्वजनकयावत्स्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्व सम्बन्धाभ्यां स्वविशिष्टो वर्णः स्वसवर्ण इति सूत्रार्थः एवंच एकारवैशिष्ट्यस्य इकारे द्वितीयसम्बन्धेन सत्त्वेऽपि आद्यसम्बन्धेनासत्त्वम् इकारवैशिष्ट्यस्य एकारे आद्यसम्बन्धेन सत्त्वेऽपि द्वितीयसम्बन्धेनासत्त्वमिति नैकारेकारयोः सावर्ण्यमित्यवधेयम् ।

ननु कस्मिंश्चिल्लक्ष्ये चरितार्थस्य शास्त्रस्य कस्मिंश्चिल्लक्ष्ये प्रवृत्त्यभाववारणाय उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते इति नियमोऽवश्यमभ्युपेयः स च न सम्भवति नाज्झलाविति निषेधविषये तुल्यास्यशास्त्रीयोद्देश्यतावच्छेदकसत्त्वेऽपि विधेयाभावादतः निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन विधिशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचात्संकुचितविधिशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये सत्त्वान्न नियमभङ्गप्रसङ्गः स च संकोचः किमाकारकः न तावदज्झल्भिन्नं तुल्यास्यप्रयत्नं सवर्ण मित्याकारकः अज्झल्भिन्नवर्णाभावेन तुल्यास्यसूत्रवैयर्थ्यापातादिति चेदत्र केचित् नाज्झलाविति सूत्रं अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णं हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं संवर्णमिति वाक्यद्वयं कृत्वा पूर्ववाक्येण हलां द्वितीयवाक्येनाचां सावर्ण्यमिति ।

वस्तुतस्तु एकवाक्यताकरणेच्छया वाक्यद्वयसंपादनस्य नन्वश्चतुर्थोऽऽव-

र्तनस्यचानुचितत्वेन वर्णविशिष्टो वर्णः स्वसवर्ण इत्यत्र नाज्झलाविति सूत्रतात्पर्यं बोध्यम् वै० स्वजनकयावत्स्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्व स्ववृत्ति यदाकाराजन्यतरहल्त्वर्णोभयवृत्तिद्वित्वभिन्नं द्वित्वं तद्वत्त्वैतत्त्रितय सम्बन्धेनेति न कश्चिदोषः नन्वेवं स्वस्य स्वेन सावर्ण्यानापत्तिं द्वित्ववत्त्वाभावादिति वाच्यम् तत्र सावर्ण्याभावे क्षत्यभावादित्यवधेयम् ।

अन्येतु वर्णविशिष्टोवर्णः स्वसवर्णः वै० च स्ववृत्त्यच्त्वाभावहल्त्वाभावान्यतरवत्त्व स्वव्याप्यत्व स्वव्यापकत्व त्रितयसम्बन्धेन व्याप्यतावच्छेदकः व्यापकतावच्छेदकश्च सम्बन्धो जनकता इति वदन्ति ।

केचित्तु परस्परं स्वविशिष्टो वर्णः स्वसवर्णः स्वजनकस्थानप्रयत्नजन्यत्व स्वाजनकस्थानप्रयत्नाजन्यत्व स्वविशिष्टत्वैतत्त्रितयसम्बन्धेन अत्र वैशिष्ट्यम् स्ववृत्त्यच्त्ववत्त्व स्ववृत्तिहल्त्ववत्त्वान्यतरसम्बन्धेनेति प्राहुः ॥

## पूर्वत्रासिद्धम् ४

अधिकारोयमिति । अस्याधिकारत्वाभावे त्रिपाद्यामप्रवृत्त्यापत्तौ त्रिपाद्यां पूर्वं प्रति परासिद्धत्वानापत्तिः ।

न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ बाधकाभाव इति वाच्यम् तथासति सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः ।

न च मध्ये पाठकरणाद् विप्रतिषेधसूत्रारम्भाच्च सपादसप्ताध्याय्यां नास्य प्रवृत्तिरिति वाच्यम् । विनिगमनाविरहेण त्रिपाद्यामेवाप्रवृत्तिकल्पनापत्तेरिति आधिकारशास्त्रत्वमास्थेयम् ।

ननु त्रिपाद्यामप्रवृत्तौ को दोष इति चेच्छृणु गोदुह्मत् इति स्थिते घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति न च परत्वान्नित्यत्वाच्च प्राप्तं जश्त्वं बाधित्वा निरवकाशत्वाद् घत्वे कृते परमपि जश्त्वं बाधित्वा निरवकाशत्वाद्भष्भावेनेष्टसिद्धिरिति वाच्यम् घत्वे कृते जत्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वं बाधित्वा प्राप्तं भष्भावं परत्वान्नित्यत्वाच्च बाधित्वानुनासिके भष्भावानापत्तेः ।

एतेन घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरित्यस्य घत्वजश्त्वानुनासिकेषु कृतेषु भष्भावानापत्तिरित्यर्थः घत्वजश्त्वानुनासिकेषु प्राप्तेषु भष्भावानापत्तिरित्यर्थो वा नाद्यः सिद्धान्तेऽपि घत्वजश्त्वानुनासिकेषु कृतेषु भष्भावस्यानिष्टत्वात् न द्वितीयः घत्वप्रवृत्तिवेलायामनुनासिकाप्राप्तेरितीदमसङ्गतमित्यपास्तम् । घत्वे कृते जश्त्वानुनासिकभषभावानां प्राप्तौ भष्भावं बाधित्वा परत्वाज्जश्त्वानुनासिकयोः सतोर्भष्भावानापत्तिरित्याशयात् ।

ननु भष्भावानापत्तिरिति न्यूनम् जश्त्वं बाधित्वा निरवकाशत्वाद् भष्भावः प्राप्तः तं बाधित्वा परत्वान्नित्यत्वाच्चानुनासिकः तमपरनिमित्तकत्वेन अन्तरङ्गत्वा-

द्बाधित्वा जश्त्वं तद् बाधित्वा भष्भावस्तमनुनासिक इति चक्रकापत्त्या जश्त्वानुनासिकभष्भावानां त्रयाणामप्यभावादिति चेदत्र केचित्-

भष्भावानापत्तिरित्यत्र भष्भावपदस्य जश्त्वानुनासिकयोरप्युपलक्षकतयाऽदोषादिति ।

अन्ये तु आपाद्यमानेऽर्थे न्यायानादरात् त्रयाणां मध्ये कस्याप्यनापत्तिकथनेऽपि क्षत्यभाव इति वदन्ति ।

यत्तु शेखरकृन्मते कार्यकालपक्षे यथोद्देशपक्षे वा त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्त्या अनुनासिकापेक्षया जश्त्वस्य प्राबल्याभावेन चक्रकानुत्थानमेवेति तन्न इदानीं त्रिपाद्यां पूर्वं प्रति परासिद्धत्वाभावेन कार्यकालपक्षे त्रिपादीशास्त्रैकवाक्यतापन्नाया अन्तरन्तपरिभाषायाः प्रवृत्तौ बाधकाभावात् ।

वस्तुतस्तु गोदुह्मत् इति स्थिते पदान्ते घत्वस्य जश्त्वापवादत्वाज्जश्त्वात्प्राग्घत्वम् ततोऽपवादत्वाज्जश्त्वं बाधित्वा भष्भावप्राप्तावपि समकालप्रवृत्तिकत्वेनानन्तरङ्गत्वेन भुदित्यादौ चरितार्थतया 'अपवादोऽपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यत' इति न्यायेन गोधुङ्मान् इत्यादौ भष्भावापेक्षया पूर्वोपस्थितनिमित्तकत्वेन अन्तरङ्गत्वाद् अनुनासिकापेक्षया च अपरनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वं जश्त्वं ततोऽनुनासिके भष्भावो न स्यादिति स्वरसत एव ग्रन्थोपपत्तिरिति न चक्रकप्रसङ्ग इति बोध्यम् ।

ननु विप्रतिषेधसूत्रे यथोद्देशपक्षाभ्युपगमेन त्रिपाद्यामप्रवृत्त्या, जश्त्वानुनासिकयोः शब्दान्तरप्राप्त्याऽनित्यत्वेन च भष्भावापेक्षया जश्त्वानुनासिकयोः प्राबल्याभावेन यथासंनिवेशं प्रवृत्तेर्न्याय्यतया पूर्वं भष्भावे ततो जश्त्वेऽनुनासिके च रूपसिद्धिः किं च दादेर्धातोर्घ इति गकारं विधातव्ये घकारविधानसामर्थ्येन पूर्वं भष्भावः तथा च नायं दोष इति चेन्न अधिकारत्वाभावे गोधुङ्मानित्यत्र प्रतिपदविधित्वेन झय इतिवत्वापत्तेरेव दोषत्वात् सिद्धान्ते तु घत्वस्यासिद्धत्वेन झयन्तत्वाभावान्न वत्वमित्यलम् ।

परे तु अस्याधिकारत्वाभावेऽपि न कश्चिद्दोषः तथा हि अस्य परिभाषात्वमभ्युपगम्य कार्यकालपक्षाङ्गीकारेण त्रिपाद्यां प्रवृत्तौ बाधकाभावः अधिकारत्वे प्रतिसूत्रमावृत्तौ गौरवं च न चैवं सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तिरिति वाच्यम् । मध्ये पाठकरणेन विप्रतिषेधसूत्रारम्भेण च सपादसप्ताध्याय्यां पूर्वं प्रति परासिद्धत्वाभावकल्पनात् ।

न च विनिगमनाविरहात् त्रिपाद्यामेव पूर्वं प्रति परासिद्धत्वाभावकल्पनापत्तिरिति वाच्यम् 'न मु ने' इति सूत्रारम्भस्य 'श्रुत्वं धुटि सिद्धं वाच्यम्' इति वार्तिकारम्भस्य च विनिगमकस्य सत्त्वात् न चाधिकारत्वेन 'दादेर्धातोर्घ' इत्याद्येकवाक्यतापन्नपूर्वत्रासिद्धमित्येतद्घटकपूर्वपदार्थे 'होढ' इत्याद्युत्स-

गशास्त्रातिरक्तत्वेन संकोचो भवति अस्य परिभाषात्वे स न भवेदिति वाच्यम् 'असिद्धं वहिरङ्गमन्तरङ्ग' इति परिभाषायां वहिरङ्गपदार्थेऽपवादभिन्नत्वेन संकोचस्यैव प्रकृतेऽपि सम्भवादित्याहुः ।

ननु पूर्वत्रासिद्धमित्यनेन प्राचीनाभिमतं कार्यासिद्धत्वमेवास्थीयतां किमिति शास्त्रासिद्धत्वमास्थीयते इति चेन्न कार्यासिद्धत्वाङ्गीकारे मनोरथ इत्यादौ उत्वलोपयोः प्राप्तौ परत्वाल्लोपे रोरभावेन उत्वानापत्तेः मम तु लोपशास्त्रस्यैवासिद्धत्वेन न लोप इति रोः सत्त्वादुत्वसिद्धिरिति वोध्यम् ।

अयं भावः शास्त्रेण आदेशप्रसक्तिबुद्धिः स्थानिनिवृत्तिबुद्धिश्चेति कार्यद्वयं क्रियते तत्र आद्या शाब्दी द्वितीया तु आर्थी तत्र शास्त्रासिद्धत्वे शास्त्रस्यैवाप्रवृत्तया उभयविधाऽपि वुद्धिर्निवर्तते कार्यासिद्धत्वे तु आदेशप्रसक्तिबुद्धेर्निवर्तनेऽपि स्थानिनिवृत्तिबुद्धेर्निवर्तनासम्भवेन स्थानिभूतरुवुद्धेरभावान्नोत्वमिति ।

न च मया अप्रवर्तमानकार्यस्यैवासिद्धत्वं वोध्यते इति नायं दोष इति वाच्यम् सिद्धे असिद्धत्वस्यारोपरूपतया निरधिष्ठानारोपासम्भवेन लक्ष्ये कार्यप्रवृत्तेरावश्यकतया शास्त्रप्रवृत्तिवेलायामेव कार्यस्यासिद्धत्वप्रतिपादनासम्भवात् ।

ननु रोरीति कृतस्य रेफकर्मकदर्शनाभावरूपलोपस्य अभावरूपासिद्धत्त्वे वोधिते अभावाभावस्य प्रतियोगिरूपत्वेन रेफकर्मकदर्शनसत्त्वेन हशिचेत्युत्वे मनोरथ इत्यस्य सिद्ध्यां कार्यासिद्धत्वपक्षे वाधकाभाव इति चेन्न—

अद अ औ अदश्र अस् इति स्थिते परत्वान्मुत्वे जाते पूर्वत्रासिद्धमित्यनेनासिद्धत्वेऽपि स्थानिनिवृतिबुद्धेरसिद्धत्वाभावेन अतोऽभावादतोगुण इति पररूपानापत्त्या अमू अमी इत्यनयोरसिद्ध्यापत्तेः ।

ननु अद अ औ इत्यत्र मुत्वस्यासिद्धत्वे मु इत्यस्य व्यवधायकत्वाभावेन अदःशब्दाद्याकारेण अकारस्य पररूपं स्यादेव अत एव इमं मे गङ्गे यमुने इत्यत्र गङ्गे इत्यस्याविद्यमानवत्त्वेन मे शब्दमाश्रित्यैव यमुने इत्यस्य निघातसिद्धिरन्यथा पदादव्यवहितपरत्वस्याभावेन निघातो न स्यात् न च मुत्वस्यासिद्धत्वेऽपि सार्द्धमात्राकालव्यवायात् स्वाभाविकार्धमात्राकालव्यवायरूपसंहिताया अभावेन मुत्वे कृते न पररूपापतिरिति वाच्यम् सार्धमात्राकालेऽर्धमात्राकालत्वस्याप्यतिदेष्टुं शक्यत्वादिति चेन्न—

तादृशपररूपस्यानिष्टत्वेन अमू अमी इत्यसिद्धेस्तादवस्थ्यात् ।

न च कार्यासिद्धत्वपक्षेऽपि अचः परस्मिन्नितिवत् त्रैपादिकं शास्त्रं न प्रवृत्तं स्थानी न निवृत्त इति संभावनायां यत्प्राप्तं तद् भवति यन्न प्राप्तं तन्न भवतीति तात्पर्यार्थस्वीकारेण परत्वान्मुत्वे कृतेऽपि मुशब्दे दवुद्ध्या पररूपे 'सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय' इति न्यायेन मकारस्यापि निवृत्तौ अद औ इति स्थिते लक्ष्ये लक्षणन्यायेन मुत्वाप्राप्त्या वृद्धौ मुत्वे

अमू अमी इत्यनयोः सिद्धिः लक्ष्ये लक्षणन्यायस्य तु न प्राप्तिःस्वघटकमात्रोद्दे-श्यकविकाराघटितत्वेन तल्लक्ष्यत्वाभावादिति वाच्यम्

अमूभ्याममूदृक्इत्यनयोरसिद्ध्यापत्तितादवस्थ्यात् अत्र हि पूर्वमुत्वे तस्या-सिद्धत्वादीर्घे स्वघटकमात्रोद्देश्यकविकारघटिततया तल्लक्ष्यत्वात्पुनर्मुत्वाप्राप्ते-रित्यलम् ।

के चित्तु 'न मु ने' इति लिङ्गेन लक्ष्ये लक्षणन्यायस्य मुत्वविषयेऽप्रवृत्ति-कल्पनात्पुनर्मुत्वे अमूभ्यामित्यादेः सिद्ध्या कार्यासिद्धत्वपक्षाङ्गीकारेऽपि न काचित्क्षतिः अन्यथा अद् अ औ इति स्थिते परत्वान्मुत्वे तस्यासिद्धत्वात् पररूपे संनियोगशिष्टन्यायेन मकारस्य निवृत्तौ तल्लक्ष्यत्वात्पुनर्मुत्वाप्रवृत्तौ इनादेशगुण-योर्नादेशाप्राप्त्या नमुने इत्यस्य वैयर्थ्यापत्तिः स्पष्टैव । न च अद् अ अस् इति स्थिते मुत्वे दकारपरेकाराभावेन एतईदिति सूत्रं व्यर्थं सत् शास्त्रासिद्धत्वज्ञाप-कमिति शब्दरत्नकृदुक्तं युक्तमिति वाच्यम् एत ईदित्यस्य उपसंजनिष्यमाणन्या-येन मुत्वापवादतया यद्यत्र मुत्वं न स्यात्तर्हि पररूपादौ कृते मीत्वं स्यादिति सम्भावनया भविष्यदपवादविषयातिरिक्तत्वेन मुत्वशास्त्रे सङ्कोचात्तस्य पूर्वम-प्रवृत्त्या शीभावे गुणे मीत्वसिद्धये तस्य चारितार्थ्येन शास्त्रासिद्धत्वपक्षज्ञाप-कत्वासम्भवादिति वदन्ति ।

वस्तुतस्तु सम्भावनाघटिततात्पर्यार्थकल्पने मानाभावः फलाभावो गौरवं च उकारेऽकारबुद्ध्या पररूपेऽपि पूर्वस्य मकारस्य स्थितौ अचः परस्मिन्नि-ति स्थानिवद्भावेन ऐनेय इति वन्मकारनिवृत्त्यभावेन वृद्धौ अदः शब्दसम्बन्धि-दकाराभावेन मुत्वाप्रवृत्त्या अमौ इत्यापत्तेश्चेति शास्त्रासिद्धत्वपक्ष एव श्रेया-निति बोध्यम् ।

ननु पूर्वत्र इत्येव सूत्रमस्तु आमन्त्रितं पूर्वमविद्यमानवदित्यतः अविद्यमा-नवदित्यनुवर्तते पूर्वत्रोत्वे कर्तव्ये रोरीति लोपस्याविद्यमानवत्त्वेन मनोरथ इत्या-देः सिद्ध्याऽसिद्धग्रहणं व्यर्थमिति चेन्न ।

दीर्घात्पूर्वं नलोपे जाते ततो दीर्घे कर्तव्ये कुलालस्याविद्यमानवत्त्वेऽपि तत्कृतकार्यस्य विद्यमानत्ववत् नलोपशास्त्रस्याविद्यमानवत्त्वेऽपि तत्कृतकार्य-स्याविद्यमानवत्त्वाभावात् गोमानित्यस्यासिद्ध्यापत्तेरिति दिक् ।

## अणुदित्सवर्णस्य चाप्रत्ययः ९.

अण् सवर्णान् गृह्णाति इत्यर्थात् इगादिप्रत्याहारे ककारादिरूपचिह्नेन प्रत्याहारसूत्रस्थोऽयमिति प्रत्यभिज्ञासत्त्वात् इकारेण दीर्घादीनां ग्रहणेऽपि उका-रादीनामनुच्चरितत्वेन प्रत्यायकत्वासम्भवात् दीर्घोकारादीनां ग्रहणं न भवि-ष्यतीति स्ववाच्यवाच्ये लक्षणया दीर्घादीनां ग्रहणम् एवमस्यचावित्यत्रापीति, लक्ष्यतावच्छेदकज्ञानाय चाणुदित्सूत्रमिति मनोरमाकाराः ।

शेखरकारास्तु झलादिभिः सर्वझकारादीनां ग्रहणाय जातिपक्षस्यावश्यमङ्गीकर्तव्यतया तत एव प्रत्याहारघटकद्वितीयावर्णैरस्यच्वावित्यत्राकारादिभिश्च दीर्घादीनां ग्रहणसिद्धौ लक्षणाया अणुदित्सूत्रस्य वा न कश्चिदुपयोग इति व्यवस्थापयन्ति ।

गुरुचरणास्तु भाष्यकृता अस्यच्वावित्यत्र झलादिप्रत्याहारे च सवर्णग्रहणाभावमाशङ्क्य जातिपक्षस्याभ्युपगमेऽपि प्रत्याहारघटकद्वितीयादिवर्णेषु शङ्कासमाधानयोरकरणेन अन्यादृश एव सूत्रार्थः प्रतीयते स च न तावदण् सवर्णान्गृह्णातीति । उच्चारितस्यैव प्रत्यायकतया इक्पदबोध्योकारादिभिः सवर्णग्रहणाभावप्रसङ्गात् ।

नापि अण्बोधकं पदं स्वसवर्णग्रहकमति अण् इक् इत्यादेः सवर्णाप्रसिद्धयोक्तदोषतादवस्थ्यात् ।

नापि अण्बोधकं पदं स्वबोध्यसवर्णान्गृह्णातीति अण्बोधकाशादिपदानामपि स्वबोध्यजकारादिसवर्णग्राहकत्वापत्तेः ।

न च अण्बोधकं पदं स्वबोध्याण् सवर्णान्गृह्णातीत्यर्थान्न कश्चिद् दोष इति वाच्यम् । ह्रस्वादिपदानामपि स्वसवर्णग्राहकत्वापत्तेः अण्मात्रबोधकं पदं स्वबोध्यसवर्णग्राहकमित्यर्थमङ्गीकृत्य ह्रस्वादिपदानां वर्णसमाम्नायस्थाणितरलक्ष्यस्थाकारबोधकतया सवर्णग्रहणवारणेऽपि अशादिपदानामपि स्वबोध्याण्सवर्णग्राहकत्वानापत्तेरिति चेदुच्यते—
अण् घटितं यदण्समभिव्याहृतानुबन्धेतरवर्णाघटितं पदं तत्स्वबोध्याण्सवर्णग्राहकं भवतीति न च ऊकालसूत्रीयशेखरविरोधः इदम् इशित्यत्र सवर्णग्रहणशङ्कापरभाष्यविरोधश्चेति वाच्यम् शेखरस्य चिन्तनीयत्वेन भाष्यस्य चैकदेश्युक्तित्वेनादोषात् तयोः समर्थनायार्थान्तराश्रयणे तु अस्यच्वावित्यत्र सवर्णग्रहणाभावाशङ्का भाष्योक्ताऽसङ्गता स्यादित्याहुः ।

केचित्तु अण्वृत्तिवर्णत्वविशिष्टधर्मवद्वर्णविशिष्टं पदं स्वबोध्याण्सवर्णग्राहकमित्यर्थेन सकलदोषपरिहार इति वर्णत्ववैशिष्ट्यं धर्मे स्वभिन्नत्व स्वव्याप्यत्वसम्बन्धाभ्यां वर्णवैशिष्ट्यं पदे स्वनिष्ठावयवतानिरूपकत्व स्वाघटितवर्णद्वयारब्धसमुदायाघटितत्वोभयसम्बन्धेन तथाहि अण्वृत्तिर्वर्णत्वव्याप्यो धर्म इत्वं तद्वान् इकारः तन्निष्ठावयवतानिरूपकत्वं तदघटितवर्णद्वयारब्धसमुदायाघटितत्वं च इगादिपदस्येति भवति तस्य सवर्णग्राहकत्वम् अकारादौ च व्यपदेशिवद्भावेन प्रथमसम्बन्धसत्तोपपादनीया ह्रस्वधिपदादौ च नातिव्याप्तिर्द्वितीयसम्बन्धाभावादिति वदन्ति ।

## अप्रत्ययः

'प्रतीयते विधीयत' इति प्रत्यय इति व्युत्पत्त्या प्रत्ययपदं विधीयमानपरं ततश्च अविधीयमानोऽण् सवर्णग्राहक उदिच्च सवर्णग्राहक इत्यर्थो लभ्यते इति

अणुग्रहणप्रत्याख्यानपक्षे च अप्रत्यय इति जातिपक्षेण प्राप्तसवर्णग्रहणनिषेधकमिति, अप्रत्ययग्रहणमेव च भाव्यमानपरिभाषारूपमिति च कौमुदीकाराः ।

शेखरकृतस्तु प्रतिपूर्वकेणूधातोर्ज्ञानार्थकत्वस्य दर्शनेऽपि विधीयमानार्थकत्वस्यादर्शनात् कृत्रिमाकृत्रिमयोरिति न्यायाच्च सूत्रे प्रत्ययपदं प्रत्ययसंज्ञकपरमित्यभिप्रेत्य अप्रत्ययपदमेकदेशानुमत्या भाव्यमानपरिभाषां ज्ञापयति अन्यथा आगमादेशयोः प्रकारान्तरेण सवर्णग्रहण वारणवत्प्रत्ययेऽपि सवर्णग्रहणवारणसम्भवे तद्वैयर्थ्यं स्पष्टमेव अत एव इडादौ सवर्णग्रहणवारणाय टित्किन्मित्सूपसंख्यानमिति वार्तिककृता वार्तिकमारब्धम् प्रत्ययपदस्य विधीयमानार्थकत्वेऽप्रत्यय इत्यनेनैव तद्वारणसम्भवे वार्तिकमनर्थकं स्यात् भाष्यकृता च अप्रत्ययग्रहणमेतज्ज्ञापकमित्युक्तं विधीयमानार्थकत्वे ज्ञापकमितिकथनमसङ्गतं स्यात् ज्यादादीयस इति सूत्रभाष्ये 'किमर्थमादित्युच्यते 'ज्याद' इत्येवोच्यतां का रूपसिद्धिः आन्तर्यतो दीर्घस्य दीर्घो भविष्यति एवं तर्हीदमेवज्ञापयति भवत्येषा परिभाषा भाव्यमानेन' इत्युक्त्यापि ध्वनितमेतत् त्वद्रीत्या पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिरित्याहुः ।

केचित्तु कृत्रिमन्यायेन अप्रत्ययपदस्य प्रत्ययभिन्नार्थकत्वाभिमानेन प्रवृत्तवार्तिकप्रत्याख्यानाय अप्रत्ययग्रहणं परिभाषां ज्ञापयतीति भाष्यकृता उक्तम् तत्र च ज्ञापयतीत्यस्य बोधयतीत्यर्थः एवं च अप्रत्ययग्रहणं विधीयमानभिन्नबोधकं प्रत्ययपदं विधीयमानार्थकमिति यावत् । एवं 'ज्यादादीयस' इति सूत्रस्थभाष्यीयपूर्वपक्षोऽपि प्रत्ययपदस्य कृत्रिमन्यायेन प्रत्ययपरत्वमभ्युपेत्य, सिद्धान्तस्य तु प्रत्ययपदस्य विधीयमानर्थकत्वमित्यत्रैव तात्पर्यम् अन्यथा अप्रत्ययपदस्य परिभाषाज्ञापकत्वे स्वांशे चारितार्थ्यं दुर्निरूपं स्यादिति वदन्ति ।

## स्थानिवदादेशोऽनल्विधौ ६

स्थानिना तुल्यं स्थानिवत्, सादृश्ये वतिः तत्र प्रतियोगितया स्थानिपदार्थस्यान्वयः सादृश्यस्य च स्वरूपेणादेशेऽन्वयः तथा च स्थानिप्रतियोगिकसादृश्यवानादेशो भवति इत्यर्थः अलां विधिरल्विधिरत्र षष्ठ्यर्थस्ववृत्तिधर्मावच्छिन्नोद्देश्यताकत्वसम्बन्धेनाल्पदार्थस्य विधावन्वयः अल् च स्थान्यवयव एव गृह्यते संनिहितत्वात् तथा च स्थान्यवयवाल्वृत्तिधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यर्थो लभ्यते ।

ननु सूत्रे आदेश एव संनिहितो न तु स्थानी इति कथं स्थान्यवयव एवगृह्यते नादेशावयव इति चेन्न यथाऽग्निहोत्रं जुहोति यवागूं पचतीत्यत्र पाठक्रमेणाग्निहोत्रहोमः प्रथमं प्राप्तोपि अर्थक्रमेण यवागूपाकानन्तरं क्रियते तथेहापि अर्थक्रमसंनिधानस्यापेक्षितत्वेन आदेशः स्थानिवदित्यर्थक्रमे स्थानिन एव संनिधानात् पाठक्रमादर्थक्रमस्य बलीयस्त्वात् ।

सुध्युपास्य इत्यत्र द्वित्वे कर्तव्ये स्थानिवत्त्वनिषेधः अनल्विधावित्यस्य प्रयोजनम् ।

ननु स्थानिवत्सूत्रे आदेशग्रहणं व्यर्थं पितृवत्पण्डित इत्युक्तौ सम्बन्धिशब्दमहिम्ना पुत्रलाभवत् स्थानिवदित्युक्तौ आदेशस्यापि लाभसम्भवादिति चेन्न आदेशपदमानुमानिकस्थान्यादेशभावस्यापि संग्रहार्थम् इति सार्थक्यात् तेन देवदत्तः पचतु इत्यत्र तिङ्ङतिङः इति निघातसिद्धिः ।

नन्वत्र प्राग्दीव्यतोण् इति विकृतनिर्देशज्ञापितया एकदेशविकृतपरिभाषया निस्तारसम्भवे नेदमादेशग्रहणप्रयोजनम्—

एकदेशविकृतत्वं च प्रकृतिविशिष्टत्वम् वै० च स्वघटकोद्देश्यकविकारेतरयावद्घटितत्व स्वघटकोद्देश्यकविकारघटितत्व स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन अत्र वैशिष्ट्यं च स्वाघटकत्व स्वघटकमात्रोद्देश्यकविकारेतरत्व सम्बन्धाभ्यां निर्जरघटकरेफमात्रस्य जराशब्दत्ववारणायाद्यः तत्रैव रेफान्तस्य तत्त्ववारणाय द्वितीयः निर्जर इति रामाविति समुदायस्य च तत्त्ववारणाय तृतीयः राम् इति मान्तस्य तत्त्वसिद्धये सम्बन्धघटक आद्यः दीर्घेकारघटितवीवधशब्दे विभाषाविवधावीवधेत्यस्य प्रवृत्त्यर्थं द्वितीयः अन्यथा स्वाघटकत्वसम्बन्धेन स्वविशिष्टदीर्घेकारघटितत्वेन तन्न स्यात् एवं च पचतु इत्यत्र तिङ्त्वातिदेशो न्यायेनैव सिद्ध इति चेन्न—

अर्धस्यान्यथात्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन प्रकृते तन्न्यायाप्रवृत्तेः

न च पचतिवृत्तितिङन्ततदादित्वं पचतु इत्यत्र न्यायेनादिश्यतामिति वाच्यम् यदीयार्द्धस्यान्यथात्वं तदर्द्धवृत्तिधर्मघटितधर्मस्याप्यनेनानतिदेशात् ।

ननु भूयोऽवयवदर्शनं न जातिव्यञ्जकमंशुकसंवृतकलेवरस्य वैरूप्यं गतस्य शुनः आननमात्रदर्शनेन श्वत्वजातेर्व्यञ्जनात् प्रकृते तेरिकारस्योकारेणाच्छादनेऽपि अपिवज्जलमित्यत्र तकारमात्रेण संख्याकारकाद्यवगमात् तकारमात्रेण तित्वजातेर्व्यञ्जनस्य दर्शनेन तुशब्देऽपि तेनैव तित्वजातिव्यक्तिर्भविष्यतीति चेन्न

तिङ्संज्ञाया तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणेऽस्य न्यायस्याप्रवृत्तेः ।

परिच्छिन्नपरिमाणत्वं च संख्यात्वपरिमाणत्वान्यतरव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयविशिष्टत्वम् वैशिष्ट्यं च स्वघटितत्व स्वसमनियतत्वान्यतरसम्बन्धेन द्व्यच्त्वादेरेकत्वादिप्रकारकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयीभूतद्वित्वादिघटितत्वात् जरात्वादेश्च तादृशचतुष्ट्वादिसमनियतत्वातत्त्वमिति बोध्यम् ।

न चैवं दीव्यतिशब्दत्वस्यापि परिच्छिन्नपरिमाणतया दीव्यच्छब्दे नातिदेशः स्यादिति वाच्यम् दीव्यतिशब्दनिष्ठबोधजनकत्वस्यैव तत्रातिदेशेन तस्य निरू-

क्तपरिच्छिन्नपरिमाणत्वाभावेनेष्टसिद्धेः प्रकृते तु परिच्छिन्नपरिमाणत्वात्तिङ्त्वातिदेशो न स्यादतः आदेशग्रहणमानुमानिकादेशसंग्रहार्थमावश्यकमित्यलम् ।

ननु गुराः स्थाने याज्यकुलानि व्रजतां शिष्याणामग्रासनादिप्रभृतिलाभदृष्टान्तमूलकेन 'तस्थानापन्नस्तद्धर्मं लभत' इति न्यायेन निर्वाहे स्थानिवत्सूत्रं किमर्थमिति चेन्न--

लौकिकस्थान्यादेशापेक्षया शास्त्रीयस्थान्यादेशभावस्य वैलक्षण्यात् यो हि यत्कार्यार्थं लोके नियुज्यते स तत्कार्यं कृत्वा निवर्तते न तु तदितरदपि नहि याजनार्थं नियुक्तः शिष्यो गुरुकर्तव्यमुच्छिष्टदानादि कर्तुं प्रभवति शास्त्रे तु स्थान्यर्थमवबोधयितुमनुशिष्ट आदेशः स्थानिकर्तव्यं कार्यकदम्बकं करोतीति वैषम्यम् तच्चान्तरेण शास्त्रं न सम्भवति, किं च स्वंरूपमितिशास्त्रबलेन शास्त्रे स्वरूपाश्रितकार्यस्य दर्शनेन 'आङो यमहन' इत्यात्मनेपदं वधादेशे कृते न स्यादतः सूत्रस्यावश्यकत्वम् ।

न चाङोयमहनवध इति न्यासेन आवधिष्टेत्यस्य सिद्ध्या सूत्रं व्यर्थमिति वाच्यम् हिंसार्थकवधधातोर्ण्याङ्पूर्वादात्मनेपदप्रसङ्गात् हनो वधः हनवध इति समासे निरुक्तदोषवारणेऽपि 'आहते' इत्यत्रात्मनेपदाभावप्रसङ्गात् आङो यमहनहनवध इति न्यासेनात्र दोषाभावेऽपि निर्जरशब्दे जरसादेशानापत्तेः एकदेशविकृतन्यायेन तु न निर्वाहः परिच्छिन्नपरिमाणतया तदप्रवृत्तेः तस्मात्सकलं सूत्रं कर्तव्यमेवेति बोध्यम् ।

ननु 'युष्मदस्मदोरनादेश' इति सूत्रेऽनादेशग्रहणसामर्थ्येन आदेशः स्थानिवद्भवति इति कल्प्यताम् एवमदोजग्धिर्ल्यप्तिकितीति सूत्रे ल्यब्ग्रहणसामर्थ्यादल्विधौ स्थानिवन्न भवतीति कल्प्यताम् एवं च स्थानिवत्सूत्रं व्यर्थम् इत्युक्तं भाष्ये ।

नचात्रानादेशग्रहणाभावे युष्मभ्यमित्यत्र तत्स्थानापन्न इति न्यायेन विभक्तित्वातिदेशे आदेशवारणायानादेशग्रहणस्य चरितार्थ्येन नोक्तार्थज्ञापकत्वसम्भव इति वाच्यम् विभक्तिश्चेतिसूत्रे स्वंरूपमित्यस्यानुपस्थितावपि स्वौजसमौडितिसूत्रीयस्वादिपदे स्वंरूपमित्यस्योपस्थितौ स्वादिप्रत्ययस्वरूपस्यानेनातिदेशाभावात् उक्तार्थज्ञापकत्वसंभवात् ।

अन्ये तु अचः परस्मिन्नित्यत्रानुवृत्त्यर्थं स्थानिवदादेश इत्यस्यावश्यकत्वेनानल्विधावित्यस्य ज्ञापकसिद्धं न सर्वत्रेति ज्ञापनद्वारा चरितार्थ्यात् तेन करस्य करभो वहिरिति सिद्धमन्यथा वहिर्योगे पञ्चमी ज्ञापनेन तन्न स्यादित्याहुः ।

नन्वसंयोगाल्लिट्किदित्यत्र विनापि वतिं वत्यर्थलाभः तथा प्रकृतेऽपि वत्यर्थलाभो भविष्यति वद्ग्रहणं किमर्थम् ।

न च वद्ग्रहणाभावे स्थानी आदेशं प्रतिपद्यत इत्यर्थः स्यादिति वा-

च्यम् तत्तदादेशविधायकशास्त्रवैयर्थ्यापत्तेः आदेशः स्थानिरूपं प्रतिपद्यत इत्यर्थोऽपि वक्तुमशक्यः आदेशः स्थानी चक्षिङः ख्याञ् इति वचनद्वयप्रामाण्याद्विकल्पसंभवे वालिटीति सूत्रवैयर्थ्यापातात् ।

न च वचनद्वयप्रामाण्यात्सर्वत्रविकल्पापत्तौ लिटचेववेति नियमार्थं तदिति वाच्यम् विभाषालुङ्लृङोरित्याद्यप्राप्तविभाषासु वा ग्रहणस्य वैयर्थ्यापत्तेः अस्तिभूभ्यां रूपद्वयसिद्धावस्तेर्भूः इत्यस्य वैयर्थ्यापत्तेश्चेति चेन्न—

स्थानी आदेशस्य संज्ञेत्यर्थापत्तौ आङो यमहन इत्यात्मनेपदं वधेरेव स्यान्न तु हन्तेः स्वंरूपमित्यनेन तु हन्तेर्ग्रहणं वक्तुमशक्यमशब्दसंज्ञेति निषेधात् नचाङोवधियम इति न्यासे न निर्वाहः वध हिंसायामिति भौवादिकस्य ग्रहणापत्तेः ।

नचाङोवधयम इत्युच्यमानेऽकारस्याविवक्षितत्वान्न वधेर्ग्रणमिति वाच्यम् सकलहन्त्यादेशसंग्रहायाङोयमहन इत्यस्यैव वक्तव्यत्वात् अन्यथाऽऽजघ्न इत्यत्र हन्तेर्लिटि प्रतिपदोक्तत्वात् लिटिधातोरिति द्वित्वेऽभ्यासस्य चुत्वेऽभ्यासात्परस्य घत्वे वधादेशाभावेनात्मनेपदानापत्तेः आदेशः स्थानिनः संज्ञेत्यर्थेऽपि अस्यतिवक्तीत्यत्र कृत्रिमत्वात् ख्यातेः सार्वधातुकमात्रविषयत्वाच्च चक्षिङो ग्रहणे समचक्षिष्टेत्यत्राङापत्तेः अख्यतेत्यत्र तदनापत्तेश्च ।

न च चक्षिङः इत्येवब्रूयादनुबन्धनिर्देशेनापि यङ्लुकि वारणसम्भवे ख्यातिसामर्थ्यान्नोक्तस्थले दोष इति वाच्यम् गाङ्कुटादिसूत्रे गाङेङ्गाङोर्ग्रहणापत्तेः गमेरिडित्यत्रेणिङिकामेव ग्रहणापत्तेश्चातो वद्ग्रहणम् कृतम् ।

ननु अनल्विधावित्यस्य कोऽर्थः स्थान्यवयवाल्वृत्तिधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदिति चेत्तर्हि रामायेत्यत्र दीर्घानापत्तिः स्थान्यवयवाल्वृत्तिसुप्त्वधर्मावच्छिन्नोद्देश्यताकत्वाद् दीर्घविधेः ।

न च कष्टायेति निर्देशेनस्थान्यवयवाल्मात्रवृत्तीत्याद्यर्थेन निर्वाहः सुध्युपास्य इत्यत्र द्वित्वानापत्तेः अच्त्वस्येकारमात्रवृत्तित्वाभावेनानल्विधावित्यस्याप्रवृत्तेः ।

न च स्थान्यवयवाल्वृत्तिरल्मात्रवृत्तिर्योधर्मस्तदवच्छिन्नोद्देश्यताके विधौ नस्थानिवदित्यर्थान्न दोष इति वाच्यम् वल्त्वस्य तथात्वेऽपि वलादित्वस्याल्मात्रवृत्तिधर्मत्वाभावेन तदवच्छिन्नोद्देश्यताके इड्विधौ निषेधाप्रवृत्या प्रदीव्येत्यत्र वलाद्यार्धधातुकत्वमादायेडापत्तेः—

ननु स्थान्यवयवाल्वृत्तिरल्मात्रवृत्तिर्योधर्मस्तद्धर्मघटितधर्मावच्छिन्ननिमित्तताके विधौ न स्थानिवदित्यर्थान्न दोषः अल्मात्रवृत्तित्वं च अल्वृत्तित्वे सति अलितरावृत्तित्वम् ।

न च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकप्रत्येकवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्यानङ्गीकारेणालितरत्वेन भ्यामादेरग्रहणात् सुप्त्वस्याल्मात्रवृत्तित्वेन स्थानिवत्त्वाभावे रामायेत्यत्र दीर्घानापत्तिरिति वाच्यम् अल्त्वप्रतियो-

गिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्यैव तत्त्वेन सुप्त्वस्य भ्याम्स्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वेनादोषात्

न चैकारादिवृत्त्यल्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्यापि सुप्त्वे सत्त्वेनापत्तिस्तदवस्थैवेति वाच्यम् अल्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तियोगित्वाभाववत्त्वस्यैव तत्त्वेन सुप्त्वस्यातथात्वेनादोषात् अल्मात्रवृत्तित्वमपहाय अल्त्वव्याप्यत्वनिवेशेनादोषाच्चेति चेन्न—

स्थान्यवयवाल्वृत्तिः अल्मात्रवृत्तिर्योधर्मस्तद्धर्मघटितो यो धर्मस्तन्निमित्तके विधौ न स्थानिवदित्यर्थकरणेऽपि बभूविथेत्यत्रेड्विधेस्तादृशवलादित्वधर्मनिमित्तकत्वेन स्थानिवत्त्वनिषेधे आर्धधातुकत्त्वाभावेनेडभावप्रसङ्गात् ।

न च तदर्थं स्थान्यवयवाल्वृत्तिः अल्मात्रवृत्तिरादेशावयवालवृत्तिश्च यो धर्म इत्याद्यर्थकरणेन वल्त्वस्य आदेशावयवथकारवृत्तित्वेन आदेशावयवालवृत्तित्वाभावेनोदासीन एव धर्मस्तादृशो न वलादित्वमित्यदोष इति वाच्यम् बभूवतुरित्यत्रेट्प्रसङ्गात् ।

ननु तदर्थं स्थान्यवयवाल्वृत्तिः अल्मात्रवृत्तिरादेशाद्यवयवालवृत्तिश्च योधर्म इत्याद्यर्थान्न दोष न चैवं सति द्यौः पन्था इत्यत्र हल्ङ्यावितिसुलोपापत्तिः दिव्इत्यस्य द्यौ इत्यादेशः पथिन् इत्यस्य पन्था इत्यादेश इत्यानुमानिकस्थान्यादेशभावेन हल्त्वादेरादेशाद्यल्वृत्तित्वेनोक्तनिषेधाप्रवृत्तेरिति वाच्यम् अनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य त्यागाभावेनानल्विधाविति निषेधेन हलन्तत्वस्यातिदेष्टुमशक्यत्वादिति चेन्न—

अस्तेः क्विपि भूरादेशे भूः किमः कादेशे क इत्यत्र च स्थानिवृत्तिहलन्तत्वातिदेशेन हल्ङ्यावित्ति सुलोपापत्तेः हल्त्वस्यादेशाद्यल्वृत्तित्वेनानल्विधावितिनिषेधाप्रवृत्तेः इति चेदुच्यते—

स्थान्यवयवाल्वृत्तिरल्त्वव्याप्यो यो धर्मस्तद्धर्मघटितो योतिदिदिक्षितो धर्मस्तन्निमित्तके विधौ न स्थानिवदित्यस्य निर्दुष्टत्वात् बभूविथेत्यत्र वलादित्वस्य स्वतः सिद्धेः सिद्धेरिच्छांप्रति प्रतिबन्धकत्वात् आर्धधातुकत्वस्य चातथात्वान्न दोषः बभूवतुरित्यत्र वलादित्वस्यैवातिदिदिक्षितत्वान्न स्थानिवत्त्वमिति प्राचीना वदन्ति ।

केचित्तु स्थानिसम्बन्ध्यल्विशिष्टाल्त्वव्याप्यधर्मघटितधर्माश्रये विधौ न स्थानिवदित्यर्थः। वैशिष्ट्यं च स्ववृत्तित्व स्वविशिष्टाल्वृत्तित्व सम्बन्धाभ्यां अत्र वैशिष्ट्यं च स्वसजातीयत्व स्वघटितस्थानिकावयवत्व सम्बन्धाभ्याम् सजातीयत्वं च प्रथमत्वद्वितीयत्वतृतीयत्वादिना भूरित्यादौ सकारघटितास्स्थानिकावयवत्वस्य

भकारे सत्त्वेऽपि द्वितीयत्वधर्मेण सकारसजातीयत्वाभावेन स्वविशिष्टाल्पदेन भकारस्याग्रहणेन हल्त्वस्य तादृशालवृत्तित्व द्वितीयसम्बन्धेन अल्वैशिष्ट्यस्यहल्त्वेऽसत्त्वेन न दोषः बभूवतुरित्यत्रप्रथमत्वधर्मेण स्थानिसंबन्ध्यल्तस्घटकत-काररूपाल्सजातीयत्वाभावाद्वल्त्वस्य स्थानिसंबन्ध्यल्विशिष्टत्वेनादोषः बभूविथेत्यत्र तु स्थानिसम्बन्ध्यल्सिव्घटकसकारवैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन थकारे सत्वेन वल्त्वस्य तद्वृत्तित्त्वेन स्थानिवद्भावनिषेधाभावः स्थान्यादेशौ च श्रौतौ ग्राह्यौ तेन द्यौः पन्था इत्यादौ हल्त्वस्यानुमानिकस्थान्यादेशभावमादाय स्थानिसम्बन्ध्यल्दिव्घटकदकाररूपाल्विशिष्टे द्यौशब्दघटकदकारे पथिन्शब्दघटकपकारविशिष्टपन्थाघटकपकारे च सत्त्वेऽपि न स्थानिवत्त्वेन हलन्तत्वातिदेश इत्याहुः ।

तन्न यूष्णेत्यादावदन्तत्वमादाय इनादेशापत्तेः तत्रात्वस्य यूषशब्दावयवाकाररूपाल्विशिष्टत्वाभावात् स्थानिसम्बन्ध्यल्वैशिष्ट्यस्य यूषन्घटकषकारोत्तराकारे सत्त्वादित्यलम् ।

ननु भवति धिन्वन्तीत्यादौ वलादित्वस्य स्वतः सिद्धत्वादार्धधातुकत्वस्य चातिदेशेन लाभात्तिपः वकारस्य चेडागमापत्तिः इति चेदत्र शेखरकाराः स्ववृत्त्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्मावच्छिन्नोद्देश्यताकत्व स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताकत्वान्यतरसंसर्गेणाल्विशिष्टे विधौ कर्तव्ये न स्थानिवदित्यर्थेनोक्तस्थलयोः तिप्लस्भ्कीकोयणचीतिशास्त्रीयस्थानिताया लकारोकारवृत्यल्त्वव्याप्यलत्वेक्त्वावच्छिन्नतया तन्निरूपिततिवकारनिष्ठादेशताश्रयधर्मिक आरोपः तिः स्थानिवृत्त्यार्धधातुकत्ववानित्याकारकः वकारश्च स्थानिवृत्त्यार्धतुकत्ववानित्याकारकः तत्र प्रकारः आर्धधातुकत्वं तद्धर्मावच्छिन्नोद्देश्यताकेड्विधौ स्थानिवत्त्वनिषेधेन दोषाभावात् ।

अत एव छन्दःसु इत्यत्रानल्विधावितिनिषेधेन विसर्गे रुवुद्ध्यभावेन यत्वाप्राप्त्याऽशूग्रहणमुत्तरार्थमिति भोभगो इति सूत्रस्थं भाष्यं संगच्छते नचैवमर्थस्वीकारे आरेत्यस्य सिद्धिर्न स्यात् ऋशब्दस्य द्वित्वे उदत्वे अरि अभ्यासत्वस्यानल्विधाविति निषेधेनातिदेष्टुमशक्यत्वादिति वाच्यम् अग्नी इत्यत्र पुनः प्रगृह्यसंज्ञापरभाष्यप्रामाण्येन संज्ञाविषये लक्ष्ये लक्षणन्यायाप्रवृत्त्या पुनः पूर्वोभ्यास इत्यनेनारः अभ्याससंज्ञायां हलादिः शेषेणारेत्यस्य सिद्धिः ।

न च द्वित्वशास्त्रीयोद्देश्यताश्रयद्वित्वशास्त्रीयविधेयताश्रयोभयमात्रारब्धसमुदायघटकस्य द्वित्वशास्त्रीयविधेयताश्रयावधिकपूर्वस्याभ्यासत्वविधानादुरदत्त्वेन तादृशसमुदायघटकत्वस्यैवाभावेन पुनरभ्यासत्वं कथं स्यादिति वाच्यम् स्वीयोद्देश्यताश्रयसमभिव्यहृतवर्णाघटितत्व स्वीयविधेयताश्रयाव्यवहितपूर्व-

त्वोभयसम्बन्धेन द्वित्वशास्त्रविशिष्टोऽभ्याससञ्ज्ञको भवतीत्यर्थेनादोषात् प्रथम-संसर्गनिवेशादूर्णुनावेत्यत्रोर्णु समुदायस्य नाभ्यासता, द्वितीयसंसर्गनिवेशाद्द्विती-यनुशब्दस्य नाभ्यासता,

न च रामो बभूवेत्यादौ पदसंस्कारपक्षे रामइत्यस्य नियतपूर्वपरान्यतरवृत्ति-त्वरूपसमभिव्याहृतत्वस्याभावेन तद्घटितस्य द्वित्वशास्त्रीयोद्देश्यताश्रयसमभि-व्याहृतवर्णाघटितत्वादभ्यासत्वं स्यादिति वाच्यम् अभ्यासत्वेऽपि 'हलादिः शेष' इत्यस्याङ्गाधिकारीयत्वेन लिड्निरूपिताङ्गत्वाभावेनादोषात् स्वाश्रयत्व स्वाश्रय-स्थानिकत्वान्यतरसम्बन्धेन प्रथमसंवन्धस्थाने स्वीयोद्देश्यताविशिष्टसमभिव्या-हृतवर्णाघटितत्वरूपसम्बन्धप्रक्षेपेणादोषाद्वा

नचानल्विधावित्यस्य निरुक्तार्थस्वीकारे हल्ङ्याब्भ्यादिसूत्रस्थदीर्घग्रहणस्य त-त्प्रत्याख्यानाय 'ङ्याब्ग्रहणेऽदीर्घ'इति वार्तिकस्य तत्प्रत्याख्यानाय भाष्योक्ताका-रप्रश्लेषस्य च वैयर्थ्यम् अतिखट्व इत्यत्र निरुक्तार्थकानल्विधाविति निषेधे-नाप्त्वाभावादेव सुलोपाप्राप्तेरिति वाच्यम् अल्त्वव्याप्यधर्मावच्छिन्नस्थानि-रूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्वरू-पस्य द्वितीयसंसर्गस्य स्वीकारेणादोषात् ।

एतेन आधये चिकीर्षवे इत्यत्राव्ययत्ववारणपरस्य 'अनिकारोकारप्रकृ-तिरिति वक्तव्यम्' इति वार्तिकस्य, तत्प्रत्याख्यानाय नगरकारेभ्यः कुम्भकारेभ्य इत्यत्राव्ययत्ववारणाय च भाष्यकृता कृतस्य संनिपातपरिभाषाश्रयणस्य च वै-यर्थ्यम् अग्रहीदित्यत्र विशिष्टं ह्येषोऽनलमाश्रयते इटं नामेति भाष्यस्य चासंग-तिरित्यपास्तम् तादृशकृत्त्वधर्मेट्त्वधर्माभ्यां कृन्मेजन्तः इटइटीति शास्त्रीयो-द्देश्यतायाः साक्षादवच्छिन्नत्वाभावात् ।

नन्वेवमपि साम्नी अत्र लोम्नी अत्र इत्यत्र द्विवचनत्वातिदेशाभावेन प्रगृ-ह्यत्वं न स्यात् प्रगृह्यशास्त्रीयोद्देश्यतायाः तादृशद्विवचनत्वधर्मेण साक्षादवच्छि-न्नतया अनल्विधाविति निषेधादिति चेन्न—

औङ्त्वस्य युवामित्यत्रापि सत्त्वेनाल्त्वव्याप्यत्वाभावेन नपुंसकाच्चेति शास्त्री-यस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वाभावेन अनल्विधाविति निषेधाप्रवृत्तेः।

नचैवमतियुष्मच्छब्दादौ विभक्तावमादेशे नपुंसकाच्चेति शीभावापत्तिरिति वाच्यम् सकृद्गतिन्यायाश्रयणात् 'अम् मान्त एवावशिष्यत' इतिव्याख्यानाच्चा-दोषात् स्वौजसौडित्यत्र आऔ इतिछेदेन औङ्त्वस्य तद्वृत्तित्वेनाल्त्वव्याप्य-त्वाभावाच्च औङित्यौकारविभक्तेः संज्ञेत्यनेनौकारविभक्तौ औङ्त्वारोपबोधने-नौङ्त्वस्यौङ्शब्देऽपि सत्त्वेनाल्त्वव्याप्यत्वाभावाच्च ईदाद्यन्तं यद्द्विवचनमित्यर्थे द्विवचनस्य विशेषणतयैव भानादारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्दे-श्यताकत्वाभावात् ।

न चातोलोप इति सूत्रे णयल्लोपावित्यादिवार्तिकव्याख्यावसरे ऽततत्तदित्यत्रे यङादेशस्यावकाशमुद्भाव्य स्थानिवद्भावाण्णिग्रहणाल्लोपो भविष्यतीत्युक्तम्भाष्ये णेरनिटीतिशास्त्रस्य स्ववृत्त्यल्त्वव्याप्येत्वधर्मावच्छिन्नेकारनिष्ठस्थानितानिरूपितोवङ्निष्ठादेशतावद्धर्मिकारोपप्रकारीभूतणित्वधर्मेणसाक्षादवच्छिन्नोद्देश्यकताकत्वात्तदिदानीमसङ्गतं स्यादिति वाच्यम् णयन्ततदाद्यवयवस्य निर्दिश्यमानस्य लोपविधानेन णित्वधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्वाभावात् स्थानिवत्त्वप्राप्तेर्भाष्यासंगत्यभावात् ।

नचेदुदुपधस्येति सूत्रे दीक्षितोक्ते प्रत्ययभिन्नस्य विसर्गस्य षत्वं भवतीत्यस्यर्थेऽग्निः करोतीत्यादौ नव्योक्तार्थेनानल्विधावित्यनेन स्थानिवद्भावस्य निषेधात् प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्य षत्वं भवतीत्यर्थमङ्गीकृत्य षत्वं निवारयतां शब्दरत्नकृतां वचनमसङ्गतं स्यात् इदुदुपधस्येत्यस्याल्त्वव्याप्यरत्वधर्मावच्छिन्नरेफनिष्ठस्थानितानिरूपितविसर्गनिष्ठादेशताश्रयधर्मिकारोपप्रकारीभूतप्रत्ययत्वधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्वाभावादिति वाच्यम् इत एवारुचेरग्रिमकिंचेत्यस्योक्तत्वात् स्थानितायामेव साक्षादवच्छिन्नत्वं निवेश्यमिति मते दोषाभावाच्च ।

तथा हि गोस्त्रियोरित्यत्र निर्दिश्यमानपरिभाषोपस्थित्योपसर्जनस्त्रीप्रत्ययान्ततदाद्यन्तप्रातिपदिकावयवनिर्दिश्यमानस्य ह्रस्व इत्यर्थेनाल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नायाः स्थानिताया अभावात् न हल्ङ्यादिसूत्रस्थभाष्यविरोधः

वहुवचने झल्येदित्यत्र परिभाषाद्वयोपस्थितेः अत्वव्याप्यधर्मेण साक्षादवच्छिन्नाया स्थानिताया अभावान्न कृन्मेजन्तः सूत्रस्थभाष्यविरोधः घेर्ङितीत्यस्य घिसंज्ञकाभिन्ननिर्दिश्यमानान्ताङ्गावयवस्यान्त्यस्यालोगुण इत्यर्थेन अल्त्वव्याप्यधर्मावच्छिन्नास्थानिता इति तु न वक्तव्यम् अन्त्यस्याल इति वक्तव्येऽलोन्त्यस्येत्येवं पाठेनालः सर्वत्र विशेषणताया एव कल्पनात् स्थानिताया अन्त्यत्वेनैव साक्षादवच्छेदात् ।

अहोऽलिटीत्यत्रानियमाभावान्नाचश्चेत्यस्योपस्थितिः उपस्थितौ वाऽचो विशेषणतया इट्त्वेनैव स्थानिताया साक्षादवच्छेदान्न तत्रत्यभाष्यविरोधः लोम्नी अत्रेत्यादावपि न दोषः नपुंसकाच्चेत्यत्र तस्मादितिपरिभाषयोपस्थितस्योत्तरस्य विशेष्यतया औङ्भिन्नस्य नपुंसकात्परस्य शीत्यर्थस्य फलवलात्स्वीकारेण स्थानिताया औङ्त्वेनानवच्छेदान्न दोषः औङ्त्वस्याल्त्वव्याप्यत्वाभावाच्चेति शम् ।

केचित्तु अल्रूपबोधकवृत्तिधर्मघटितातिदिदिक्षितधर्मावच्छिन्नोद्देश्यताके अल्रूपबोधकप्रयोज्याल्निष्ठस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताके वा विधौ कर्तव्ये न स्थानिवत् इत्यर्थे रामायेत्यादौ अल्रूपबोधकं

ङेपदं नास्ति न वा अल्रूपबोधकपदप्रयोज्यालूनिष्ठस्थानितास्ति इत्यनल्विधावि त्याप्रवृत्त्या स्थानिवत्त्वात्सुपि चेति दीर्घसिद्धया मात्रपदनिवेशनं व्यर्थम् ।

भोभगोसूत्रस्थमशग्रहणमुत्तरार्थमन्यत्राभावादिति भाष्यं तु भोभगोसूत्रे र इत्यस्यानुवृत्तौ रेफस्याल्रूपबोधकत्वेन तत्प्रयोज्यरेफत्वावच्छिन्नस्थानितानिरूपितादेशतावद्धर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताके विधौ स्थानिवत्त्वाभावेन विसर्गे रुत्वबुद्धेः कर्तुमशक्यत्वात्सुयोजम् ।

अग्रहीदित्यत्राल्रूपबोधकाच्पदप्रयोज्यस्थानितायाः सत्त्वेऽपि आरोपप्रकारीभूतेट्त्वधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्वाभावेन निषेधाप्रवृत्तौ इटइटीति सलोपसिद्धिः इकोयणचीत्यादाविक इकारस्यैवबोधकत्वेन ककारादेर्द्योतकत्वात् अल्रूपबोधकप्रयोज्यस्थानितायाः सत्त्वात् स्थानिवत्त्वाप्रवृत्त्या धिन्वन्तीत्यस्य सिद्धिः ।

न च मात्रपदनिवेशाभावे अतिखट्वमयतेऽतिखट्वा अयतेर्विचि यलोपे टापि छिद्यते इति शब्देन योगेऽतिखट्वाच्छिद्यते इत्यत्र ह्रस्वस्याल्रूपबोधकत्वाभावेन खट्वशब्दोत्तराकारवृत्तिह्रस्वत्वबुद्ध्या छेचेति नित्यतुगापत्तिरिति वाच्यम् स्थानिवद्भावेन स्थानिपर्याप्तधर्मस्यैवातिदेशेन स्थान्येकदेशवृत्तिधर्मानयने स्थानिवत्त्वाप्रवृत्तेः ताद्रूप्यानतिदेशादन्तादिवच्चेत्यनेनापि ह्रस्वत्वमतिदेष्टुमशक्यम् ।

न च नव्यमते श्रियं याति यत्कुल मित्यर्थे ह्रस्वोनपुंसक इति ह्रस्वत्वे श्रीपच्छायेत्यत्र स्थानिवद्भावाद्दीर्घबुद्ध्या पदान्ताद्वेतिवैकल्पिकतुगापत्तिरिति वाच्यम् ह्रस्वो नपुंसक इति शास्त्रीयाल्रूपाच्पदप्रयोज्याच्त्वावच्छिन्नस्थानितानिरूपितादेशतावद्ध्रस्वाकारधर्मिकारोपप्रकारीभूतदीर्घत्वधर्मावच्छिन्नोद्देश्यताके तुग्विधौ कर्तव्ये स्थानिवद्भावस्य निषेधात् नित्यतुक एव सौलभ्यात् ।

न च तच्छब्दान्मतुपि मकारस्य वकारे तद्वानित्यत्रानुनासिकस्याल्रूपबोधकत्वाभावेन मादुपधायाश्चेति सूत्रे मकारस्याल्रूपबोधकत्वेन तत्प्रयोज्यमत्वावच्छिन्नस्थनितारूपितपकारनिष्ठादेशतावद्धर्मिकारोपप्रकारीभूतानुनासिकत्वरूपधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्वस्य यरोऽनुनासिक इत्यनुनासिकविधेरभावेन निषेधाप्रवृत्तौ स्थानिवद्भावेनानुनासिकापत्तिर्दुर्वारेति वाच्यम् ।

स्थानितायां साक्षादवच्छिन्नत्वनिवेशेनारोपप्रकारीभूतानुनासिकत्वावच्छिन्नोद्देश्यताकेऽनुनासिके कर्तव्ये ऽनल्विधाविति निषेधात् स्थानिवत्त्वाप्राप्त्या तन्निवेशाभावेऽपि तद्वानित्यादौ दोषाभावात् 'तसौ मत्वर्थे' इत्यत्र दकारप्रश्लेषेण भत्वेनादोषाच्च अग्रहीदित्यत्र ग्रहोलिटीति शास्त्रीया निर्दिश्यमानत्वावच्छिन्ना स्थानिता साक्षादल्रूपबोधकप्रयोज्या नास्तीति न दोषः कुम्भकारेभ्य इत्यादौ निर्दिश्यमानत्वावच्छिन्ना स्थानिताऽल्रूपबोधकप्रयोज्या नास्तीति न दोषः साम्नी इमे

इत्यादावौङः एव स्थानित्वेन निषेधाप्रवृत्तौ स्थानिवत्त्वेन प्रगृह्यत्वसिद्धिरित्याहुः।

अन्ये तु स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मघटितधर्मनिमित्तकत्व स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्थानितानिरूपितादेशताव-द्धर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताकत्वान्यतरसंसर्गेणाल्विशिष्टविधौ स्थानिवत्त्वं नेत्यर्थः रामायेत्यादौ एकारद्वृत्ति सुप्त्वं श्रवणप्रत्यक्षविषयतावच्छे-दकं न भवतीति न दोषः इति वदन्ति ।

तदत्यन्तमसमञ्जसम् अल्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकीभूतेत्वा-दिधर्मघटितधर्मनिमित्तके तादृशेत्वादिधर्मावच्छिन्नस्थानितानिरूपितादेशता-श्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताके वा विधौ स्थानिवत्त्वनिषेधे-ऽपि अच्त्वेकृत्वादेः श्रावणप्रत्यक्षविषतावच्छेदकत्वाभावेन तद्घटितधर्मानय-नस्य तद्धर्मावच्छिन्नस्थानिताकादेशस्थानिवत्त्वस्य वा वारयितुमशक्यत्वा-दित्यलम् ।

प्राचीनानुयायिनस्तु अल्त्वव्याप्यधर्मघटिताततिदिदित्तितधर्मनिमित्तके वि-धौ न स्थानिवदित्येकमर्थमङ्गीकृत्य अल्त्वव्याप्यधर्मावच्छिन्नस्थानितेत्यादि-द्वितीयमर्थं नाङ्गीकुर्वन्ति फलाभावात् ।

न च धिन्वन्तीत्यत्रेडभावार्थं द्वितीयार्थावश्यकत्वमिति वाच्यम् पूर्वस्मा-द्विधिः पूर्वविधिरिति पञ्चमीसमासे वकारस्य स्थानिवत्त्वेन वलादित्वाभावेने-ड्वारणसंभवात् ।

ननु 'निष्ठायां सेटि' इति सूत्रे सेड्ग्रहणं नानिड्व्यावृत्त्यर्थं अनिटो ण्यन्त-स्यासम्भवात् किं तर्हि कालपरिच्छेदार्थं सेटि सत्येव णिलोपो न तु ततः प्राक् तेन कारितमिति सिद्धम् अन्यथा इटः प्राङ्णिलोपे एकाच उपदेश इतीड्निषेधो दुर्वारः स्यात् एवं च सेड्ग्रहणाभावेऽपि पञ्चमीसमासेन णिलोपस्य स्थानिव-त्त्वात् एकाच उपदेश इत्यस्याप्रवृत्त्या कारितमित्यस्य सिद्धौ सेड्ग्रहणं व्यर्थं सत्पञ्चमीसमासस्याभावं बोधयतीति धिन्वन्तीत्याद्यर्थं द्वितीयार्थावश्यकत्वमि-तिवाच्यम् एकाच उपदेश इत्यत्र विहितविशेषणत्वस्य भाष्यकृता कृतत्वेन स्थानिवत्त्वेपि एकाचोविहितत्वाभावेन निषेधाप्रवृत्त्या कारितमित्यस्य सिद्धेः सेड्ग्रहणं तु व्यर्थमेवेत्यदोषात् ।

न च प्रविगण्य्येति भाष्यप्रयोगात्पञ्चमीसमासाभावः कल्प्यते अन्यथा अल्लोपस्य स्थानिवत्त्वेन लघूपूर्वाणकारपरत्वस्य णावभावेनायादेशो न स्यादिति वाच्यम् व्यपदेशिवद्भावेन स्थानिवद्भावलब्धाकारस्यैव लघुपूर्वत्वसम्भवेन णेर-यादेशे बाधकाभावात् ।

न च पञ्चमीसमासाङ्गीकारे हे गौरित्यत्र एङ्ह्रस्वादिति सुलोपापत्तिरिति वाच्यम् स्थानिभूताच्पूर्वाव्यवहितोत्तरस्यैव कार्ये स्थानिवत्त्वमित्यङ्गीकारेण

हेगौरित्यत्र सुलोपाप्राप्तेः ।

न च माथितिक इत्यत्र 'इसुसुकान्तात्क' इति कादेशस्य अनल्विधाविधिति स्थानिवत्त्वनिषेधाद् ठस्याभावेन, सन्निपातपरिभाषया, ठप्रत्ययोपदेशिकतान्तग्रहणार्थाऽन्तग्रहणेन, वा वारणसंभवात् वेभिदितेत्यादौ यङन्तात्तृचि इडागमनिषेधके विहितविशेषणाश्रयणेन इड्निषेधाप्रवृत्तेः अपीपचन्नित्यत्र सिजभ्यस्तेतिसूत्रे विद्साहचर्येण अभ्यस्तादपि लङ एव भेर्जुस्विधानात् प्रत्यैषिषन्नैर्त्सन्नित्यादौ पूर्वोत्तरयोः सिज्विदोः साहचर्येण भावरूपादेशानपहृतविकरणकाभ्यस्तस्यैव ग्रहणेन दोषाभावाच्च पञ्चमीसमासस्यानावश्यकतया धिन्वन्तीत्यर्थं द्वितीयार्थावश्यकत्वमिति वाच्यम् ।

एवमपि वहिरङ्गपरिभाषाया अपरनिमित्तकत्वेनान्तरङ्गे इटि यणोऽसिद्धत्वेन धिन्वन्तीत्यादाविड्वारणसंभवेन द्वितीयार्थस्यानावश्यकत्वात् ।

न च 'भविष्यतिगम्यादय' इति निर्देशेन इड्विधौ वहिरङ्गपरिभाषाया अप्रवृत्तिः ज्ञाप्यते अन्यथा वहिर्भूतनिमित्तकत्वेन वहिरङ्गतया स्यप्रत्ययस्यासिद्धत्वादिड्न स्यादिति धिन्वन्तीत्यत्र द्वितीयर्थकानल्विधावित्यस्याभावे इड्दुर्वारः स्यादिति वाच्यम् । स्यविषये एव परिभाषा प्रवृत्त्यभावबोधनेन निर्देशोपपत्तौ सामान्यत इड्विषये तदप्रवृत्तिकल्पने मानाभावत् । न च नामीति सूत्रस्थभाष्यविरोधपरिहाराय अपूर्वनिमित्तकत्वे सति अपरनिमित्तकत्वरूपान्तरङ्गत्वस्वीरेण इटो नान्तरङ्गत्वमिति वाच्यम् धिन्विकृण्वोः शुङिति न्यासेन शित्वात्सार्वधातुकत्वेन धिन्वन्तीत्यत्र इडागमप्रसक्त्यभावात् ।

न चद्वितीयार्थाभावे भवतीत्यादौ लवृत्त्यार्धधातुकत्त्वस्य तिप्यतिदेशेन आर्धधातुकस्येड्वलादेरितीडापत्तिरिति वाच्यम् वभूवेत्यादौ लवृत्यार्धधातुकत्वस्य परम्परया स्थानिवत्त्वेन णलादीनामार्धधातुकत्त्वसिद्धया लिट्चेति सूत्रारम्भेण लवृत्त्यार्धधातुकत्वस्य तिबादावतिदेशाभावबोधनेनादोषात् ।

न च लङः शाकटायनस्यैवेत्यतः एवकारमनुवृत्त्य लिडादेशस्तिङ् आर्धतुकसंज्ञ एव न सार्वधातुकसंज्ञ इत्यर्थात्सार्वधातुकसंज्ञावाधाय लिट्चेति सूत्रमावश्यकमिति भवतीत्यादौ दोषो दुरुद्धर इति वाच्यम् । आर्धधातुकस्येड्वलादेरित्येवेटि सिद्धे रुदादिभ्यः सार्वधातुके इति सूत्रारम्भेण लवृत्त्यार्धधातुकत्वं तिबादिषु न स्थानिवत्त्वेनेत्यर्थज्ञापनसंभवात् ।

न च रुदधातोः श्तिप्प्रत्यये रोदितिरित्यत्र इडर्थं तच्चरितार्थमिति वाच्यम् तावन्मात्रप्रयोजनकत्वे रुदादिभ्यः श्तिप इत्येव वक्तव्ये सामान्यतः सूत्रारम्भस्योक्तार्थज्ञापकत्वे वाधकाभावात् । आर्धधातुकमशिदिति वक्तव्ये शेषग्रहणस्य तिङ आर्धधातुकत्वाभावबोधकत्वसंभवाच्चेति वदन्ति ।

स्थानपदार्थः कः इति चेदुच्यते वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकेष्टसा-

धनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीया या विशेष्यता तदवच्छेदकधर्मावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकता एव स्थानपदार्थः । षष्ठीप्रकृत्यर्थस्य इगादेर्निरूपितत्वसंबन्धेन वृत्तिपदार्थैकदेशवृत्तितायामन्वयः स्थानपदार्थीभूतान्तिमावच्छेदकतायाश्च स्वरूपसंबन्धेन आदेशे यणादावन्वयः ।

तत्समन्वयश्चेत्थम् । अजव्यवहितपूर्वत्वविशिष्टेक्कर्मकमुच्चारणम् इष्टसाधनत्वप्रकारकभ्रमविषयतावत् इति अजव्यवहितपूर्वत्वविशिष्टयण्कर्मकमुच्चारणम् इष्टसाधनत्वप्रकारकप्रमाविषयतावत् इति च इकोयणचीतिसूत्रं बोधयतीति शाब्दिकानां सिद्धान्तः ।

तत्र आदिमं ज्ञानमिष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकम् अजव्यहितपूर्वत्वविशिष्टेकूकर्मकोच्चारणविशेष्यकमिति विशेष्यता उच्चारणनिष्ठा तन्निरूपितावच्छेदकता उच्चारणत्वनिष्ठा तन्निरूतावच्छेदकता स्वनिष्ठकर्मतानिरूपकवृत्तित्वसम्बन्धावच्छिन्ना इकूनिष्ठा ।

एवं द्वितीयं ज्ञानमिष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकम् अजव्यवहितपूर्वत्वविशिष्टयण्कर्मकोच्चारणविशेष्यकमिति विशेष्यता उच्चारणनिष्ठा तन्निरूपितावच्छेदकता उच्चारणत्वे तन्निरूपितावच्छेदकता यण्निष्ठा एवं च इन्निरूपितवृत्तितावती या विशेष्यतावच्छेदकतानिरूपितावच्छेदकता तन्निरूपकमिष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकं ज्ञानमादिमं ज्ञानम् तदीयविशेष्यतावच्छेदकमुच्चारणत्वं तदवच्छिन्ना इष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यता उच्चारणनिष्ठा तदच्छेदकता उच्चारणत्वे तदवच्छेदकता यणि इति स्थानपदार्थः तादृशावच्छेदकतायां स्वनिष्ठवृत्तित्वसम्बन्धावच्छिन्नाधिकरणतानिरूपिताधेयतासम्बन्धेन यण् तिष्ठतीति इकः स्थाने यण् इति सप्तमी सिद्ध्यति इति ।

इकोयणचीत्यस्य–इन्निरूपितवृत्तितावती या विशेष्यतावच्छेदकताच्छेदकता तन्निरूपकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकोच्चारणत्वावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयविशेष्यतावच्छेदकतानिरूपितावच्छेदकतावान् यण् भवतीति सूत्रार्थः ।

नन्वेवमिकूनिष्ठस्थानितानिरुपितादेशतावान् गुण इति व्यवहारापत्तिः गुणकर्मकमुच्चारणमिष्टसाधनत्वप्रकारकप्रमाविषयतावदित्यर्थस्य आद्गुण इत्यनेन बोधितत्वात् यणीव तादृशव्यवहारप्रयोजकयावत्पदार्थस्य गुणे सत्वादिति चेन्न—

वृत्तिविशेष्यतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमविषयत्वप्रकारकज्ञानीयविशेष्यताविशिष्टविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्रकारकज्ञानीयवि-

शेष्यतावच्छेदकतावच्छेदकतारूपस्थानपदार्थस्वीकारेणादोषात् विशेष्यतावैशिष्ट्यं विशेष्यतायाम् स्वावच्छेदकरूपावच्छिन्नत्व स्वप्रयोजकशास्त्रप्रयोज्यत्वोभयसंबन्धेन गुणकर्मकोच्चारणत्वावच्छिन्नविशेष्यतायाम् इक्कर्मकोच्चारणत्वावच्छिन्नविशेष्यताया द्वितीयसंबन्धाभावेनादोषात ।

ननु जराया जरसन्यतरस्यामिति विकल्पस्थले स्थान्यादेशयोरुभयोरपि इष्टसाधनत्वप्रकारकप्रमाविषयत्वात् तत्र स्थानपदप्रयोगानुपपत्तिति चेन्न—

वृत्तिविशेष्यतावच्छेदकतावच्छेदकताकत्वे इष्टसाधनत्वप्रकारकत्वे भ्रमविषयत्वप्रकारकत्वे च खण्डशः शक्तिस्वीकारेण तादृशस्थले भ्रमविषयत्वप्रकारकत्वांशस्य मोषेणादोषात् एतेन 'अनेन मूर्खेण यणः स्थाने इक् प्रयुक्तः' इत्यपि समर्थितम् ।

केचित्तु वृत्तिविशेष्यतावच्छेदकतावच्छेदकतानिरूपकविशेष्यताविशिष्टविशेष्यतावच्छेदकतावच्छेदकता स्थानपदार्थः वै० च स्वावच्छेदकरूपावच्छिन्नत्व स्वप्रयोजकशास्त्रप्रयोज्यत्व स्वनिरूपितप्रकारताविशिष्टप्रकारतानिरूपितत्वैतत्त्रितयसंबन्धेन अत्र वै० स्वावच्छेदकीभूतेष्टसाधनत्वप्रकारकभ्रमविषयतान्तःपाति यदिष्टसाधनत्वं तत्प्रकारकप्रमाविषयतात्वावच्छिन्नत्व, स्वावच्छेदकीभूतेष्टसाधनत्वप्रकारकप्रमाविषयतात्वान्तःपति यदिष्टसाधनत्वं तत्प्रकारकभ्रमविषयतात्वावच्छिन्नत्वान्यतरसंबन्धेनेति वदन्ति ।

ननूक्तप्रकारद्वयेऽपि जरोनिष्ठस्थानितानिरूपितादेशतावान् जरा इति व्यवहारापत्तिः तादृशव्यवहारप्रयोजकस्योभयत्र सत्वादिति चेन्न—

तद्विशिष्टत्वं तदादेशत्वमिति स्वीकारेणादोषात् स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपकविशेष्यताविशिष्टविशेष्यतावच्छेदकतावच्छेदकताश्रयत्व स्वनिष्ठविषयताप्रयोजकषष्ठ्यन्तपदघटितशास्त्रघटकप्रथमान्तपदप्रयोज्यविषयताश्रयत्वोभयसंबन्धेन विशेष्यतावैशिष्ट्यं विशेष्यतायां पूर्वोक्तसंबन्धत्रयेणेत्यलम् ।

## अचः परस्मिन्पूर्वविधौ

पूर्वसूत्रादादेश इत्यनुवर्तते । आदेशत्वं च विधेयताविशेषाश्रयत्वं, तद्विधेयतया आकाङ्क्षितं स्थानित्वमच्पदोत्तरषष्ठ्या अर्थः 'स्वसमभिव्याहृतपदार्थो यदर्थे साकाङ्क्षस्तद्वाचकत्वं षष्ठ्या' इति नियमात् अत एव देवदत्तस्य पुत्र इत्युक्ते देवदत्तस्वामिकान्यदीयपुत्रस्य न प्रतीतिः एवं च षष्ठीधर्मिकस्य संबन्धविशेषविषयकबोधजनकत्वप्रकारकतात्पर्यनिर्णयस्य सत्त्वात् 'ऊदुपधाया गोहः' इत्यत्रेव षष्ठी स्थान इत्यस्य प्रकृते न प्रवृत्तिः ।

एतेन गुणानां च परार्थत्वादिति न्यायेन षष्ठीस्थाने इत्यस्याः प्रकृतेऽप्रवृत्त्या स्थानार्थकत्वं षष्ठ्या अनुपपन्नमित्यपास्तम् ।

प्रकृतषष्ठ्याः 'षष्ठी स्थानेयोगा' इति परिभाषालिङ्गानालिङ्गितत्वेन तदप्रवृत्तये गुणानां च परार्थत्वादिति न्यायानुसरणस्य अनुचितत्वात् । एलासंस्कृतस्य पानीयस्य परोपकारकत्वात्

'गुणः कृतात्मसंस्कारः प्रधानमनुरुध्यते' ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥

इति न्यायेन, यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गमित्यत्र तस्मिन्निति परिभाषाप्रवृत्तेर्दर्शनेन, च तस्याऽसार्वत्रिकत्वाच्च । सूचितं चैतदनास्थासूचकवाकारेण, शब्दरत्ने हलन्त्यमिति सूत्रेन्योन्याश्रयपरग्रन्थेन ।

यद्यपि स्थानिवदित्यनुवृत्त्या संबन्धिशब्दमहिम्नाऽऽदेश इत्यर्थलाभसंभवादादेशपदानुवृत्तिर्व्यर्था तथापि तदनुवृत्तिश्च इत्यस्य षष्ठ्यन्ततासूचनाय अन्यथा श्रुतानुमितयोरिति न्यायेन अचः परस्मिन्नित्यनेनान्वये दिग्योगलक्षणपञ्चम्यन्तत्वसंभवापत्तेः ।

ननु श्रुतानुमितयोरिति न्यायेन अचः परस्मिन्नित्यनेनान्वये परनिमित्तकोऽच् तदादेशः स्थानिवत्पूर्वविधौ इत्यर्थेन वव्रश्चेत्यादौ स्थानिवत्त्वाय सूत्रचारितार्थ्यसंभवात्किमिति अश्रुतेनादेशपदार्थेन अच इत्यस्य संबन्ध इतिचेन्न लक्ष्यानुरोधात्प्रधानान्वयानुरोधात् न पदान्तसूत्रस्थवरेयलोपादिग्रहणाच्च तत्परित्यागात् । नहि यातिरित्यादौ परनिमित्तकोच् इति तद्वैयर्थ्यं स्पष्टमेव ।

ननु परस्मिन्नित्यत्र उपपदविभक्तेरितिन्यायेन औपश्लेषिकाधिकरणबाधिका सप्तम्येवास्तां न तु यस्य च भावेनेति निमित्तसप्तमी तथा च परस्मिन्परत अजादेशः स्थानिवदित्यर्थोऽस्तु ।

न च परसप्तम्यभ्युपगमे द्वौ द्वौ पादौ ददातीत्यर्थे द्विपदिका इत्यत्र संख्यादेर्वीप्सायामित्यनेन यस्येति चेत्यनेन वा लोपे रूपे वैलक्षण्याभावेन संख्यादेर्वीप्सायां वुन् लोपश्चेति सूत्रे लोपग्रहणानर्थक्यम् मम तु यस्येतिचेति लोपस्य परनिमित्तकतया स्थानिवत्त्वेन पदादेशाभावः संख्यादेरिति लोपस्यापरनिमित्तकत्वेन स्थानिवत्त्वाभावेन पदादेश इति वैलक्षण्याय लोपग्रहणसार्थक्यमिति तन्न—

पादमततीति पादात् तमाचष्टे णिचि टिलोपे भत्वे च क्विपि द्वौ द्वौ पादौ ददातीत्यर्थे द्विपाकेति रूपार्थं लोपविधानस्य सार्थक्यसंभवात् ।

न च लोपे कर्तव्ये णिलोपस्य स्थानिवत्त्वेन नात्रान्त्यलोप इति वाच्यम् लोपस्य वुन्सन्नियोगशिष्टतया व्यवधानेऽपि पाद्शब्दान्तत्वाल्लोपप्रवृत्तेर्दुर्वारत्वात् ।

न च दकारलोपेऽपि पुनः स्थानिवत्त्वेन पदादेश इति वाच्यम् लक्ष्येलक्षणन्यायेन तद्बाधात् ।

न वा परसप्तम्यभ्युपगमे चर्ग्रहणवैयर्थ्यापत्तिः, जक्षतुरित्यादौ सकाररूपपराव्यवहितपूर्वस्याकारस्य स्थाने लोपादेशस्य सत्त्वेन स्थानिवत्त्वप्राप्त्या तन्निषेधसार्थक्यादिति चेन्न—

एवं च परनिमित्तकोऽजादेशः स्थानिवत् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये इति सूत्रार्थो निष्पन्नः ।

ननु मातापितृभ्यामुत्पादिते पुत्रेऽन्यतरपुत्रत्वव्यवहारवत् राजानमाख्यद्रराजदित्यत्र अग्घलूलोपेऽपि अग्लोपित्वव्यवहारवच्च अज्झलादेशोऽपि अजादेशपदेन गृह्येत ततश्च मरुतमाचष्टे मारयतीत्यत्र टिलोपस्य स्थानिवत्त्वेन उपधावृद्धिर्न स्यादिति चेन्न—

तथा सति हरिणा कृतम् इत्यत्र वाक्यसंस्कारपक्षे नादेशस्य स्थानिवत्त्वेन इकोयणचीति यणापत्तेः

न च पदसंस्कारपक्षेण निर्वाह इति वाच्यम् जुहुत इत्यादौ शपः श्लोः स्थानिवत्त्वेन यणापत्तेर्दुर्निवारत्वादित्यलम् ।

षष्ठ्यर्थस्थानितायामच्पदार्थस्य वृत्तित्वसंबन्धेनान्वयः अच्त्वस्य च धर्मिपारतन्त्र्येण स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगित्वसंबन्धेन स्थानितायामेवान्वयः स्थानितायाश्च विधेयताश्रयरूपादेशपदार्थे निरूपितत्वसम्बन्धेनान्वयः, परस्मिन्नितियस्य च भावेनेति सति सप्तम्या ज्ञाप्यत्वमर्थः, ज्ञाप्यत्वं च ज्ञानजन्यज्ञानविषयत्वं तस्य च स्वरूपसंबन्धेनादेशपदार्थेऽन्वयः । तावतैव परनिमित्तकत्वमादेशे लब्धम् स्थानिवदित्यस्य च स्थानिप्रतियोगिकसादृश्यवानित्यर्थः सचाभेदेनादेशपदार्थान्वयी

तथा च अज्निष्ठा या अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूता स्थानिता तन्निरूपको यः परसत्ताविषयकज्ञानजन्यज्ञानविषय आदेशः स स्वस्थानिसदृशो भवतीत्यर्थः सादृश्यं च कार्यवत्व कार्याभाववत्त्वान्यतरधर्मेणेति बोध्यम् । एवं च प्रकृते टिलोपीयस्थानितायाः उच्छब्दनिष्ठतया स्थानिताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं उच्छब्दगतं द्वित्वं नाच्त्वप्रतियोगिकपर्यानुयोगितावच्छेदकमिति अजादेशपदेन टिलोपस्य ग्रहणाभावेन स्थानिवत्त्वाप्राप्त्या वृद्धौ बाधकाभावात् । एतादृशसम्बन्धेन अच्त्वस्य स्थानितायामन्वयबलादेव अच एवादेश इत्युक्तं शेखरे ।

ननु अच्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयः स्थानिवदित्येवार्थोऽस्तु तथा सति आयसावित्यादौ एकदेशविकृतन्यायेन उगिदन्ताङ्गत्वमादाय नुममाशङ्क्य स्थानिवत्त्वेन वारणपरभाष्यविरोधोऽपि न, अन्यथा अ औ इति समुदाये स्थानितापर्याप्तेस्सत्त्वेन अच्त्वपर्याप्तेश्चासत्त्वेन स्थानिवत्त्वाप्राप्त्या भाष्यविरोधः स्पष्ट एवेति चेन्न—

आयसावित्याद्यर्थं तथार्थाङ्गीकारे निगाल्यते इत्यत्र णिलोपस्य स्थानितायाः णित्वधर्मेणैवावच्छिन्नतया स्थानिवत्त्वाप्रवृत्तेः चङ्परनिर्ह्रासे ण्यन्ताण्णौ अवीवददित्यर्थं स्थानिवत्त्वनिषेधवैयर्थ्यापत्तेश्च आयसावित्यत्र मदुक्तार्थे स्थानि-

वत्त्वोपपत्तिस्तु 'वर्णग्रहणे जातिग्रहणम्' इति परिभाषया अ औ इति समुदाये अच्त्वपर्याप्तेरतिदेशेनाद्दोषात् । परिभाषार्थश्च वर्णत्वव्याप्यतद्धर्मवन्मात्रारब्धसमुदाये वर्णत्वव्याप्यतद्धर्मवत्त्वमतिदिश्यते इति । एवं प्लायते इत्यत्र अयतिपरको य उपसर्गस्तदवयवस्य रेफस्य लत्वमिति उपसर्गस्यायताविस्यस्यार्थे स्थानिवत्त्वेन उपसर्गस्यायतिपरत्वस्थापनपरभाष्यविरोधोऽपि न, अ अ इत्यत्र अच्त्वजातेरतिदेशेन दीर्घस्य अजादेशत्वसम्भवात् ।

ननु अच एवादेश अजादेश इत्यर्थे किम्मानमिति चेदभत्तन्यायोऽच्त्वस्य पूर्वोक्तसंवन्धेन स्थानितायामन्वयश्चेति गृहाण ।

केचित्तु अतो लोपइति सूत्रे अप् पय् धातोः क्विपि यलोपे ह्रस्वस्येति तुकि अत् पत् इत्यादौ तुकं बाधित्वाऽतो लोपवारणाय भाष्यकृत्कृतस्य अनुदात्तोपदेश इत्यतः उपदेशग्रहणानुवर्तनस्य वैयर्थ्यम् , यदि हलादेशोऽपि स्थानिवत्स्यात् तदा अत् पदित्यादौ यलोपस्य स्थानिवत्त्वेन अलोपस्य वारणसंभवादिति आगत्येत्यादौ दोषाभावेन अच्ग्रहणमेव अज्मात्रस्थानिकादेशस्य स्थानिवत्त्वे मानमिति वदन्ति ।

तन्न शोधातोः क्तप्रत्यये आत्वे शातं तस्योच्छब्देन समासे शातोत् तमाचष्टे णिचि लुङि टिलोपचङ्द्वित्वेषु कृतेषु णौचङीति ह्रस्वे अशीशतदिति भवति तत्र ह्रस्वनिष्पन्नाकारस्य क्तप्रत्यये लोपवारणायोपदेशग्रहणस्य चारितार्थ्येन हलादेशस्य स्थानिवत्त्ववारणाय अज्ग्रहणस्यावश्यकतया तत्सामर्थ्येन अज्मात्रस्थानिकत्वस्य आदेशे लब्धुमशक्यत्वात् ?

न च ह्रस्वनिष्पन्नाकारस्थ वहिरङ्गत्वेनासिद्धत्वमिति नलोप वारणायोपदेश ग्रहण चारितार्थ्यम् , नाजानन्तर्य इति निषेधात् ।

न चातोलोप इति सूत्रे प्रतिपदोक्तस्यातो ग्रहणेन निर्वाहः, आदेचउपदेशेऽशितीत्यत्र उपदेशग्रहणस्य विवायेति प्रत्युदाहरणपरभाष्यप्रामाण्येन वर्णग्रहणे प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः ।

यदि तु अशीशतदिति नैव भवति णिच्यग्लोपित्वान्नाग्लोपीति निषेधात् । अत एव अरराजदिति सिद्धम् ।

किञ्च ओदिति सूत्रे अदोऽभवदित्यत्र प्रगृह्यत्ववारणाय वर्णग्रहणेऽपि तत्संचारस्य भाष्यकृता कृतत्वेन प्रतिपदोक्तपरिभाषया लोपवारणमित्युच्यते तदा वृत्रहभ्यामित्यत्र ब्रह्मभ्रूणवृत्रेष्विति क्विपि नलोपे क्विब्निमित्तकाकारलोपवारणाय उपदेशग्रहणस्यावश्यकत्वम्

न च नलोपः सुपिति सूत्रे कृति तुग्ग्रहणं व्यर्थं सदलोपवारकमिति वाच्यम् जुनादिधातोः क्विपि नलोपे जुभ्यामित्यादौ तुग्वारणाय तस्य सावकाशत्वात् ।

नापि नपदान्तेति सूत्रे यायावर इत्यत्राकारलोपवारणाय क्रियमाणं वरे

ग्रहणं हलादेशो न स्थानिवदित्यत्र ज्ञापकं तत्र अल्लोपस्येव यलोपस्यापि स्थानिवत्त्वेन ङित्परत्वाभावादातोलोपाप्राप्त्या वरेग्रहणवैयर्थ्यं स्पष्टमेवेति वाच्यम् पिसधातोरिगुपधलक्षणे के तत आचारक्विबन्तात्कर्तरि क्विपि अल्लोपे तत आचारक्विपि स्थेशभासेति वरचि तन्निमित्तकलघूपधगुणप्रतिबन्धकप्राप्ताल्लोपस्थानिवद्भावनिषेधाय वरच्प्रत्ययनिमित्तकविधौ स्थानिवत्त्वनिषेध इत्यर्थकस्य वरेग्रहणस्य चारितार्थ्यसम्भवात् ।

यदि तु ह्रस्वनद्याप इति सूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विपोऽनभिधानं स्वीकृत्य नैतत्फलमिति ज्ञापकं सम्यगेवेत्युच्यते तदा यातेर्यङन्ताद्विचि अल्लोपयलोपयोरल्लोपस्येव सम्प्रति यलोपस्यापि स्थानिवत्त्वेनातोलोप इटिचेत्याकारलोपाभावे यायाशब्दस्य नपुंसकह्रस्वे यायशब्दादाचारक्विबन्ताद्यश्च यङ इति वरचि तन्निमित्तकालोपे कर्तव्ये यङवयवाकारलोपस्थानिवत्त्वनिषेधाय वरेग्रहणमावश्यकम् ।

यदि तु यङवयवाकाररूपस्थानिभूतात्पूर्वत्वेन ह्रस्वाकारस्यादृष्टत्वेन स्थानिवत्त्वाप्राप्तिः प्रकृते इत्युच्यते तदापि निरुक्तप्रक्रियानिष्पन्नयायशब्दस्य यशब्देन समासे याययशब्दादाचारक्विबन्तात्कर्तृक्विपि अल्लोपयलोपयोर्याय शब्दादाचारक्विबन्ताद्वरचि तन्निमित्तकाल्लोपे यलोपे च यावर इत्यत्र वरच्प्रत्ययनिमित्तकाल्लोपप्रतिबन्धकीभूतस्याल्लोपस्थानिवद्भावस्य निषेधाय तदावश्यकम्

न वा विश्न इत्यत्र गुणनिषेधार्थकं नङो ङित्त्वं सतुक्कस्य छस्य स्थानेजातस्य शस्य स्थानिवत्त्वेन गुरूपधत्वाल्लघूपधगुणाप्राप्त्या व्यर्थं सद्धलादेशो न स्थानिवदित्यत्र ज्ञापकम्, विश्नादिभ्य आचारक्विबन्तेभ्यो लडादावात्मनेपदार्थं ङकारस्य चारितार्थ्यात्

न च ब्राह्मणमाडवाद्यन् इति सूत्रे केदाराद्यञ्चेत्यतो यञोऽनुवृत्त्यैव सिद्धे यन्ग्रहणस्य क्वचिदन्यतोपि विधानार्थकत्वं तेन पृष्ठादुपसंख्यानं पृष्ठ्यमितिसिद्धमिति भाष्यप्रामाण्येन प्रतिपदिकगतेत्पदघटितधर्मनिमित्तककार्यं तत्प्रकृतिकाचारक्विबन्तप्रकृतिकलटो न भवतीतिकल्पनान्नेदं ङित्त्वफलमिति वाच्यम् प्रतिपादिकवृतिञित्त्वमात्रस्यात्मनेपदाप्रयोजकत्वकल्पनेऽपि सामान्यतः इत्त्वघटितयावद्धर्मनिमित्तककार्याप्रयोजकत्वकल्पने मानाभावात् हल्सन्धौ त्रायस्वेति प्रतीकस्थमनोरमायामनास्थासूचकवाकारेण, तत्रैवाभिमानपददानेन शब्दरत्नकृता च विशेषापेक्षज्ञापनस्य सूचनाच्च । ब्राह्मण्यादिभ्य आचारक्विबभावकल्पनेन तद्भाष्यस्य सौष्ठवाच्च यजतेः क्विपि सम्प्रसारणे इच्छब्दाद्धलन्तेभ्य आचारक्विबभावस्य लिङ्मात्रे कल्पनेन आचारक्विपि नङि इज्ञ इत्यत्र गुणनिषेधेन चारितार्थ्याच्च ।

नापि युष्माकमित्यत्रान्त्यलोपपक्षे भाविनः सुटो निवृत्तये क्रियमाणः स-

सुट्कनिर्देशो हलादेशस्य स्थानिवत्त्वेन सुटोऽप्रवृत्त्या व्यर्थः सद् हलादेशो न स्थानिवदित्यत्र ज्ञापक इति वाच्यम् पूर्वविधावित्यनित्यपञ्चमीसमासमाश्रित्य सूत्रैकदेशप्रत्याख्यानस्यायुक्तत्वात् ।

ननु धिनोतीत्यादौ गुणनिषेधाय क्रियमाणमकारविधानं हलादेशस्य स्थानिवत्त्वाभावे ज्ञापकं संज्ञाशब्दानामर्धमात्रिकत्वेन प्रक्रियालाघवेन च वलोपविधानेनैव सिद्धेः,

न च धिनोति पचेति सततं यत्राभिधीयते सा धिनोतिपचा तत्संबोधने धिनोतिपचे इत्यत्र वलोपविधाने तस्य स्थानिवत्त्वेन नकारवकारात्मक संयोगे परे गुरुसञ्ज्ञायां गुरोरनृत इति प्लुतः स्यात् अकारं विधाय लोपकरणे तु नेति विशेष इति वाच्यम् अकारविधानेऽपि परम्परास्थानिवत्त्वस्य दुर्वारत्वात् संयोगसंज्ञायाः पूर्वपरोभयविधित्वेन तत्र स्थानिवत्त्वाप्राप्तेश्चेति चेन्न—

वलोपस्य उप्रत्ययसंनियोगशिष्टत्वेन परनिमित्तकत्वाभावात् ।

परस्मिन्सत्येव य आदेश इत्यर्थेन वव्रश्चेत्यत्रेव प्रकृतेऽपि तद्भावभाविता-मात्रेण परनिमित्तकत्वोपपादने तु ज्ञापनोत्तरमपि अकारविधानस्य स्वांशे चारितार्थ्याभावः वलोपेऽपि न धातुलोप इति गुणनिषेधेनैव सिद्धेः ।

न च नधातुसूत्रं भाष्ये प्रत्याख्यातमिति वाच्यम् एवमपि ज्ञापकत्वस्य पाक्षिकत्वापत्तेः 'परस्मिन्' ग्रहणस्य द्विपदिकेति प्रत्युदाहरणपरभाष्येण तद्भाव-भावितामात्रेण निमित्तत्वानाश्रयणाच्च वव्रश्चेत्यत्रतु अभ्यासकार्याणां द्वित्व-प्रयोजकप्रत्ययनिमित्तत्वमितिनियमात्परनिमित्तत्वं बोध्यम् अत एव भाष्ये ज्ञा-पकमनुपन्यस्यव अज्मात्रस्थानिकादेश इत्यर्थ आश्रित इति चेदत्र केचित्—

यून इत्यत्रान्त्यस्य यणः पूर्वं संप्रसारणमिति निषेधप्रतिबन्धाय स्थानि-वत्त्वस्य दुर्वारतया निषेधाप्राप्त्या पूर्वयणः सम्प्रसारणाप्रवृत्त्या न सम्प्रसारण इति सूत्रस्यैव हलादेशस्य स्थानिवत्वाभावज्ञापकत्वसम्भवः भाष्ये ज्ञापका-नुपन्यासश्च औत्सर्गिकविषये ज्ञापकानावश्यकत्वाभिप्रायेणेति बोध्यम् ।

अन्ये तु अज्झलादेशस्य स्थानिवत्त्वाभावं ज्ञापकेन साधयित्वा अच एवा-देश इति फलितोक्तिरिति वदन्ति ।

तेषामयमभिप्रायः यदि अज्झलादेशः स्थानिवत्स्यात्तर्हि दीधीवेवीटामि-त्यत्र इङ्ग्रहणं व्यर्थं स्यात् टिलोपस्य स्थानिवत्त्वेनैव गुणाभावसिद्धेः ।

न च अतारिषमित्यत्र तरतेर्लुङि मिपि गुणनिषेधाय इङ्ग्रहणमावश्य-कं प्रत्याख्यातं चेति वाच्यम् लोलुव इत्यत्र यङ्लुकि स्थानिवत्त्वादेव गुणाभा-वसिद्ध्या न धातुलोप इति सूत्रस्यैव अज्झलादेशस्य स्थानिवत्त्वाभावज्ञापक-त्वसम्भवात्

न च नधातुलोप सूत्रस्य भाष्ये प्रत्याख्यातत्वान्नैतद्युक्तमिति वाच्यम्

एवमपि लोलुव इत्यादि साधनाय यस्य हल इति सूत्रविषयकयोगविभागपरभाष्यस्यैव मानत्वात् ।

न च लुकि स्थानिवत्त्वनिषेधान्नैतज्ज्ञापकमिति वाच्यम् एवमपि नाग्लोपीतिसूत्रस्थाग्ग्रहणस्यैव मानत्वसंभवात् तद्धि अग्मात्रलोपे स्थानिवत्त्वेनैव ह्रस्वाभावसिद्ध्या अरराजदित्यत्र स्थानिवद्भावनिषेधार्थं यदि अज्झलादेशः स्थानिवत्स्यात्तर्हि तत्रापि स्थानिवत्त्वेन ह्रस्वाभावसिद्ध्या तद्व्यर्थं स्यात् ।

न च चङ्परनिर्ह्रासविधौ स्थानिवत्त्वनिषेधान्नैतज्ज्ञापकमिति वाच्यम् । णौचङीति भाष्ये अवीवददित्यत्र ण्यन्ताण्णिचि चङ्परनिर्ह्रासविधौ स्थानिवत्त्वनिषेधेऽपि नाग्लोपीतिह्रस्वनिषेधाय णेर्णिच्युपसंख्यानस्यावश्यकत्वप्रतिपादनेन चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्य फलाभावेन तस्य वार्तिकस्यानावश्यकत्वसूचनात् । अत एव अग्मात्रलोपे स्थानिवत्त्वेन निर्वाहं कृत्वा अगनग्लोपे चारितार्थ्यमाशङ्क्य तत्रापि स्थानिवत्त्वेन सिद्धिमङ्गीकृत्याग्ग्रहणप्रत्याख्यानपरं भाष्यं संगच्छते अज्झलादेशस्थानिवत्त्वाभावस्य सिद्धान्ततया तद्भाष्यमेकदेशि इत्यन्यदेतत् ।

न च अग्ग्रहणं तितउशब्दादचक्षाणण्यन्ताल्लुङि टिलोपवृद्ध्यादन्तलक्षणपुक्चङ्णिलोपद्वित्वादिषु कृतेषु अततापदित्यत्र, एटतेः क्विप्येनशब्देन समासे इडेन तेन मनःशब्दस्य समासे मनइडेनशब्दादाचक्षाणण्यन्ताल्लुङि टिलोपे-चङि उपधाकार्यस्य द्वित्वात्प्राबल्येऽपि टिलोपस्य स्थानिवत्त्वेन पूर्वं ह्रस्वाप्राप्त्या यथेष्टं नामधातुष्विति इड्शब्दस्य द्वित्वे हलादिः शेषे सवर्णदीर्घेऽमनईडदित्यत्र, गां ददातीति विग्रहनिष्पन्नगोदशब्दादाचक्षाणण्यन्ताल्लुङि अजुगोददित्यत्र, च ह्रस्वनिषेधाय चरितार्थम्—

आद्ययोः स्थानिभूताभ्यामुकारानूशब्दाभ्यां पूर्वत्वेन दीर्घाकारेकारयोरदृष्टत्वात् तृतीये प्रत्ययलक्षणेन पदत्वेन नपदान्तेतिनिषेधात् स्थानिवत्त्वाप्राप्तेरिति वाच्यम्

एवं तर्हि ठाजादावूर्ध्वं द्वितीयादच इति सूत्रे अज्ग्रहणस्यैव अज्झलादेशस्य स्थानिवत्त्वाभावे ज्ञापकत्वसंभवात् तथा हि षडिक इत्यत्र द्वितीयाद्धलः परस्याङ्गुलिदत्तस्य लोपाभावसंपादनद्वाराऽङ्गुलिदत्तमात्रस्य लोपे यस्येतिचेति अकारलोपे तस्य स्थानिवत्त्वेनाकारान्ते भत्वेऽपि षकारान्ते पदत्वेन जश्त्वार्थमज्ग्रहणम् अज्झलादेशस्य स्थानिवत्त्वे तु अङ्गुलिदत्तस्य लोपेऽपि स्थानिवत्त्वेन जश्त्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव ।

वस्तुतस्तु अज्ग्रहणाभावेऽङ्गुलिदत्तस्य लोपे षडिक इति स्यात् अज्ग्रहणसत्त्वे तु ङ्गुलिदत्तस्य लोपे स्थानिवत्त्वेनाकारलोपाभावे षडेक इतीष्यते इत्यस्यैवाज्ग्रहणफलत्वं वक्तुं शक्यम्, किं च षडुमादत्तशब्दाट्ठचि अज्ग्रहणसत्त्वे माद-

त्तशब्दस्य लोपे तस्य स्थानिवत्त्वेन ओर्गुण इति गुणाभावे उगन्तत्वात्कादेशे षड्क इतीष्यते अज्ग्रहणाभावे षडिक इति स्यात् एवं च नेदमज्ग्रहणं तत्र मानमिति ध्येयम् ।

एतेन वाचिक इत्यत्र शीर्दत्तस्य लोपे जश्त्वापत्तिवारणाय कृतमेकाक्षरपूर्वपदानामिति वार्तिकमेवोक्तार्थे मानम् इदानीमाशीर्दत्तस्य लोपेऽपि स्थानिवत्त्वेन अन्तर्वर्त्तिविभक्त्या वाक्शब्दस्य पदत्वेन जश्त्वस्य दुर्वारत्वादित्यपास्तम्

वार्तिकाभावे वागेकस्य तत्सत्त्वे तु वागिकस्य सिद्ध्या फले विशेषसत्त्वेन ज्ञापकत्वानुपपत्तेरित्यलम् ।

अन्ये तु यून इत्यादौ परयणः पूर्वं संप्रसारणेऽपि तस्य स्थानिवद्भावेन संप्रसारणपरत्वाभावान्न संप्रसारण इत्यस्य वैयर्थ्येन हलादेशोन स्थानिवदिति कल्पनसंभवेनाज्ग्रहणमज्मात्रस्थानिकादेशस्य स्थानिवत्त्वार्थमितिवदन्ति ।

## अच एवादेश इत्यर्थफलम् ।

ननु अज्भलादेशस्य स्थानिवत्त्वे को दोष इति चेद् मरुतमाचष्टे इति विग्रहे णिचि टिलोपे तस्य स्थानिवत्त्वेनादुपधत्वाभावेन वृद्ध्यभावे मारयतीत्यस्यासिद्धिरेव दोष इत्यवधेहि ।

ननु वृद्धेर्लोपो वलीयानित्यत्र मानं नागलोपीति सूत्रस्थागितिप्रत्याहाराश्रयणम् अन्यथा पटुमाचष्टे इत्यादौ णिचि वृद्ध्यावादेशयोष्टिलोपेऽलोपित्वेन सन्वद्भावह्रस्वादिनिषेधसंभवात् प्रत्याहाराश्रयणं व्यर्थं स्यादिति णौचङीति सूत्रे कैयटेनोक्तम् तन्न संगच्छते मरुदादिशब्देभ्यो णिचि सन्वद्भावादिनिषेधाय प्रत्याहाराश्रयणस्यावश्यकत्वादिति इदुदुपधेभ्यो णिचोऽनभिधानमावश्यकमिति मारयतीति फलं न सम्यक् ।

न च स्रग्विन् शब्दाण्णिचि स्रजयतीति प्रयोगस्थापनपरटेरितिसूत्रस्थकैयटेन विरुद्धत्वादुपेक्षणीयोऽयं कैयट इति वाच्यम् तत्र विन्लुक्यङ्गवृत्तन्यायेन वृद्ध्यभावेन लुङि ह्रस्वे तदभावे वा फले विशेषाभावेन तदभावे ततोऽपि णिजभावकल्पने मानाभावात्, इतो णेरभावे लुग्विधायके विन्ग्रहणवैयर्थ्यापत्तेश्च विन्विषये मतोः सत्त्वेन लुकैव स्रजिष्ठ इत्यस्य सिद्धेः विनन्तात्तु नेष्ठनादिः अजादी गुणवचनादेवेत्युक्तेरिति चेन्न—

णौचङीति कैयटप्रामाण्येन लुङि इदुदुपधेभ्यो णिचोऽनभिधानेऽपि अन्यत्रानभिधाने मानाभावेन मारयतीति फलस्य सौष्ठवात् ।

न च इदुदुपधप्रातिपदिकप्रकृतिकण्यन्तातिरिक्तत्वेन लुङ्विधायकनानाशास्त्रे संकोचापेक्षया प्रातिपदिकाद्धात्वर्थे इत्यत्र संकोचे लाघवेन सामान्यत एवानभिधानकल्पनमुचितमिति वाच्यम् तदा मरुच्छब्दाण्णिचि मारयतीति रूपसिद्धिरज्भलादेशस्य स्थानिवत्त्वाभावफलमवगन्तव्यमित्यदोषात् ।

नन्वत्र णिचि परत्वाद्वृद्धौ सत्यां टिलोपे वृत्रहयतीत्यत्रेव लक्ष्ये लक्षण-न्यायेन पुनर्वृद्ध्यप्राप्त्या नेदं फलं सम्यग्

न च वृद्धेर्लोपो बलीयानिति न्यायेन पूर्वं टिलोपे फलं सम्यगेवेति वा-च्यम् टिलोपबलवत्त्वप्रतिपादकभाष्यस्य नित्यत्वमूलकबाधकत्वतात्पर्यकतया प्रकृते कृताकृतप्रसङ्गमात्रेण नित्यत्वरूपबलस्य वृद्धिटिलोपयोरुभयोरपि स-त्त्वेन परत्वाद् वृद्धेः पूर्वं दुर्वारत्वात् । अत एव श्रायमित्यस्य सिद्धिः अन्यथा श्रीशब्दादणि वृद्धेर्लोपस्य बलवत्त्वेन यस्येति चेतीकारलोपे तदसिद्धिः स्पष्टैव

न चैतस्य नित्यत्वमूलकत्वेऽगितिप्रत्याहाराश्रयणज्ञापकोपन्यासासङ्गति-रिति वाच्यम् क्वचित्कृताकृतप्रसङ्गमात्रेण नित्यत्वाश्रयणमिति बोधयितुमेव तथोक्तत्वात् ।

एतेन मारयतीत्युपलक्षणं भवन्तमाचष्टे भावयतीत्यस्येति सदाशिवभट्टो-क्तमप्यपास्तमिति चेन्न—

मराच्छब्दाण्णिचि पूर्वं वृद्ध्यप्राप्त्या टिलोपे मारयतीत्यत्र वृद्धिसिद्धेः फल-त्वसंभवात् ।

ननु दूरशब्दाण्णिचि दवयतीत्यत्र वृद्ध्यभाववारणपरटेरिति सूत्रस्थभा-ष्यप्रामाण्यात् प्रातिपदिकप्रकृतिकणिज्निमित्तकार्यप्रयोज्योपधात्ववतो वृद्ध्यभा-वकल्पनया नेदं फलमुचितम् ब्रूधातोर्णिचि वच्यादेशे वाचयतीत्यत्र वृद्ध्युप-पत्तये प्रातिपदिकप्रकृतिकेतिणिचो विशेषणम् ।

न चैवं स्रग्विणमाचष्टे स्रजयति युवानमाचष्टे कनयतीत्यत्राङ्गवृत्तपरिभा-षया वृद्धिवारणपरटेरिति सूत्रस्थकैयटासंगतिः स्रजयतीत्यत्र 'संज्ञापूर्वको वि-धिरनित्य' इति वृद्धिवारणपरकौमुद्यसंगतिः तदुभयमनादृत्य दव्रयतीति भा-ष्यप्रयोगात् इष्ठवदित्यनेन क्वचिदभावस्याप्यतिदेशस्वीकारेण वृद्ध्यभावसाध-नपरशेखरासंगतिश्चेति वाच्यम् उपायस्योपायान्तरादूषकत्वेनादोषात्

न च पटयति लघयतीति प्रकृतसूत्रोदाहरणपरभाष्यप्रामाण्येन लोपेतरका-र्यग्रहणेन न फलासंगतिरिति वाच्यम् दत्तोत्तरत्वात् एवं निवेशो ह्रस्वशब्दाण्णि-चि वलोपे ह्रसयतीत्यत्र वृद्ध्यापत्तेश्च किच्चादुपधाद्विहिते ञ्णिति वृद्धिविधा-नान्नेदं फलं युक्तं राग इत्यत्र वृद्ध्यापत्तिस्तु न घञि चेत्यत्र विषयसप्तम्याश्रय-णादितिचेन्न—

ऋच्छतीति ऋट् ततः पूव बहुचि बहुऋट् ऋत्यक इति प्रकृतिभावे णिचि-टिलोपेऽवशिष्टस्यवहोर्णिज्निमित्तकवृद्धौ वाहयतीति भवति अज्झलादेशस्य स्था निवत्त्वेतु वृद्ध्यभावापत्तिरतस्तद्वारणाय अच एवादेश इत्यर्थावश्यकत्वात् ।

यत्तु चेच्यः नेन्यः चेक्रियः लोलुवः पोपुवः इत्यादिषु अच्प्रत्ययनिमित्तक-स्य यङ्लुकः स्थनिवत्त्वाभावाद्यणादीनां फलानां सद्भावइति तन्न—

न धातुलोप इत्यस्य प्रत्याख्यानाय अतो लोपोयस्य च, हलः इति योगं विभज्य द्वितीययोगेऽत इत्यनुवर्त्य लुग्बाधकं यङोऽकारस्य लोपं विधाय तस्य स्थानिवद्भावेन वारणं भाष्यकृता कृतमिति न तन्नाज्झलादेशोऽपितु अज्मात्रस्थानिक एव तस्य स्थानिवद्भावेऽपि यणादीनां प्रवृत्तौ बाधकाभावात् ।

केचित्तु प्रियशब्दस्य यशब्देन समासे प्रिययशब्दादाचारक्विबन्तात्कर्तरि क्विप्यल्लोपटिलोपयोः ह्रस्वस्येति तुक् न चाल्लोपस्य स्थानिवत्त्वं पदान्तविधौ तन्निषेधात् ततः प्रियच्छब्दादाख्यानणिचि टिलोपः न चैतस्मिन्कर्तव्येऽल्लोपस्य स्थानिवत्त्वं अतः स्थनिभूतादचः पूर्वत्त्वाभावेन स्थानिवत्त्वाप्राप्तेः ततः क्विपि णिलोपयलोपयोः प्रिशब्दादचारक्विबन्ताल्लटि तिपि शपि तत्र गुणे कर्तव्ये टेरतो लोपस्य न स्थानिवत्त्वमज्झलादेशत्वात् गुणात्परत्वादचो ञ्णितीति वृद्धिस्तु न वाच्या तस्मिन्कर्तव्ये परस्थितक्विन्निमित्तकयलोपस्य वहिरङ्गतयाऽसिद्धत्वेन वृद्धेरप्राप्तेः ।

न च नाजानन्तर्य इति निषेधः, ञ्णितः प्रत्ययस्याङ्गविशेषणत्वेनाचोन्यानन्तर्यनिमित्तकत्वाभावात् गुणे तु नासिद्धो यलोपः ततोपि वहिर्भूतशब्निमित्तकत्वात् नापि गुणे कर्तव्ये प्राथमिकोऽल्लोपः स्थानिवत् परपदस्थाजादेशत्वेन न पदान्तेति निषेधादिति प्रयतीति फलं वदन्ति ।

अन्ये तु भीधातोः घञर्थे के इयङि भियस्तमततीतिभियात् तमाचष्टे णिचि क्विपि णिलोपयलोपेषु शिष्टस्य भीत्यस्य प्रत्ययलक्षणेन णिच्परे वृद्धौ भैरितिभवति अज्झलादेशस्य स्थानिवत्त्वे तु नैतत्सिध्येत् नचयलोपस्य वहिरङ्गासिद्धत्वम् नाजानन्तर्य इति निषेधादिति प्राहुः ।

## परस्मिन्निति किम् । युवजानिरिति ।

युवतिर्जाया यस्येति विग्रहे समासे 'जायाया निङ्' इति आकारस्य निङादेशे तस्य स्थानिवत्त्वेन यलोपो न स्याद्वल्परत्वाभावात् परस्मिन्ग्रहणसत्त्वे तु निङादेशस्य परनिमित्तकत्वाभावेन स्थानिवत्वाप्राप्त्या वलि लोपः सिध्यति ।

न च परस्मिन्ग्रहणाभावेऽपि यलोपे कर्तव्ये नपदान्तेति स्थानिवत्त्वनिषेधान्नेदं दूषणमिति वाच्यम् स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदिति वार्तिकवलेन प्रकृते निषेधाप्रवृत्तेः ।

ननु जायाया निरिति न्यस्य जायाशब्दस्य यो या तस्य निरित्यर्थेन युवजानिरित्यस्यसिद्ध्या परस्मिन्ग्रहणं व्यर्थ—

न च यथान्यासे जायाशब्दादाचक्षाणण्यन्तात्क्विपि निष्पन्नजाशब्दस्य युवतिशब्देन बहुव्रीहौ जाशब्दस्यैकदेशविकृतन्यायेनानुमानिकस्थान्यादेशभावेन वा जायाशब्दत्वान्निङादेशे युवज्ञिरित्यस्येष्टतया इदानीं तस्यासिद्धिप्रसङ्ग इति वाच्यम् णिलोपस्य स्थानिवत्त्वेन जायान्तोत्तरपदकबहुव्रीहेरभावेन तत्र निङा-

देशस्यानिष्टत्वादिति चेन्न—

जायाशब्दादाचक्षाणण्यन्तात्क्विपि जाशब्दस्येशब्देन समासे जेशब्दस्य युवत्यादिभिः समासे एकारस्य निङादेशे युवज्ञिरित्यस्यासिद्धिप्रसङ्गात् । अत्र णिलोपस्य स्थानिवत्त्वं तु न, एकारस्य स्थानिभूतादचः पूर्वत्वेनादृष्टत्वात् ।

एतेन जायाया जानिरिति न्यासोऽप्यपास्तः ।

न च जायाशब्दान्तस्य निगागमोऽन्यस्य लोपश्चेत्यर्थको जायाया निग्लोपश्चेत्येवास्तु तथा च यलोपेऽलोपस्य न स्थानिवत्त्वसंभवः नपदान्तेति निषेधात् नापि युवज्यादेरसिद्धिरिति वाच्यम् ङित्त्वस्य आचारक्विप्यात्मनेपदार्थत्वात् परस्मिन्ग्रहणापेक्षया लाघवाभावाच्च ।

न च लोपो व्योर्निङ्वलोरिति न्यासेन निङ्ग्रहणसामर्थ्यात् स्थानिवत्त्वाभावकल्पनेन यलोपे युवजानिरित्यस्य सिद्धिरिति वाच्यम् अतिरिक्तस्य निङ्ग्रहणस्य तज्ज्ञापकत्वस्य चाश्रयणापेक्षया परस्मिन्ग्रहणकरणस्यैव युक्तत्वात् । प्रकृतन्यासेन तत्सिद्ध्याग्रहे तु द्वौ द्वौ पादौ ददातीति विग्रहे पादशतस्येति वुन्प्रत्ययसन्नियोगेनाकारलोपे तस्य स्थानिवत्त्वेन पदादेशानापत्तिः परस्मिन्ग्रहणाभावे दूषणं बोध्यम् ।

नन्वत्र यस्येतिचेत्येव लोपे सिद्धे पुनर्लोपविधानसामर्थ्यात् स्थानिवत्त्वं न भविष्यति—

न च पादशब्दस्येशब्देन समासे द्विपादेशब्दादेकादेशस्य पूर्वान्तवत्त्वेन पादशब्दान्ताद् वुनि एकारलोपविधानाय तत्सार्थकमिति वाच्यम् पुनर्लोपविधानेनापत्तिवारणपरभाष्यप्रामाण्येनेदृशानामनभिधानादिति परस्मिन्ग्रहणं व्यर्थमेवेति चेन्न—

वैयाघ्रपद्यइत्यत्र पादस्येति विहितलोपस्य स्थानिवत्त्वापत्त्या पदादेशानुपपत्तेरेव दोषत्वात् । नचात्रापि यस्येति चेति सिद्धे पुनर्लोपविधानं स्थानिवत्त्वाभावायेति वाच्यम् व्याघ्रपादित्यत्र चारितार्थ्यात् ।

न च पदादेशवैयर्थ्यम्, द्विपदिकेत्यत्र चारितार्थ्यात् पादयतेः क्विपि क्वौलुप्तमिति स्थानिवत्त्वनिषेधेन शसि पद इत्यत्र चारितार्थ्याच्च ।

ननु 'पादस्य पादहस्त्यादिभ्य' इति न्यासेन न दोषः न च पादशब्दादाचक्षाणण्यन्तात्कौ व्याघ्रादिभिर्बहुव्रीहौ दकारलोपाय लोपविधानं सार्थकमिति वाच्यम् णिलोपस्य स्थानिवत्त्वेनादोषादिति चेन्न—

एवं सति पादः पदित्यत्र लक्षणप्रतिपदोक्तरिभाषया प्रतिपदोक्तस्यैव पादोग्रहणापत्तौ द्विपदिकेत्यादौ पदादेशानापत्तेः ।

ननु 'पादस्य दस्य दशहस्त्यादिभ्य' इति न्यासेन शित्वात्सर्वस्य दस्य दादेशेनाज्झलादेशत्वान्नात्र स्थानिवत्त्वप्रसक्तिरिति चेन्न—

आदीध्ये इत्यत्र टेरेत्वस्य स्थानिवत्त्वेनेत्वाद्यणादेशं बाधित्वा यीवर्णयोरिति लोपापत्तेः ।

ननु छन्दसि दृष्टानुविधानात् पकारसाहचर्याच्च श्रूयमाणे इकारे लोपविधानाच्च नात्र दोष इति व्यर्थं परस्मिन्ग्रहणमिति चेन्न हरिणेत्यत्र स्थानिवत्त्वेन यणापत्तेरेव दोषत्वात् ।

न च संनिपातपरिभाषया निर्वाहः, सन्धिकार्ये तदप्रवृत्तेः ।

ननु आङि नुगस्त्रियामिति न्यासान्नात्र दोष इति चेत्तर्हि अस्मै इत्यत्र स्मायादेशस्य स्थानिवत्त्वेनाच्परत्वाद्धलिलोपानुपपत्तेः ।

न च अनाप्यक इत्यत्र अन टौसोरिति न्यस्य हलि लोप इत्यत्र आपि लोप इति न्यस्य हल्ग्रहणत्यागान्नात्र दोष इति वाच्यम् रामायेत्यत्र यादेशस्य स्थानिवत्त्वेनायन्नादित्वाद् दीर्घानुपपत्तेः दीर्घविधौ निषेधस्तु लोपाजादेश एवेति न तेनास्य निर्वाहः वित्त इत्यत्र शब्लुकः स्थानिवत्त्वेन गुणापत्तेश्च लुकि स्थानिवत्त्वनिषेधस्तु लुकि परे अजादेशस्यैवेति न तेन सिद्धिः जुहुत इत्यत्र स्थानिवत्त्वेन गुणापत्तेश्च

न च ज्ञाने इत्यत्र यस्येति चेति लोपाभावाय क्रियमाणेन श्नोऽङःश्यामिति वचनसामर्थ्येनापरनिमित्तकोऽजादेशो न स्थानिवदिति ज्ञापनेन सिद्धौ परस्मिन्ग्रहणं व्यर्थमिति वाच्यम् वार्तिकप्रतिपाद्यार्थस्य सूत्रकृताऽज्ञाततया तेन सूत्रात्तरखण्डनस्यानुचितत्वादित्यलम् ।

केचित्तु लुकि परे न स्थानिवदित्यर्थकस्य लुकि न स्थानिवदित्यस्याप्रवृत्त्या शपः स्थानिवत्त्वात् यौतीत्यादौ उतोवृद्धिरित्यस्याप्रवृत्त्या एतदारम्भसामर्थ्यादपरनिमित्तकाजादेशो न स्थानिवदिति ज्ञापनेनैव सिद्धौ परस्मिन्ग्रहणं व्यर्थमुक्तार्थानुवादकं वेति वदन्ति ।

## पूर्वस्यैव विधौ स्थानिवत्त्वम्

अचः परस्मिन्पूर्वविधाविति सूत्रे पूर्वस्येति षष्ठ्या 'कार्ये कर्तव्ये' इत्याद्येरेण पूर्वस्य विधावित्यर्थलाभसम्भवे विधिग्रहणं व्यर्थं सत् पूर्वस्यैव विधौ स्थानिवदित्यर्थलाभार्थम् ।

यद्यपि विधिग्रहणं तन्त्रेण समासद्वयलाभार्थमित्यपि वक्तुं शक्यम् तथापि पूर्व इति वक्तव्ये 'प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्तीति न्यायेन समासद्वयप्रतिपाद्यार्थलाभसम्भवः ।

न च विधिमात्रे स्थानिवत्त्वं यथा स्यादिति प्रयोजनान्तरं भाष्ये प्रतिपादितम् किं च विधाविति योगविभागेन स्थानिवदेव यथा स्यादिति नियमात्स्वाश्रयप्रयुक्तकार्यनिवृत्तिरपि भवतीति कैयटविवरणयोरुक्तमिति कथमस्य पूर्वस्यैव विधावित्यर्थज्ञापकत्वमिति वाच्यम् पूर्वसूत्राद्विधावित्यनुवर्त्त्य वाक्यभे-

देन व्याख्यानादुक्तार्थलाभसम्भवाद्विधिग्रहणसामर्थ्येन पूर्वसम्बन्धिन्येव विधावित्यर्थकरणे बाधकाभावात्स्पष्टं चेदं कौस्तुभे इति ।

केचित्तु अम्भक्षन्यायेन पर्याप्तिलाभस्य सर्वत्रौत्सर्गिकतया पूर्वस्यैव विधावित्यर्थे न ज्ञापकस्योपयोग इति वदन्ति ।

ननु पूर्वसम्बन्धिन्येव विधौ स्थानिवत्त्वं न तु पूर्वपरयोर्विधावित्यर्थस्य किम्फलमिति चेदुच्यते—

ऋधातोः ऋच्छत्यृतामित्यत्र ऋधातोः प्रश्लेषेण गुणे तस्य अकः सवर्ण इति दीर्घे स्थानिवत्त्वापत्त्या आरतुरित्यसिद्ध्यापत्तेः ।

न च नपदान्तेति दीर्घविधौ स्थानिवत्त्वनिषेधान्नेदं फलमिति वाच्यम् स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः ।

ननु ऋच्छत्यृतामित्यत्र ऋकारप्रश्लेषो मास्तु ऋ ऋ अतुस् इति स्थिते दीर्घ बाधित्वा वर्णादाङ्गमिति उरदत्वे अत आदेरिति दीर्घ उत्तरखण्डे यणाऽऽरतुरित्यस्य सिद्ध्या नेदं निरुक्तार्थफलम् ।

न च आ ऋ अतुस् इति स्थिते परत्वात्पूर्वस्थितनिमित्तकत्वेनाऽन्तरङ्गत्वाच्चाद्गुणे अरतुरिति स्यात् पुनरत आदेरिति दीर्घस्य तु न प्रवृत्तिः लक्ष्ये लक्षणन्यायात् ऋकारप्रश्लेषे तु पूर्वं गुणे सवर्णदीर्घे आरतुरिति सिध्यति तदर्थं निरुक्तार्थावश्यकत्वमिति वाच्यम् अत आदेरित्यस्य पररूपापवादत्ववदानृजे इत्यत्र गुणस्यापि प्राप्त्या गुणापवादत्वमप्यवश्यमभ्युपेयम् एवं च आरतुरित्यत्र गुणपररूपान्यतराप्राप्तियोग्येऽचरितार्थस्य क्षते चरितार्थस्य अत आदेरिति दीर्घेण तक्रन्यायेन गुणस्य बाधेन दीर्घोत्तरं गुणाप्राप्त्या यणि आरतुरित्यस्य सिद्धिसम्भवादिति चेन्न ।

अत्रेर्लिटि क्वसौ ऋवस् इति स्थिते कृतद्विर्वचनैकाचोऽभावेन वस्वेकाजाद्वसामित्यस्याप्रवृत्त्या द्वित्वे चैकाचोऽभावेन तदप्राप्त्या उरति अत आदेरिति कार्ये उत्तरत्र ऋच्छत्यृतामिति गुणे सवर्णदीर्घे कृतद्विर्वचनैकाचः सम्भवेनेटि आरिवानित्यर्थम् ऋच्छत्यृतामित्यत्र ऋकारप्रश्लेषस्यावश्यकतया निरुक्तार्थस्य आरतुरित्यर्थमावश्यकत्वात् ।

न च अभ्यासकार्ये तदुत्तरखण्डाजादेशस्य स्थानिवत्त्वनिषेधः अभ्यासस्यासवर्णे इति सूत्रारम्भसामर्थ्येनाश्रयणीयः अन्यथा उवोखेत्यादौ गुणस्य स्थानिवत्त्वेन सवर्णपरत्वादुवङोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव एवं च आरतुरित्यत्र दीर्घे गुणस्य स्थानिवत्त्वनिषेधेन दीर्घसिद्ध्या निरुक्तार्थाश्रयणं विफलम्—

नच धर्मिग्राहकमानादभ्यासत्वावच्छिन्नोद्देश्यताके कार्ये एव स्थानिवत्त्वनिषेध इति वाच्यम् कटी इत्यत्र प्रश्लिष्टस्यायतेर्लिटि इयतुरित्यत्रोत्तरखण्डस्थयणादेशस्य स्थानिवत्त्वेनाभ्यासे इकोयणचीति यणापत्तेः ।

न चैतदनुरोधेनाभ्यासपर्याप्तोद्देश्यताककार्य एव स्थानिवत्त्वनिषेधे धर्मिग्राहकमानात्कल्प्यताम् अत एव विव्यतुरित्यत्र उपधायां चेति दीर्घप्रतिबन्धकस्थानिवत्त्वस्य न निषेध इति वाच्यम् अभ्यासकार्य उत्तरखण्डाजादेशो न स्थानिवदित्यस्याः परिभाषात्वेन यथोद्देशपक्षे अभ्यासस्यासवर्णे एतद्देशस्थिततया तद्दृष्ट्या उपधायां चेत्यस्यासिद्धतया तत्र कर्तव्ये तदप्रवृत्त्या पर्याप्तिनिवेशफलाभावात् ।

एतेन एतेर्लिटि ईयतुरित्यत्र यणादेशस्य स्थानिवत्त्वेन सवर्णदीर्घाभावफलमित्यपास्तम् ।

किं च आरतुरित्यत्र ऋ अतुस् इति स्थिते द्वित्वात्परत्वाद् गुणे ततो द्वित्वेऽभ्यासाकारस्य स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवत्त्वाप्राप्त्या निरुक्तार्थस्य नोपयोगः ।

न च द्विर्वचनेऽचीति निषेधः शङ्क्यः, द्वित्वनिमित्ततापर्याप्त्यधिकरणघटकाच्पर्याप्तनिमित्तदलप्रविष्टविषयताकाजादेशस्यैव तेन निषेधात् तन्निषेधेन पूर्वं द्वित्वेऽपि प्रतिपदविधित्वेनान्तरङ्गत्वादपवादत्वाच्च पूर्वं गुणे तत उरति अकारस्यानतिदिष्टादचः पूर्वस्य दुर्वारत्वाच्चेति चेत्तर्हि श्लेष्म३घ्नेत्यत्र संयोगसंज्ञायां कर्तव्यायामल्लोपस्य स्थानिवत्त्वेन गुरुत्वाभावेन प्लुतो न स्यादिति तत्सिद्धिरेव निरुक्तार्थफलमित्यवधीयताम् एवमर्तेर्लुङि आर्च्छदित्यत्र ऋच्छादेशस्य स्थानिवत्त्वेन ऋवुद्ध्याऽऽटश्चेति वृद्ध्यापत्तौ छश्रवणं न स्यात् सुमनायेति क्यङन्तात्क्विपि अल्लोपयलोपयोस्तत औपरे सुमनावित्यत्राल्लोपस्य स्थानिवत्त्वाद् वृद्ध्यनापत्तिः, हयशब्दादाचारक्विबन्तात्कर्तरि क्विपि हशब्दस्येन्द्रशब्देन समासेऽल्लोपस्य स्थानिवत्त्वाद् गुणानापत्तिः पटुशब्दस्यान्शब्देन समासे पट्वन्शब्दाच्छसि पट्वन् इत्यत्र संयोगसंज्ञायां यणादेशस्य स्थानिवत्त्वेन संयोगसंज्ञाभावेन न संयोगादिति निषेधानापत्तिः मम तु पूर्वपरोभयविधिसत्त्वात्स्थानिवत्त्वाप्राप्त्या सर्वं सुस्थमित्यलम् ।

पूर्वविधावित्यत्र तन्त्रम् एकस्य स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधावित्युक्तोऽर्थः । अपरस्य तु विधानं विधिरिति भावे किः सम्बन्धसामान्यषष्ठ्यन्तेपूर्वशब्देन समासः, विधिर्भावः इति पूर्वसम्बन्धिभावे (पूर्वस्य स्थितौ) कर्तव्यायां स्थानिवदित्यर्थः तेन एन्या अपत्यमैनेय इत्यत्र ङीपो लोपस्य स्थानिवत्त्वे नकारस्य स्थितिः अन्यथा सन्नियोगशिष्टन्यायेन नकारस्य निवृत्तिः स्यात् पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यत्र आनुक इव तत्र स्थानिवत्त्वस्य लुकि न स्थानिवदित्यनेन निषेधात् तन्त्रे इदमेव भाष्यं मानम् अन्यथाऽत्र पूर्वत्वेन दृष्टस्य सम्बन्धिनः कस्यचिद्विधेयस्याभावात् स्थानिवत्त्वाप्राप्त्या लुकि न स्थानिवदित्यप्रवर्तनासंगतिः स्पष्टैव ।

अत्र केचित् विल्वकादिभ्यश्छस्य लुगित्यत्र लुग्ग्रहणेन ज्ञापितायाः संनियोगशिष्टपरिभाषायाः धर्मिग्राहकमानेन लुग्विषये एव प्रवृत्तिरिति ऐनेय इत्यत्र तदग्रवृत्त्या पूर्वविधावित्यत्र तन्त्रस्वीकरणं निष्फलम् । अत एव खनतेरी चेति क्यप्संनियोगशिष्टस्येकारस्य गुणेनापायेऽपि खेयमित्यत्र न क्यपोऽपायः, न वा तृतीयशब्दादीकक्प्रत्यये तार्तीयीक इत्यत्र वृद्ध्या सम्प्रसारणस्यापायेऽपि तत्सन्नियोगशिष्टक्यपोऽपायः न वा फलधातोः, क्तप्रत्यये निष्पन्नात्फुल्लशब्दादिञि फौल्लिरित्यत्र वृद्ध्या उकारापाये उकारसंनियोगशिष्टस्य लत्वस्यापायः न चैतेषु गुणादिभिर्विकारेऽपि नापायः इकारादीनाम् 'अनपायोपजनविकारिभिः' इति भाष्येऽपायात्पृथग्विकारस्य परिगणनादत एत लोप एवापायशब्देन गृह्यते इति वाच्यम् एवं तर्हि धिनुत इत्यत्र उप्रत्ययसन्नियोगशिष्टस्याकारस्य लोपेऽपि उकारस्य निवृत्त्यभावस्यैव धर्मिग्राहकमानसिद्धार्थफलत्वादिति तन्न–

सन्नियोगशिष्टन्यायस्य लुङ्मात्रविषयकत्वे वातातीसाराभ्यां कुक् चेत्यनेन कुगागमसंनियोगशिष्टेन्प्रत्यये वातकिशब्दादपत्येऽण्प्रत्यये नस्तद्धित इति टिलोपे तत्सन्नियोगशिष्टस्य कुकोऽपाये इष्टस्य वात इत्यस्यासिद्धिप्रसङ्गात् । धिनुत इत्यत्र तु न दोषः धर्मिग्राहकमानेन सन्नियोगशिष्टप्रत्ययस्यापाये एव तत्प्रवृत्तेः एवं च ऐनेय इत्यत्र सन्नियोगशिष्टन्यायाप्रवृत्तये तन्त्राश्रयणमावश्यकमित्यवधेयम् ।

अन्ये तु नात्र तन्त्रस्योपयोगः विधिशब्दः कर्मसाधन एवास्तु सन्नियोगशिष्टप्रवृत्त्यभावे विधानेव स्थनिवत्त्वेन ऐनेय इत्यादिसिद्धेः,

न च परिभाषायामतिदेशप्रवर्तने मानाभाव इति वाच्यम् परिभाषाविषये चेत स्वानित्यत्रैकदेशविकृतन्यायप्राप्तरुत्वाभावसाधनायाचः परस्मिन्निति स्थानिवत्त्वाप्रवर्तनस्यैव मानत्वात् 'भावसाधनो विज्ञास्यते' इति भाष्ये त्वेकदेशि असिद्धिवत्सूत्रेण सिद्धस्यायन्नासन्नित्यादेः तत्फलत्वेनोपन्यासादिति वदन्ति ।

ननु स्थानिवदित्यस्य कोर्थः स्थानिनि सति यत्कार्यं भवति तदादेशेऽपि भवतीत्यर्थो वा स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्यर्थो वा उभयं वा ।

नाद्यः पटयतीत्यादावेतस्याप्रवृत्त्यापत्तौ स्वतः प्राप्तायाः वृद्धेः प्रसङ्गात् ।

न द्वितीयः स्थानिनि सति अभवन्त्या वृद्धेरादेशेऽप्यनेन वारणात्पटयतीत्यस्य सिद्धावपि निगाल्यत इत्यस्यासिद्ध्यापत्तेः आदेशेऽनेन लत्वस्य प्रवर्तयितुमशक्यत्वात् ।

नाप्यन्त्यः । एकमेकमंशमादायोभयत्र निर्वाहेऽपि देवयतेः क्विपि णिलोपे ऊठिविधिमूठं प्रति स्थानिवत्त्वनिषेधेनोठि अयादेशे सिद्धस्य दयूरित्यस्यासिद्ध्यापत्तेः स्थानिनि णिचि सति उठोऽसत्त्वेनायादेशो न भवतीति स्थानिनि स-

त्यभवतोऽयादेशस्य स्थानिवद्भावने णिलोपेऽभावापत्तेः ।

न च स्थानिधर्ममादेशे आरोप्य यत्कार्यं प्राप्नोति तद्भवति यन्न प्राप्नोति तन्न भवतीत्यर्थः पटयतीत्यत्र लोपादेशे उत्वारोपे वृद्ध्यप्राप्तेः निगाल्यते इत्यत्र स्थानिगतणित्वस्यादेशे लोपे आरोपेण वृद्धेः प्राप्तेः ययूरित्यत्र णिलोपे णित्वारोपेऽपि ऊकारनिमित्तकायादेशस्य प्रतिबन्धकाभावेन सिद्धेश्च न दोष इति वाच्यम् एषो यन्हसतीतिवदेषगमयतीति भवति तत्रैतत्तदोरिति लोपस्य पदचरमावयवत्वाभावेन निषेधप्रवृत्तौ गमादेशस्य स्थानिवद्भावेन हल्परत्वाभावेन लोपाप्राप्त्या हशिचेत्युत्वे गुणे च रूपसिद्धिर्भवति सम्प्रति गमादेशे स्थानिगतेत्वस्यारोपेऽपि गकारे हल्त्वानयनेन सुलोपापत्त्या एषगमयतीत्यापत्तेरेषोगमयतीत्यनापत्तेश्च इयायेत्यत्र स्थानिवद्भानेनायादेशस्येत्वेन सवर्णाच्परत्वाभावेनेयङोऽप्राप्त्याऽभ्यासस्यासवर्णइत्यस्याभ्यासकार्येत्याद्यर्थज्ञापकत्वं परिभाषेन्दुशेखरे त्वार्णपरिभाषायामुक्तं तद्विरोधोऽपि स्यात् अमादेशे स्थानिवत्त्वेनेत्वेऽप्याकारेऽसवर्णच्त्वाहानेरिति चेदत्रोच्यते ।

स्थानी न निवृत्तः आदेशो न जातः इति बुद्धौ यत्प्राप्तं तद्भवति यन्न प्राप्तं तन्न भवतीत्यर्थस्तेन सर्वेष्टसिद्धिरादेशावस्थायां दयूरित्यादावुकारस्य सत्त्वेन णिलोपस्थाने णिरस्त्येवेति बुद्धावप्ययादेशप्राप्ते गमादेशप्राप्तेः गमा देशो न जात इणेवास्तीति बुद्धौ लोपाप्राप्तेश्चेति दिक् ।

## नपदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।

नन्वत्र सूत्रे द्विर्वचनसवर्णानुस्वारदीर्घजश्चरां ग्रहणं व्यर्थमेषां त्रिपादीस्थत्वेन अचः परस्मिन्नित्येतदृष्ट्या असिद्धत्वेन स्थानिवत्त्वाप्राप्तेरिति चेन्न

वतिघटितान्यातिदेशानां त्रिपाद्यां प्रवृत्तिज्ञापनार्थत्वात्तेषां ग्रहणस्य ।

नन्वेवं ज्ञापने वतिघटितान्यातिदेशानां त्रिपाद्यां प्रवृत्तिबोधनेऽपि अचः परस्मिन्नित्यस्य प्रवृत्तेरबोधनेन तेषां स्वांशे चारितार्थ्याभाव इति चेन्न वतिघटितातिदेशानां त्रिपाद्यां प्रवृत्तिरित्यस्यैव ज्ञाप्यशरीरत्वादेवंच अचः परस्मिन्नित्यस्य त्रिपाद्यां प्रवृत्तिवारणाय द्विर्वचनादिग्रहणं चरितार्थम् अन्यग्रहणं तु द्विर्वचनादिनिषेधलब्धफलितार्थपरम् ।

न तु ज्ञाप्यांशप्रविष्टम् एवमन्यत्र धातुग्रहणे तदादिविधिरित्यत्रापि अन्यग्रहणं फलितार्थपरमित्यवेहि अन्यथा तत्रापि स्वांशे चारितार्थ्यं दुर्निरूपं स्यात् ।

नन्वचः परस्मिन्नित्यस्य त्रिपाद्यामप्रवृत्तौ चक्रचत्र इत्यत्र यणः स्थानिवत्त्वाभावेन संयोगादिलोपापत्तिरिति चेन्न कार्यकालपक्षे बहिरङ्गपरिभाषया यणोऽसिद्धत्वेन संयोगादिलोपापत्तिवारणात् । वतिघटितातिदेशानां त्रिपाद्यां

प्रवृत्तिबोधेनैव तस्य द्विर्वचनादौ निषेधेनान्यत्र त्रैपादिके प्रवृत्तिलाभेनादोषाच्च ।

न च ण्यन्तेभ्यः पचयजलिहदुहधातुभ्यः क्विचि पाक्तिः याष्टिः लेढिःदोग्धिरित्यत्र अचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन कुत्वषत्वढत्वघत्वानि न स्युरिति वाच्यम् एतदर्थमेव पूर्वत्रासिद्धे न स्थानिवदिति परिभाषामङ्गीकृत्य द्विर्वचनसवर्णादिग्रहणस्य भाष्ये प्रत्याख्यानात् तादृशपरिभाषामाश्रित्यैव सामान्यत उक्तं शेखरे वतिघटितान्यातिदेशानां त्रिपाद्यां प्रवृत्तिरिति अर्थात् त्रिपाद्यामचः परस्मिन्नित्यस्य न प्रवृत्तिः ।

न चैवं चक्रचत्रेत्यादौ यणः स्थानिवत्त्वाभावे संयोगादिलोपापत्तिरिति वाच्यम् तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वचनेन पूर्वत्रासिद्धे न स्थानिवदित्यस्य निषेधनादोषात् ।

ननु वतिघटिता अतिदेशाः के येषां त्रिपाद्यां प्रवृत्तिः बोध्यते इति चेच्छ्रूयताम् स्थानिवदन्तादिवदाद्यन्तवदित्यादयः । आद्यस्य राम इत्यत्र विसर्गसिद्धिः द्वितीयस्य अमी क्षीरपेणेत्यत्र अदःशब्दत्वैकाज्जुत्तरपदत्वयोरतिदेशेन मीत्वणत्वयोः, सिद्धिः तृतीयस्य हे३ इत्यत्र अणोऽप्रगृह्यस्येत्यनुनासिके कर्तव्ये पदान्तत्वातिदेशेनानुसिकसिद्धिः फलम् ।

ननु राम इति स्थानिवत्सूत्रस्य त्रिपाद्यां प्रवृत्तिफलं न युक्तम् इदुदुपधःस्येति सूत्रेऽप्रत्ययग्रहणेन विसर्गस्य सिद्धत्वादिति चेन्न मेदुरशब्दाण्ण्यन्ताण्णौ मेदुः करोतीत्यादौ षत्वव्यावृत्तयेऽप्रत्ययग्रहणस्य चारितार्थ्यात् ।

वस्तुतस्तु तत्रापि प्रत्ययलक्षणेनैव पदत्वस्यानेतव्यतया तदपि ज्ञापकं किं च मेदुः करोतीत्यत्र र्वोरुपधाया इति दीर्घे षत्वस्य प्राप्तिरेव नेति बोध्यम् ।

ननु प्रत्ययलोपसूत्रस्य वतिघटितत्वाभावात् त्रिपाद्यां प्रवृत्तिर्नस्यात् तथा च हे दार्घोहो निदाघेत्यत्र प्रत्ययलक्षणाभावेन सुप्परत्वाभावेन रोऽसुपि इति रत्व महन्निति रुत्वं बाधित्वा स्यात् सामान्यतोऽतिदेशानां त्रिपाद्यां प्रवृत्तिकल्पने असिद्धं बहिरङ्गमन्तरङ्ग इत्यस्या अपि त्रिपाद्यां प्रवृत्त्यापत्तौ सर्वेषां हरीणां राज्ञः पिपठीषु इत्यत्र षत्वणत्वचुत्वष्टुत्वाप्रसङ्गः अतिदेशसूत्राणां त्रिपाद्यां प्रवृत्तिरिति कल्पने तु व्यपदेशिवदेकस्मिन्नित्यस्य त्रिपाद्यामप्रवृत्तावचैषीदित्यत्रप्रत्ययावयवसकाराभावेन षत्वाप्रसङ्गः व्यपदेशिवदिति परिभाषामश्रित्य अद्यन्तवदित्यस्य प्रत्याख्याने हे अँ इत्यत्रानुनासिकाप्रसङ्गश्च न पदान्ताः परेऽणःसन्तीति भाष्येण पदान्ते इत्यस्य आवश्यकत्वेन तस्य व्यपदेशिवद्भावाधीनत्वात् । वतिशब्दास्य अर्थपरत्वमङ्गीकृत्यप्रत्ययलक्षणसूत्रस्य त्रिपाद्यां प्रवृत्त्युपपादेन तु तद्वदन्तरङ्गपरिभाषाया अपि त्रिपाद्यां प्रवृत्तेर्दुर्निवारतया पु-

वोक्तदोषानुषङ्गादिति चेन्न प्रत्ययलक्षणसूत्रे स्थानिवदित्यस्यानुवृत्त्या तस्यापि वतिघटितत्वेनादोषात् ।

नन्वेवमबान्धामित्यत्र झलो झलीति सलोपस्य प्रत्ययलक्षणेन भष्भावापत्तिः एकोचोवशोभषिति सूत्रे ध्वसाहचर्येण सादिप्रत्ययस्यैव ग्रहणादिति चेन्न—

तत्र ध्वशब्दस्यानर्थकत्वेन प्रत्ययत्वाभावेन तत्साहचर्येण सादेः प्रत्ययस्यैव ग्रहणे मनाभावेन सादित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तिरिति ।

केचित्तु वाहऊठसूत्रस्थोठ्ग्रहणज्ञापिताया वहिरङ्गपरिभाषायाः सापादिकत्वेन तद्दृष्ट्या त्रिपाद्या असिद्धत्वात्त्रिपाद्यामप्रवृत्तिः व्यपदेशिवत्परिभाषायास्तु लोकसिद्धत्वात्त्रिपाद्यामपि प्रवृत्तिरिति अतिदेशसूत्राणां त्रिपाद्यां प्रवृत्तिरिति ज्ञापने न कापि क्षतिरिति तन्न ।

तथा सति नोत्तरपदेऽनुदात्तादाविति पृथिव्यादिपर्युदासज्ञापितायाः स्वरविधौ व्यञ्जनमविद्यमानवदित्यस्याः त्रिपाद्यामप्रवृत्तिप्रसङ्गे अश्वशब्दे उदात्तादनुदात्तस्य स्वरित इत्यस्य व्यञ्जनव्यवधानात्स्वरितत्वानापत्तेः ।

नन्वेवमपि प्रातिपदिकग्रहणपरिभाषाया वतिघटित्वाभावात्त्रिपाद्यामप्रवृत्तौ अयस्कुम्भी इत्यत्र सत्वप्रसङ्ग इति चेन्न लक्ष्यानुरोधात् प्रातिपदिकवदित्येवं पाठस्य कल्पनीयत्वात् ।

केचित्तु द्विर्वचनसवर्णादिग्रहणेन आदेशे स्थानिवृत्तिधर्मारोपिकाणां परिभाषणां त्रिपाद्यां प्रवृत्तिस्वीकारेण प्रत्ययलोपे इति परिभाषास्त्रिपाद्यां प्रवृत्तौ बाधकाभावः अन्तरङ्गपरिभाषा तु न तादृशीति न तस्यास्त्रिपाद्यां प्रवृत्तिरोधनमिति तन्न ।

स्वरविधावित्यस्या अपि त्रिपाद्यामप्रवृत्त्यापत्तेरित्यलम् ।

इदमत्रावधेयम् भाष्ये पूर्वत्रासिद्धे न स्थानिवदित्याश्रित्य वरेयलोपस्वरवर्जं द्विर्वचनादयः प्रत्याख्याता इति प्राचामभिमतम् इति आरम्भप्रत्याख्यानयोः फलैक्याय सूत्रारम्भेऽपि त्रैपादिक एव दीर्घे स्थानिवत्त्वं निषिध्यते अत एव जनावित्यादौ एकादेशे जाते नान्तलक्षण उपधादीर्घ एकादेशस्य स्थानिवत्त्वेन दीर्घाभावः सिद्धः सापादिकस्यापि ग्रहणे तु दीर्घे स्थानिवत्त्वनिषेधान्नान्तत्वेन दीर्घः स्यादेवेति तेषामाकूतम् ।

शेखरकृतस्तु वर्ज्यकोटौ दीर्घोऽप्युपलक्षणीय इत्युभयविधदीर्घस्थानिवत्त्वं निषिध्यते न चैवं जनावित्यस्यासिद्धिः, स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः अत एव चिरणमुलोरिति सूत्रे चिरणमुलोर्णिज्व्यवेतानां यङ्लोपे चोपसंख्यानमिति वार्तिकस्य शमयन्तं प्रयोजितवान् अशमि अशामि शमं शमं शामं शामं शंशमयतेः अशंशमि अशंशामि शंशमं शंशमं शंशामं शंशामम् इति

प्रयोजनमुक्त्वा स्थानिवद्भावस्य दीर्घविधौ निषेधेन सिद्धे वार्तिकं न कर्तव्यमिति भाष्योक्तं संगच्छते अतो दीर्घविधौ सापादिकानामपि ग्रहणं न तु त्रैपादिकानामेव प्रतिदीव्नः इत्युदाहरणं तु अशोकवनिकान्यायेन । अत एव ह्रस्वविधानमपि चरितार्थम्, अहिडि अहीडीतिरूपद्वयार्थं च ह्रस्वग्रहणमिति वदन्ति

अन्ये तु णाविति जातिपरो निर्देश इत्यङ्गीकृत्य प्राचीनैर्यङ्लुकश्छान्दसत्वानङ्गीकारेण यङ्लुगन्ताण्णमुलि शंशामं यङन्तात् शंशममिति रूपद्वयं संसाध्य दीर्घग्रहणं प्रत्याख्येयमिति वदन्ति

विधानं विधिरिति भावे किः पदान्तस्य विधिः पदान्तविधिरिति कर्मषष्ठ्या समासः अन्तशब्दश्चरमावयववाची पदचरमावयवकर्मके विधाने इति तदर्थः । न तु विधीयते इति विधिरिति कर्मकिप्रत्ययान्तेन संबन्धसामान्यषष्ठ्या पदचरमावयवसंबन्धिविधेये इत्यर्थः वृत्तं वेति वातीति वा कर्तृक्विबन्ताण्णिचि विचि वृत्तव् इत्यत्र पदचरमायववकारसंबन्धिविधेये लोपोव्योर्वलीति लोपे स्थानिवत्त्वनिषेधेन वकारलोपापत्तेः । मम तु लोपस्याभावरूपतया पदचरमावयवकर्मकविधानाभावात् स्थानिवत्त्वनिषेधाभावात् णिलोपस्य टिलोपस्य वा स्थानिवत्त्वेन वल्परत्वाभावेन वृत्तव् इत्यस्य सिद्धिः

नन्वत्र पदत्वाभावान्नपदान्तेत्यस्य कथं प्रवृत्तिरिति चेन्न सुबन्ताण्णिजिति हरदत्तमते ऽन्तर्वर्तिविभक्त्या पदत्वात्

यदि तु सुबन्ताण्णिजिति पक्षो न भाष्यसंमतः किन्तर्हि प्रातिपदिकाण्णिजित्येव पक्षः प्रकृते च न पदत्वमिति नेदं फलं भावसाधनविधिशब्दोपादनस्येत्युच्यते तदा इणः शतरि यन् इति रूपम् एषो यन् हसतीत्यत्र एतत्तदोरिति सुलोपे कर्तव्ये यणः स्थानिवत्त्वनिषेधाभावे उत्वस्यैव फलत्वम् उत्वे कर्त्तव्ये स्था निवत्त्वं तु न उत्वस्य पदचरमावयवत्वात्

नन्विदं फलं वाक्यसंस्कारपक्षे पदसंस्कारपक्षे तु एषस् सकारस्य स्थानिभूतोदचः पूर्वत्वेन दृष्टत्वाभावात् लोपे स्थानिवत्त्वाप्रवृत्त्या एष यन् इत्यस्यैवेष्टत्वमत एव एष यन् इति छान्दोग्यप्रयोगोपि संगच्छत इति भावसाधनविधिशब्दोपादाने फलाभाव इति चेदत्र केचित्—

हैशब्दस्योशब्देन समासे तस्य अरणिशब्देन समासे ह्यरणिरित्यत्र लोपोव्योरिति यलोपाभावस्यैव फलत्वात् तव तु लोपस्य पदचरमावयवसंबन्धिविधेयस्य सत्त्वेन स्थानिवत्त्वनिषेधे लोपो दुर्वारः स्यात्

एवं नदतीति नद् देवदत्तस्य नद् इति समासे तस्मादाख्यानण्यन्तादचि देवदत्तनः तस्माट्टाविभक्तौ देवदत्तनेनशब्दे परादिवत्त्वेन सुप्त्वाङ्गसंज्ञायामल्लोपोन इति लोपापत्तेः णिलोपादेः स्थानिवत्त्वं तु वक्तुमशक्यम् अनेन निषेधात्

भावसाधनविधिशब्दोपादाने तु न दोषः लोपस्य पदानवयवत्वात् पादस्य

लोप इति विहितलोपस्य समासान्ता इति शास्त्रबलादवयवत्वेऽपि सर्वत्र तस्यावयवत्वे प्रमाणाभावात् ।

किञ्च भावसाधनविधिशब्दोपादानस्य षडिक इति फलम् तथा हि षडङ्गुलिदत्तशब्दाद्बह्वचो मनुष्यनाम्नष्ठज्वेति ठचि ठाजादावूर्ध्वमित्यनेन अजादौ ठचि द्वितीयादच ऊर्ध्वं लुप्यते इत्यर्थकेन ङ्गुलिदत्तशब्दस्य लोपेऽकारस्य यस्येतिचेति लोपे षष्शब्दप्रकृतिकविभक्तिनिमित्तकपदत्वाज्जश्त्वे षडिक इति सिध्यति तत्र समानावधिकैकनिमित्तकया भसंज्ञया पदसंज्ञाबाधेन जश्त्वाभावस्तु न भत्वे कर्तव्ये यस्येति लोपस्य स्थानिवत्त्वात् अनेन निषेधस्तु न भसंज्ञायाः पदचरमावयवत्वाभावात् कर्मसाधनविधिशब्दोपादाने तु भसंज्ञायाः पदान्तोद्देश्यककार्यत्वेन स्थानिवद्भावनिषेधेन भत्वाज्जश्त्वाभावापत्तिः

नन्वेवं वाचिक इत्यस्यासिद्धिः वागाशीर्दत्तशब्दाठ् ठचि द्वितीयादच ऊर्ध्वं लोपे यस्येतिचेत्यालोपे तस्य स्थानिवत्त्वेनाकारान्ते भत्वप्रवृत्त्या चान्ते पदत्वस्य निर्बाधेन षडिक इव जश्त्वस्य दुर्वारत्वादिति चेन्न—

'एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य' इति वार्तिकेन आशीर्दत्तशब्दस्य लोपे अजादेशत्वाभावेनस्थानिवत्त्वाप्रवृत्त्या भत्वेन वाचिक इत्यस्य सिद्धेः षडिक इत्यर्थं च षषष्ठाजादिवचनात्सिद्धमिति वचनं कर्तव्यमिति न कश्चिद्दोषः

किं च कर्मसाधनविधिशब्दोपादाने पदान्तांशे पदान्तोद्देश्यककार्ये कर्तव्ये इत्यर्थसंभवेऽपि द्विर्वचनाद्युद्देश्यककार्याभावेन तदंशेऽनन्वयापत्तिः द्विर्वचनादिविधौ निषेधाप्रसङ्गश्च विधिशब्देन पदान्तादीनां कर्मधारये तु विधिशब्दस्य क्रियाशब्दतया विशेषणत्वापत्तौ पूर्वनिपातापत्तिः एतन्निर्देशात्पूर्वनिपातप्रकरणस्यानित्यत्वाश्रयणं त्वगतिकगतिरिति भावसाधन एव विधशब्द उपादेय इत्यलम् ।

भानोरः भान्वः तत आचारक्विबन्ताद्बनिष्यलोपे कर्तव्ये अलोपस्य स्थानिवद्भावे कर्तव्ये ऽनेन निषेधस्तु न, लोपस्य पदान्तोद्देश्यकत्वेऽपि पदान्तत्वाभावादित्यपि भावसाधनस्य फलम् ।

नन्वेवं वेतसशब्दाड्डमतुपिडित्वाट्टिलोपे वेतस्वानित्यत्र 'तसौ मत्वर्थे' इति भत्वे कर्तव्ये स्थानिवत्त्वेऽपि स्वादिष्वितिपदत्वे स्थानिवत्त्वनिषेधात् सान्तस्य पदत्वेन रुत्वापत्तिरिति चेन्न पदेऽन्त इति सप्तमीसमासाश्रयणेन प्रत्यासत्त्या पदे परतः यः परपदस्थाजादेशस्स न स्थानिवदित्यर्थात्प्रकृते स्थानिवत्त्वनिषेधाप्रवृत्त्या पदत्वाभावेन रुत्वाप्रवृत्तेः

ननु पदे परेऽन्तस्य विधौ न स्थानिवत्त्वमित्यर्थेनैव सिद्धौ प्रत्यासत्तिलभ्यार्थाश्रयणे किंफलमिति चेदुच्यते प्रत्यैषिषन् देवदत्ता इत्यत्र देवदत्ते पदे परतः भेर्जुसि कर्तव्ये स्थानिवत्त्वनिषेधापत्तौ जुसापत्तेः महिषो देवताऽस्येत्यर्थे सास्यदेवतेत्यणि यस्येतिचेत्यकारलोपेआख्यानणिचि अणो लुकि माहिषु देवदत्त इत्य-

त्रानेन निषेधात्स्थानिवत्त्वाभावेन जश्त्वापत्तेः औपदेशिकनान्तघ्रणधातोर्णिचि उपधावृद्धौ ततः क्विपि नङिसंबुद्ध्योरिति नलोपनिषेधे अश्वशब्दसमभिव्याहारे हे घ्राणश्व इत्यत्र क्विन्निमित्त कणिलोपस्थानिवत्त्वनिषेधात्पदान्तस्येति णत्वनिषेधापत्तेश्चेत्यलम् ।

नचपरम्पराया पदचरमावयवसाधकस्थानिवत्त्वस्यानेननिषेधभावस्य वक्ष्यमाणतया प्रत्यासत्त्याश्रयणस्यनेदं फलमितिवाच्यम् रषाभ्यामित्यत्र अपदान्तस्यमूर्द्धस्य इत्यधिकृत्य णग्रहणस्य पदान्तस्येतिनिषेधस्य भाष्येप्रत्याख्यानेनात्रस्थानिवत्त्वस्य साक्षाणत्वप्रापकत्वत् ।

ननूक्तरीत्या नपदान्तेत्यस्याप्राप्तावपि पूर्वत्रासिद्धे न स्थानिवदित्यनेनैव स्थानिवत्त्वनिषेधाद्धेतस्वानित्यत्र रुत्वं दुर्वारमिति चेन्न उक्तभाष्यप्रामाण्येन पूर्वत्रासिद्धे न स्थानिवदित्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणेनादोषात् ।

नन्वेवं पिपठीरित्यत्र रुत्वे स्थानिवत्त्वनिषेधाभावात् रुत्वानापत्तिरिति चेन्न प्रत्ययस्थानिकरुत्वभिन्नपदचरमावयवविधायकातिरिक्तस्यैव ग्रहणेन दोषाभावात्

नन्वेवमपि नासामाचष्टे नासयतीति ना इत्यत्र रुत्वानापत्तिः अत्र रुत्वस्यप्रत्ययस्थानिकत्वाभावादिति चेन्न स्वादिष्विति विहितपदचरमावयवविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणमिति स्वीकारेणादोषात् ।

नन्वेवमपि पिपठीर्भ्यामित्यत्र रुत्वानापत्तिः स्वादिष्विति पदत्वस्यैव तत्रसत्त्वादिति चेन्न तद्धितप्रत्ययनिमित्तकपदचरमावयवविधायकातिरिक्तस्येति स्वीकारेणादोषात् ।

नचैवमपि पिपठीष्टं पिपठीःकल्पम् इत्यत्र स्थानिवत्त्वनिषेधाद्रुत्वानापत्तौर्वोरितिदीर्घानापत्तिरिति वाच्यम् लोपप्रयोजकप्रत्ययनिमित्तकपदत्ववच्चरमावयवविधायकातिरिक्तस्यैव ग्रहणेनादोषात्

नचैवं विवक्षुशब्दात्कल्पप्प्रत्यये विविट्कल्पमित्यत्र संयोगादिलोपप्रयोजककल्पप्रत्यनिमित्तकपदत्ववच्चरमावयवविधायके झलांजशइति कर्तव्ये निषेधाप्रवृत्त्या स्थानिवद्भावे जश्त्वानापत्तिरिति वाच्यम् टिलोपप्रयोजकप्रत्ययप्रयोज्यपदत्ववच्चरमावयवविधायकातिरिक्तस्य त्रैपादिकस्य ग्रहणेनादोषात् विविट्कल्पमित्यत्र संयोगादिलोपस्य पदान्तत्वनिमित्तकत्वेनकल्प प्रयोज्यत्वाच्च।

अत एव महिष्मानित्यत्र पूर्वत्रासिद्ध इति टिलोपस्य स्थानिवत्वनिषेधाभावात् झलांजशोऽन्त इति जशत्वं न च जश्त्वे नपदान्त इत्यनेनिषेधो भविष्यतीतिवाच्यम् चर्सन्निहितस्यैव झलांजश् झशीतिजश्त्वस्यैव तत्र ग्रहणात् यद्यपि पिपठीरित्यत्र कौलुप्तमिति स्थानिवत्त्वनिषेधान्नैताद्दशप्रयासोपयोगस्तथापि गर्दभयतीति गर्द्धवित्यत्रक्विपिणिलोपेन टिलोपस्य स्थानिवत्त्वेभषभावोनस्या

देतदर्थमेतादृशप्रयासस्यावश्यकत्वात् ।

नचैवं षडिक इत्यस्यासिद्धिः ठचष्टिलोपप्रयोजकत्वाभावेन तादृशप्रत्ययप्रयोज्यपदचरमावयवविधायके जशि कर्त्तव्ये स्थानिवत्त्वस्य निषेधात्षान्तेभत्वेन जश्त्वानापत्तेरिति वाच्यम् प्रत्यासत्त्या यल्लोपस्य स्थानिवद्भावश्चिकीर्षितस्तल्लोपप्रयोजकप्रत्ययनिमित्तकपदत्ववच्चरमावयवविधायकातिरिक्तस्य ग्रहणेन सकलदोषपरिहार इति केचित् ।

अन्ये तु उक्तभाष्यप्रामाण्यात् धात्वनवयवपदचरमावयवविधायकातिरिक्तस्य ग्रहणेन सकलं दोषं परिहरन्ति ।

परे तु पदचरमावयवेत्यादेः प्रत्ययविशिष्टोयः पदचरमावयवस्तद्विधायकातिरिक्तेत्यर्थः वैः स्वप्रयोज्यपदसंज्ञावदुद्देश्यकत्व स्वप्रयोज्यकार्यप्रयोज्यत्वोभयसंवन्धेन एवं च वेतस्वानित्यादौ रुत्वस्य मतुप्प्रत्ययविशिष्टत्वात् न तत्र पूर्वत्रासिद्ध इति निषेधः, पिपठीरित्यादौ तु रुत्वे एककसंवन्धेन सुप्रत्ययस्य क्विप्प्रत्ययस्य च वैशिष्ट्यसत्त्वेऽपि उभयसंवन्धेन वैशिष्ट्यविरहात्पूर्वत्रासिद्धे न स्थानिवदितिनिषेधः सिद्धः इति वदन्ति ।

ननु वेतस्वान् महिष्मान् इत्यत्रान्तरङ्गपरिभाषया रुत्वजश्त्वयोरन्तरङ्गयोः परनिमित्तकत्वेन वहिरङ्गस्याल्लोपस्यासिद्धत्वेनैवकार्यसिद्धौ पदेपरे इत्याद्यर्थंकरणं व्यर्थमितिचेन्न त्रिपाद्यां तत्परिभाषाया अप्रवृत्तेरुक्ततया तदप्रवृत्तेः ।

नन्वेवं गतिकारकोपपदानामिति सुबुत्पत्तेः प्राक्समासे उत्तरस्य पदत्वाभावेन स्थानिवत्त्वाद्गोचेत्यादावङ्गापत्तिरिति चेन्न कर्तृकरणे इति सूत्रस्थवहुलग्रहणेन तस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासाङ्गीकारेणादोषात् अत एव धनक्रीतेत्ति सिध्यति । उत्तरपदत्व इति निषेधस्य तु न प्रवृत्तिः उत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेः अतएवमाषकुम्भवायेनेत्यस्य सिद्धिः । पदस्य पदत्वयोग्योपलक्षकत्वाद्वा ।

अन्ये तु गतिकारकोपपदानामित्यस्यानित्यत्वेऽम्वाम्वेतिसूत्रस्थं गवादि ग्रहणं मानं वहुलग्रहणं तु सर्वोपाधिव्यभिचारार्थं नानित्यत्वे प्रमाणम् ।

न च हृदिस्थ इत्यत्र षत्ववारणाय नियमाथ गवादिग्रहणमिति वाच्यम् सात्पदाद्योरिति सूत्रे पञ्चमीसमासपक्षे ज्ञापकत्वस्य सुवचत्वादित्याहुस्तन्न-

हृदिस्थ इत्यत्रेव गोष्ठ इत्यत्रापि षत्वाप्रवृत्त्या विध्यर्थमेव तस्यावश्यकत्वादिति शम् ।

ननु भावसाधनविधिशब्दोपादाने वाचिक इत्यत्र भत्वे निषेधाप्रवृत्त्या ऽल्लोपस्य स्थानिवत्त्वेनाकारान्तस्यैव भत्वे चान्तस्य पदत्वाच्चोः कुरिति कुत्वापत्तिः कर्मसाधनविधिशब्दोपादाने षडिक इत्यत्र भत्वे कर्तव्येऽल्लोपस्य स्थानिवत्त्वाभावेन षान्तस्य भत्वे जश्त्वानापत्तिरिति चेन्न-

वाचिक इत्यत्र एकाक्षरेतिवार्तिकेनाशीर्दत्त इत्यस्य लोपे स्थानिवत्त्वस्याप्राप्तेः षडिक इत्यत्र तु ङ्गुलिदत्तस्यालोपेऽङ्गापस्य स्थानिवत्त्वेन जश्त्वसिद्धेर्भावसाधनविधिशब्दाङ्गीकारेणादोषात् ।

स्थानिवद्भावश्चतुर्विधः पदचरमावयवस्य साक्षात् परम्परया च साधकः २ पदचरमावयवस्य साक्षात्परम्परया च प्रतिबन्धकः। तत्र परम्परा पदचरमावयवसाधकं स्थानिवद्भावं विना सर्वोऽप्यनेन निषिध्यते अन्यथा तसाविति भसंज्ञायां टिलोपस्थानिवद्भावस्य सान्ते भत्वप्रतिबन्धद्वारा पदत्वसम्पादकत्वेन परम्परया-पदचरमावयवरुत्वसम्पादकत्वेन स्थानिवत्त्वनिषेधात् भत्वेन पदत्त्ववाधाद्रुत्वाशंका भाष्योक्ताऽसंगता स्यात् पदसंज्ञाप्रतिबन्धार्थं स्थानिवत्वं तु न भवति उक्तभाष्यादेव परम्परया पदचरमावयवप्रतिबन्धकस्यापि निषेधाङ्गीकारात् ।

अत एव षडिक इत्यत्र जश्त्वसिद्धिः अल्लोपस्थानिवद्भावस्य षान्ते भत्वप्रतिबन्धेन पदत्वसम्पादनद्वारा परम्परया जश्त्वसम्पादकत्वेनानेन निषेधाभावात् पदसंज्ञाप्रतिबन्धकस्थानिवत्त्वं तु न परम्परया जश्त्वप्रतिबन्धकत्वादिति ।

तत्र साक्षात्पदचरमावयसाधकस्थानिवद्भावनिषेधस्योदाहरणम् वाक्यसंस्कारपक्षे कानि सन्ति कौ स्तः पदसंस्कारपक्षे तु गोचा अल्लोपस्थानिवद्भावस्य साक्षादेवावङ्साधकत्वात् प्रतीचो यदिति निर्देशेन वाधकल्पनापेक्षया सूत्रोदाहरणत्वस्यैव युक्तत्वात् दधिपूर्वकेण्धातोः मूलविभजादित्वात्के इणोयणि दधिय इत्यत्र स्थानिवत्त्वेन प्राप्तस्य यणो व्यावृत्तेरेव तदुदाहरणार्थत्वसम्भवाच्च

साक्षात्प्रतिबन्धकस्योदाहरणम् वाक्यसंस्कारपक्षे एषो यन् इति पदसंस्कारपक्षे हरिशब्दयशब्दयोः समासे आचारक्विबन्तात्कर्तरि क्विप्यल्लोपयलोपयोः ह्रस्वस्येति तुकि हरिदित्यत्र तुक्प्रतिबन्धकः अल्लोपस्थानिवद्भावो न भवति एवं तेजः पूर्वकेण्धातो के यणि तेजोय इत्यत्रोत्वप्रतिबन्धाय यणः स्थानिवत्त्वं न भवति ।

परम्परया प्रतिबन्धकस्योदाहरणम् दध्युपपदकऋधातोरणि वृद्धौ दध्यार इत्यत्र वृद्धिस्थानिवत्त्वस्य प्रकृतिभावसम्पादानद्वारा परम्परया यण्प्रतिबन्धकत्वात्स्थानिवत्त्वं न ।

यदि तु ऋत्यक इत्यत्र ह्रस्वपदानुवृत्या साक्षात्पदचरमावयवसम्पादकत्वादेवात्र कार्यनिर्वाह इत्युच्यते तर्हि सर्पिः शब्दादिदमर्थेऽणि सार्पिषः तस्याशब्देन समासे आचारक्विबन्तात्कर्तरि क्विपि नपुंसकह्रस्वत्वे ततः आचारक्विबन्तात्कर्तरि क्विप्यल्लोपस्थानिवत्त्वस्य भसंज्ञाप्रवर्तनद्वारा रुत्वप्रतिबन्धकस्यानेन निषेधः फलम् ।

एवं व्याघ्रपाच्छब्दस्याशब्देन समासे आचारक्विबन्तात्कर्तरि विच्यल्लोपेटाविभक्तौ व्याघ्रपदा इत्यत्रपाद्शब्दान्ते भत्वप्रतिबन्धद्वारा पदचरमावयवपदादेशप्रतिबन्धकोऽल्लोपस्थानिवद्भावो न भवतीति तदप्युदाहरणमिति दिक् ।

## उरण् रपरः ।

अत्र षष्ठी स्थानेयोगा इति परिभाषया ऋकारस्य स्थाने इत्यर्थलाभः न च विधौपरिभाषोपतिष्ठते नानुवाद इति परिभाषया न तथा स्थानपदार्थलाभः संभव इति वाच्यम् विधाविति परिभाषाया भाष्यानुक्तत्वेनाप्रामाणिकत्वात् अत एव उदात्तस्वरितयोरिति सूत्रेऽनुवादेऽपि स्थानपदार्थलाभः । स्थानेऽन्तरतम इत्यतश्च प्रकृतसूत्रे लक्षणया प्रसङ्गावस्थायामित्यर्थकं स्थाने इत्यनुवर्तते ततश्च ऋकारस्य स्थाने प्रसज्यमान एवाण् रपरो भवतीत्यर्थो लभ्यते ।

अत्र रः परो यस्येति विग्रहेण परशब्दोऽवयववाची तेन रेफस्य अकारावयवत्वलाभात् अवयवत्वावच्छिन्नविधेयताश्रयत्वरूपागमत्वेन यदागमपरिभाषया अग्रहणेन ग्रहणात् अरो गुणत्वमारश्च वृद्धित्वं सिद्ध्यति ततश्च ऋकारस्य गुणवृद्धी अरारावेवेति नियमसिद्धिः रः परो यस्मादिति व्युत्पत्त्या रेफस्यानवयवत्वे तु स नियमो न सिध्येत । अतएव थलिच सेटीति सूत्रस्थं 'गुणो भवति वृद्धिर्भवति रेफशिरा गुणवृद्धि संज्ञकोऽभिनिर्वर्तते' इति भाष्यं संगच्छते अन्यथा रेफशिरस्कस्य अरित्यादेर्गुणत्वाभावेन तदसंगतं स्यात् । अत एव वव्रेइत्यत्र हलादिः शेष सिद्धिरन्यथा रेफस्याभक्तत्वेनाभ्यासानवयवत्वात्स न स्यादिति शेखरकृतः ।

वस्तुतस्तु रः परो यस्मादिति विग्रहेण रेफस्यानवयवत्वेऽपि न काचिद्धानिः न च ऋकारस्य गुणवृद्धी अरारावेवेति व्यवस्था न सिध्यतेतिवाच्यम् अनान्तर्यमेवैतयोरान्तर्यमिति भाष्येण आनन्तर्याभावरूपसाधर्म्येण अकाररूपगुणस्य विधानेन व्यवस्थोपपत्तेः न चैतावतापि गुणवृद्धी अरारावेवेति सामानाधिकरण्यानुपपत्तिरिति वाच्यम् तस्य भाष्याद्यनुक्तत्वेन तदनुपपत्तेरकिंचित्करत्वात् ।

यदपि रेफशिरागुणवृद्धिसंज्ञकोऽभिनिर्वर्तत इति भाष्यविरोधोपपादनं तदप्य किंचित्करम् यो रेफशिरा स गुणवृद्धिसंज्ञक इत्येवं योजने भाष्यविरोध प्राप्तावपि यः गुणवृद्धिसंज्ञकः स रेफशिराः, इत्येवं योजनेन भाष्यविरोधाभावात् यदपिवव्रे–इत्यत्र हलादिः शेषानापत्तिशङ्कनं तदपि तुच्छम् द्वित्वशास्त्रीयोद्देश्यताश्रयद्वित्वशास्त्रीयविधेयताश्रयैतदुभयमात्रारब्धसमुदायसमभिव्याहृतवर्णाघटितोयः द्वित्वशास्त्रीयविधेयताश्रयावधिकपूर्वः सोऽभ्यास इत्यर्थात्पूर्वोभ्यास इत्यनेन पुनरभ्याससंज्ञाया हलादिः शेषप्रवृत्तौ बाधकाभावादिति गुरुचरणाः ।

नन्विदं सूत्रं किमर्थं वृद्धिरादैच् अदेङ् गुण इत्यादौ वृद्धिरारालैच् , अरलेङ्गुण, इति न्यासेनैव सिद्धेरिति चेन्न तपरत्वाभावे गङ्गौघः उमेश इत्यादौ त्रिमात्रिकादेशापत्तेः ।

न चाणुदित्सूत्रेऽशब्दसंज्ञेत्यस्यानुवर्तनात् शब्दसंज्ञायां विधीयमानायां नाण् सवर्णान्गृह्णातीत्यर्थस्य कौस्तुभे उक्ततया नात्रत्रिमात्रिकत्वापत्तिरिति वा-

च्यम् उदोष्ठ्यपूर्वस्य ऋतइद्धातोः मृन्त्रामिदित्यादौ दोषात् नच तत्र उर् इर् पाठेन न कोऽपिदोषइति वाच्यम् । उल् इत्यस्यापिपठनीयतया गौरवात् ।

अत्रवदन्ति लपरश्चेति वार्तिकंलकाराकारस्यानुनासिकत्वं रप्रत्याहारा-श्रयणम् आनङ् इत्यत्र नङ्ग्रहणं च न कर्तव्यमिति लाघवम् तत्र आ इति करणे रपरत्वं प्राप्नोति आनकरणे सर्वादेशत्वं प्राप्नोति इति ङकारस्त-द्वारणाय कृतः । इदानीं सूत्राभावेरपरप्रवृत्तिरेवनेतिपूर्वपक्षानुपपत्तिमाशङ्क्य किन्त्वेवं सत अनेकरेफलकाराद्युच्चारणापेक्षया सूत्रकरणे किं गौरवमिति केषां चिदुक्तिः परास्ता ।

नचोरिति करणे सर्वादेशत्वापत्तिः निर्दिश्यमानपरिभाषया सिद्धेः, नच मातुरुत्संख्येति सूत्रे मातुर्निर्दिश्यमानतया सर्वादेशत्वं तु न ऋकारप्रश्लेषेणा-दोषात् वस्तुतस्तु ईर्त्सति ज्ञीप्सति इत्युभयोः सिद्धयर्थम् आप्ज्ञपीति सूत्रे इर् इतोर्विधाने गौरवं दूषणं वोध्यम्

## लोपः शाकल्यस्य ।

अशि किम् वृक्षव् करोति । न पदान्ता हलोणः सन्तीतिभाष्येण वृक्षवा-देरनभिधानमेवेतिशेखरकारः । वस्तुतस्तु भोभगोसूत्रे भाष्ये वक्षव्करोतीतिप्रयो-गस्य कण्ठत एवोक्ततयाऽनभिधानकथनं साहसमात्रम् नपदान्ताहलोऽणः सन्ती-त्यत्र कार्यभाजइतिशेष इत्यस्य कैयटेनोक्ततया वृक्षवादेरनभिधाने प्रमाणाभावाच्च वृक्षव् करोतीत्यत्र च न कार्यभाक्त्वं हलिसर्वेषामित्यत्राशीत्यनुवृत्तेः । यद्वा न पदान्ता हलोण इत्यस्य दोषसंपादकाइति शेषः तेन हरयिह विष्णविह इत्यत्र पदा-न्तहल्रूपाणां सत्त्वेऽपि न क्षतिः वृक्षव् करोतीत्यत्राशीत्यनुवृत्या न दोष इति स्पष्टमेव उक्तम् हलिसर्वेषामित्यत्र वकारनिवृत्यैव दोषवारणं तु नयुक्तं द्वन्द्वनिर्दिष्टयोरेकदे शनिवृत्त्यसंभवात् अतएव द्वन्द्व निर्दिष्टैतोनिवृत्तयेऽदसोमादित्यत्र माद्ग्रहणं कृतमिति, भोभगो इति सूत्रस्थभाष्यस्यैकदेशित्वकथनं तु कैयटस्य नोचितं लण् सूत्रस्थभाष्ये कार्यभाज इतिशेषस्य स्वयमेवकृततया विरोधाभावेन एकदेशित्वे मानाभावादित्याहुः ।

## अन्तादिवच्च ।

अत्र एकः पूर्वपरयोरिति संपूर्ण सूत्रमनुवर्तते एकपदमेकादेशपरम् पूर्वपर-शब्दौ च क्रमेणान्तादिभ्यां सम्बध्येते अन्तादिशब्दौ एकादेशस्थानिपरौ एका-देशस्थानिपरपूर्वपरशब्दौ च तद्घटितसमुदायपरौ 'अन्तादिशब्दसन्निधानात्' तथा च पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां तुल्यस्तत्स्थानिक आ-देशो भवतीत्यर्थः । ताभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्वसुब-न्तत्वप्रत्ययत्वादयस्ते कृतैकादेशस्य भवन्ति न तु वर्णमात्रवृत्तयोऽत्वहस्वत्वादय

इति शेखरकृतः । अत्रैकादेशे अन्तादिसादृश्यं पूर्वपरसमुदायवृत्त्युक्तधर्मवद्घटकत्वमेवेति ज्ञेयम् ।

नन्वेवमर्थे स्वस्याश्वः स्वाश्व इत्यत्र एकादेशपूर्वस्थानिघटितसमुदायवृत्तिस्वशब्दत्वस्यैकादेशघटिते स्वाश्व इत्यत्रातिदेशः स्यात् तथा च तस्य ईरिणीशब्देन समासे स्वाश्वेरिणीत्यत्र स्वादीरेरिणोरिति वृद्ध्यापत्तिः । एवं रमयतीति रमः पचादित्वादच् तेन नञ्समासे घटोऽरमोऽस्याः सा घटारमेत्यत्र एकादेशपरस्थान्यकारघटितघटारमासमुदायवृत्त्याबन्तत्वस्य घटा इत्यत्रातिदेशे ङ्यापोरिति ह्रस्वत्वापत्तिरिति चेन्न ।

पूर्वपदमेकादेशपूर्वचरमावयवके परपदमेकादेशपरस्थान्याद्यवयवके लाक्षणिकम् तथा च एकादेशनिष्ठाचरमावयवतानिरूपकसमुदाये एकादशपूर्वस्थानिनिष्ठचरमावयवतानिरूपकसमुदायपर्याप्ताः, एकादेशनिष्ठाद्यवयवतानिरूपकसमुदाये च एकादेशपरस्थानिनिष्ठाद्यवयवतानिरूपकसमुदायपर्याप्ता धर्मा अतिदिश्यन्ते इत्यर्थः । तथा च स्वशब्दत्वस्य स्वाशब्देऽतिदेशसम्भवेऽपि न स्वाश्वशब्देऽतिदेशः । एवं घटारमेत्यत्र अरमावृत्त्याबन्तत्वस्यारमेत्यत्रातिदेशसंभवेऽपि घटा इत्यत्र नातिदेशसंभवः ।

नच संज्ञात्वाभावादेव न घटारमेत्यत्र ह्रस्वप्राप्तिः कस्यां चित्स्त्रियां तस्य संज्ञात्वस्य वक्तुं शक्यत्वात् ।

अत एव रामावित्यत्र पदत्वसिद्धिः परादिवत्त्वेन सुप्त्वस्य, एकदेशविकृतन्यायेन प्रकृतियस्माद्विहितस्तत्त्वस्य च सत्त्वात् ।

ननु खट्वाभिरित्यत्रादन्तत्वातिदेशेन भिस ऐसापत्तिरिति चेन्न वर्णमात्रवृत्तिधर्मस्यात्वादेरनेनानतिदेशात् ।

नन्वत्र किं मानमिति चेत् षत्वतुकोरसिद्ध इति सूत्रस्थं तुग्ग्रहणमेवेति गृहाण अन्यथाधीत्येत्यत्र परादिवद्भावेन ह्रस्वत्वप्रयुक्ततुक्सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव ।

नन्वधिपूर्वकादीङः क्त्वो ल्यपि सवर्णदीर्घेऽधीयेत्यत्र पूर्वान्तवद्भावेन कृतैकादेशे दीर्घे ह्रस्वत्वं परादिवद्भावेन कृतैकादेशे पितकृन्निरूपिततदादित्वं चातिदिश्य ह्रस्वस्येति तुगापत्तिः—

न चात्र पूर्वान्तवद्भावेन ह्रस्वत्वातिदेशोऽपि परादिवद्भावेन तदादित्वमिव दीर्घत्वमादायातिदिश्यमानधर्मविरुद्धस्वाश्रयप्रयुक्तकार्याणामभावेन न ह्रस्वत्वप्रयुक्तस्तुगिति वाच्यं स्थानिवत्सूत्रेणेवानेनापि भावातिदेशस्यैवाङ्गीकारेण तुक्प्रतिवन्धस्य कर्तुमशक्यत्वात् सति तु तुग्ग्रहणे एकादेशस्यासिद्धत्वेन न तुगिति चरितार्थं तुग्ग्रहणमिति चेन्न—

एकस्मिन्धर्मिणि पूर्वान्तवत् परादिवद्भावेन धर्मद्वयमादाय कार्यं न प्रवर्तते

इति स्वीकारेण तुग्ग्रहणस्य निरुक्तार्थज्ञापकत्वं सुस्थमेव ।

अत एव हल्ङ्याब्भ्य इतिसूत्रे दीर्घग्रहणप्रत्याख्यनाय कृतस्य ङ्याब्ग्रहणेऽदीर्घ इति वार्तिकस्य आ आबिति प्रश्लिष्य प्रत्याख्यानं भाष्योक्तं संगच्छते, अन्यथा अशब्दाट्टापि आशब्देन निरः समासे गोस्त्रियोरिति ह्रस्वत्वे हे निर अशब्दात्स्वाद्युत्पत्तौ उभयोः समभिव्याहारे हे निरा इत्यत्र वार्तिकसत्त्वे दीर्घभिन्नह्रस्वरूपादेशे स्थानिवत्त्वनिषेधेन सुलोपो न भवति आआबितिप्रश्लेषपक्षे च आप्त्वं स्थानिवत्त्वेनादाय पूर्वान्तवद्भावेन आकारे आप्त्वं परादिवद्भावेन सुनिरूपिततदादित्वं चादाय स्वाश्रयमाकारत्वं च वर्तते एवेति सुलोपः स्यादिति आरम्भप्रत्याख्यानयोः फलभेदः स्यात् एकस्मिन्धर्मिणीत्यभ्युपगमे तु आकारे पूर्वान्तत्वपरादिवद्भावयोरभावेन प्रत्याख्यानपक्षेऽपि सुलोपाप्राप्त्या न फलभेद इति बोध्यम् ।

अन्ये तु नाजानन्तर्य इति परिभाषाज्ञापकपरभाष्यप्रामाण्येनाधीयेत्यादीनामनभिधानमित्याहुः ।

यत्तु ह्रस्वस्य पितीत्यत्र दीर्घस्य पितीति न्यस्याधीयेत्यत्र पूर्वान्तवद्भावेन ह्रस्वत्वातिदेशेऽपि परादिवद्भावेन दीर्घत्वस्य ह्रस्वभिन्नत्वस्याप्यतिदेशेन दीर्घभिन्नत्वाभावान्न तुगापत्तिः ।

न चाशास्त्रीयकार्येऽन्तादिवच्चेत्यस्याप्रवृत्त्या परादिवत्त्वेन दीर्घत्वस्यानयनसंभवना इति वाच्यम् पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयत्वव्यवहारस्य स्थानिवत् सूत्रे नागेशेनोक्तत्वादिति तन्न।

परेत्वत्र परादिवत्त्वेन ह्रस्वत्वातिदेशेपूर्वान्तवत्त्वेन दीर्घत्वाद् दीर्घभिन्नत्वाभावेन तुगप्रवृत्त्या षत्वतुकोरसिद्ध इत्यस्य वैयर्थ्यापत्तेः ।

ननु खट्वाभिरित्यत्र वर्णमात्रवृत्तिधर्मस्यात्वस्यानतिदेशेऽपि अदन्तत्वातिदेशेन दोषः स्यादेवेति चेन्न अकारात्परस्याङ्गसंज्ञानिमित्तस्य भिस ऐस् इत्यर्थेनादोषात्

वस्तुतस्तु वर्णमात्रवृत्तिधर्मघटितधर्मस्यापि नानेनातिदेश इति बोध्यम् तथा च वर्णाश्रयेऽन्तादिवत्त्वप्रतिषेधो वक्तव्यो न वाऽताद्रूप्यातिदेशादिति वार्तिकं ताद्रूप्यस्य वर्णमात्रवृत्तिधर्मस्यानेनानतिदेशादिति तदर्थः ।

ननु वर्णाश्रये इति वार्तिकस्य नवाऽताद्रूप्येति वार्ति केनैव खण्डने किं लाघवमभिप्रेति वार्तिककार इति चेदुच्यते वर्णाश्रय इतिवार्तिकमपूर्वम् नवेतिवार्तिकं तु फलितमित्येव लाघवमभिप्रेत्य तत्खण्डनोक्तेः ।

नन्वस्य कथं फलितत्वमितिचेत् षत्वतुकोरसिद्ध इतिसूत्रस्थतुग्ग्रहणेन तद्वद्भेति सिद्धे अन्तादिवच्चेति समुदायाक्षेपकाद्यन्तपदघटितन्यासकरणेन च अर्थवन्मात्रवृत्तिधर्मस्यैवानेनातिदेश इति सूत्रार्थोस्तत्फलितत्वसिद्धेः ।

नन्वन्तादिवर्णमात्रवृत्तिधर्मस्य ताद्रूप्यपदार्थत्वेऽत्वस्यान्यत्रापि सत्त्वेन खट्वाभिरित्यत्र तदतिदेशः स्यादेवेति चेन्न अन्तादिवृत्तिर्वर्णमात्रवृत्तियों धर्मस्तस्य तत्वस्वीकारेणादोषात् ।

नन्वेवं स्वीकारे क्षीरपेणेत्यत्र कथं एकाजुत्तरपदत्वस्यातिदेशः अच्त्वस्य तथात्वेन एकाजुत्तरपदत्वस्य तद्घटितत्वादिति चेन्न स्थानिविशिष्टधर्मघटितधर्मोनायातीत्यर्थेना दोषात् वैशिष्टयंच स्ववृत्तित्व स्वस्थानिकादेशावृत्तित्व स्ववृत्यल्पत्वव्याप्यत्वैतत्त्रितयसम्बन्धेन ।

नन्वेवमपि पूर्वोत्तरपदनिमित्तकेति परिभाषावतरणे सौमेन्द्र इत्यत्र उत्तरपदाद्यच्त्वस्य नातिदेशः, नवाताद्रूप्यातिदेशादितिनिषेधादिति नागेशेनोक्तं विरुध्यते उत्तरपदाद्यच्त्वस्य निरुक्तताद्रूप्याभावादितिचेन्न

स्ववृत्तिप्रवर्तनीयशास्त्रघटकपदप्रयोज्योपस्थितीयमुख्यविशेष्यतावच्छेदकत्वसंसर्गेण स्थानिविशिष्टधर्मघटितधर्मस्ताद्रूप्यमिति स्वीकारेणादोषात् एकाच्त्वस्य प्रकारतावच्छेदकत्वात् अत्वस्य उत्तरपदाद्यत्वेऽच्त्वस्य विशेष्यतावच्छेदकत्वाच न दोषः ।

केचित्तु–वर्णमात्रवृत्तिधर्मस्य तत्त्वे खट्वाभिरित्यत्र दोषवारणेऽपि रमादिशब्देऽस्यअदन्तात्प्रातिपदिकादितीनिठनौ इत्यर्थेन अतइनिठनाविति इनिप्रत्ययो दुर्वारोऽदन्तत्वस्यातथात्वात् अतोऽन्तादिवर्णविशिष्टवर्णमात्रवृत्तिधर्मघटितधर्मस्ताद्रूप्यम् वै० स्ववृत्तित्व स्वस्थानिकादेशावृत्तित्वसंबन्धाभ्यां अत्रतादृशधर्मघटितत्त्वमतिदिष्टमपि गृह्यते तेनात्वस्यापि तथात्वमिति बोध्यम् ।

न च सोमेन्द्र इत्यत्रोत्तरपदाद्यच्त्वमतिदेष्टुं न शक्यते ताद्रूप्यादितिशेखरविरोध इति वाच्यम् उत्तरपदादिभूतोयोऽच् तत्त्वमपिवर्णमात्रवृत्त्येवेति तत्र इन्द्रघटकेकारवृत्तित्वस्य तत्स्थानिकैकारवृत्तित्वस्य च सत्वेन ताद्रूप्यत्वात्संगतेः, एकाजुत्तरपदत्वं तु न वर्णमात्रवृत्त्यऽदोषः, इति वदन्ति ।

ननु स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं किमर्थं न च रामावित्यादौ औकारे परादिवद्भावेनसुप्त्वस्य राम् शब्दे एकदेशविकृतन्यायेन तदादित्वस्यातिदेशेनपदत्वसिद्ध्या रामौ गच्छत इत्यत्र निघातसिद्धिरस्यफलमिति वाच्यम् यथोद्देशेपूर्वजातपदत्वस्यातिदेशेन दोषाभावात् । नच यद्देशेऽपि नित्यत्वादकादेश एव स्यान्न पदत्वमितिवाच्यम् विरोधाभावे एकादेशपदत्वयो युगत्प्रवृत्तौ वाधकभावात् । नच कार्यकालपक्षेअन्तादिवच्चेत्यस्यावश्यकत्वम् व्यवस्थित पक्षयोरेकतरपक्षेणलक्ष्यसिद्धौ पक्षान्तरेण दोषदान श्यानुचितत्वात् नचाल्विध्यर्थमिदमिति भ्रमितव्यमस्याप्यल्विधावनिष्टत्वादिति चेन्न क्षीरपेणेत्यत्रपे शब्दे एकाजुत्तरपदत्वानयनार्थमस्यावश्यकत्वात् अल्विधित्वस्य तत्र सत्त्वेपि निरुक्तताद्रूप्यस्यासत्त्वेनातिदेशस्य कर्तुं शक्यत्वात्

नच क्षीरपेणेत्यत्र सापादिकत्वात् पूर्वभिनादेशे गुणे क्षीरपेन इति स्थितौ णत्वं नस्यादेकाजुत्तरपदघटितसमासावयवपूर्वपदावयवनिमित्तात्परस्य नस्य णत्वं विधीयते क्षीरपेनेतिस्थितौ न समुदायस्य समासत्वं न क्षीरपेत्यस्य न वापे इत्यस्योत्तरपदत्वं पेत्यस्यैवोत्तरपदत्वात् स्थानिवद्भावस्यापिनावसरः श्रौतादेशस्य वर्णद्वयात्मके उत्तरपदत्वाभावात् क्षीरप इत्यस्य स्थाने क्षीरपेनादेशा-इत्यानुमानिकस्थान्यादेशभावेऽपि स्थानिनि क्षीरप इनेत्यस्मिन् समासत्वाभावात् क्षीरप इत्यस्य स्थाने क्षीरपेइत्यादेशः इत्यपिनश्रौतस्थानिघटितस्यैवानुमानिकस्थानित्वादकारेकारयोर्मिलितयोरेव श्रौतस्थानित्वात् न क्षीरपेत्यस्य तदघटितत्वात् सत्येतस्मिन्सूत्रे पूर्वान्तवद्भावेन पे इत्यस्योत्तरपदत्वं सुलभम् न चैकदेशविकृतन्यायेनपवृत्त्युत्तरपदत्वस्य पेइत्यत्रातिदेशेन नैतदपि अन्तादिवच्चेत्यस्य फलमिति वाच्यम् । अर्द्धाधिकस्य विकृतत्वात् न च क्षीरपशब्दे यदेकाजुत्तरपदघटितसमासत्वं तदुक्तन्यायेनक्षीरपे इत्यत्रादिश्यतामिति वाच्यम् एकारस्योभयादेशतया तदेकदेशमात्रविकाराभावात् । पूर्वैषुकामशमइत्यत्रत्यभाष्यप्रामाण्येन मात्रनिवेशस्यावश्यकत्वात् ।

न च पे इत्यत्रैकाचत्वं स्वतः सिद्ध मुत्तरपदत्वमात्रमतिदेष्टव्यं तच्च स्थानिवत्सूत्रेणापि सुलभमिति वाच्यम् उत्तरपदत्वमात्रस्याशास्त्रीयत्वेन तेनातिदेशासंभवात् शास्त्रीयस्य एकाजुत्तरपदत्वस्य च अल्विधित्वात् शास्त्रीयत्वं च शास्त्रकारीयसंकेततावच्छेदरूपावच्छिन्नपदादिपदप्रतिपाद्यतावच्छेदकत्वम् ।

अथ शास्त्रीयत्वं शास्त्रस्थपदशक्यतावच्छेदकत्वरूपमुच्यते तच्चोत्तरपदत्वस्यापीति तत्स्थानिवत्सूत्रेण सुलभमतोऽन्तादिवच्चेति सूत्रं व्यर्थमित्युच्यते तदा भियो हेतुभये इति सूत्रे भिय इति निर्देशार्थं "सूत्रमावश्यकं तथाहि भीई इति प्रश्लिष्य भिय इति निर्देशः एकादेशे वर्णयोरेव स्थानित्वेन स्थानितापर्याप्त्यधिकरणवृत्तिधर्मस्यैव स्थानिवत्सूत्रेणातिदेशात् भीशब्दे धातुत्वातिदेशाभावेनेयादेशानापत्तिः, अन्तादिवच्चेति सत्त्वपक्षे भीवृत्तिधातुत्वस्य कृतैकादेशविशिष्टेऽतिदेशादियादेशसिद्धिः ।

अथोच्येत आनुमानिकस्थान्यादेशभावेन भी इत्यस्य स्थाने भी इत्यादेश-इति स्वीकारात्स्थानिवत्त्वेन धातुत्वलाभस्तर्हि प्रत्येकं स्थानित्वोपगमे स्वाश्वैरिणीत्यत्रापि स्व इत्यस्य स्वाश्व इत्यादेशस्वीकारात्स्वशब्दत्वातिदेशेन वृद्ध्यापत्तिः अतः भी ई इत्यस्य भीइत्यादेशः स्व अश्व इत्यस्य स्वाश्व इत्यादेश इत्येव समुदायस्थान्यादेशभावः कल्पनीयः न तु प्रत्येकं समुदाये च न धातुत्वमिति न स्थानित्वेन सिद्धिः ।

ननु अर्थवत्येव स्थान्यादेशविश्रान्तिरिति सिद्धान्तात् भी इत्यस्यस्थाने भी इत्यादेशः, ई इत्यस्य स्थाने ई इत्यादेशो भीई इत्यस्यस्थाने भी इत्यादेशः त्रिवि-

धानुमानिकस्थान्यादेशभावस्वीकारेण प्रथमपक्षे स्थानितावच्छेदकतापर्याप्त्यधिकरणवृत्तिर्धर्मः—आदेशतापर्याप्त्यधिकरणवृत्तिभवतीति नियमात् स्थानितावच्छेदकपूर्वत्वपर्याप्त्यधिकरणीभूतभीवृत्तिधातुत्वस्य एकादेशविशिष्टेऽतिदेशेनादोषः । स्वाश्वेरिणीत्यस्य तु स्व इत्यस्य स्वा इत्यादेशः—अश्व इत्यस्य आश्व इत्यादेशः स्व अश्वइत्यस्य स्वाश्व इत्यादेशः इति त्रिविधानुमानिकस्थान्यादेशभावपक्षेषु प्रथमपक्षे स्वशब्दत्वस्य स्वा इत्यत्रानेतुं शक्यत्वेऽपि स्वाश्वइत्यत्रानेतुमशक्यत्वान्न दोषः—इति चेन्न

अन्तादिवच्चेतिसूत्राभावे उभयत आश्रयणे नान्तादिवदित्यपि न स्यात् तथाचाभीयादित्यत्र स्थानिवत्सूत्रेण अभिशब्दे उपसर्गत्वस्य ईकारे इणत्वस्य चातिदेशेन ह्रस्वत्वापत्तेः ।

नचेदानीमपि उभयतआश्रयणेनान्तादिवदित्यस्य स्थाने उभयतआश्रयणे न स्थानिवदित्येव स्वीक्रियते इति अभीयादित्यत्र न दोषः इति वाच्यम् एवं सति अचः परस्मिन्नित्यस्यापि निषेधापत्त्या प्लायते इत्यत्र लत्वानापत्तेः ।

वस्तुतस्तु उभयत आश्रयणे न स्थानिवदितिनिषेधः स्थानिवत्सूत्रस्यैव न तु अचः परस्मिन्नित्यस्य इति प्लायत इत्यत्र न दोषः किंच अभि इयादिति स्थिते धातूपसर्गयोः कार्यमन्तरङ्गमिति स्वीकारेण पूर्वं ह्रस्वत्वे ततो दीर्घत्वे पुनर्ह्रस्वत्वं न भविष्यति लक्ष्ये लक्षणन्यायादिति नोपयोगः—उभयत आश्रयणे नान्तादिवदित्यस्येति । एवं च स्थानिवत्सूत्रेण गतार्थमेवान्तादिवच्चेतिसूत्रमिति गुरुचरणाः । अमी इत्यत्रादः शब्दसंबन्धित्वमपि आनुमानकिस्थान्यादेशभावमादाय अद इत्यस्य अदे इत्यादेश इति पक्षे स्थानिवत्त्वेन भविष्यति इत्यलम् ।

अत्रेदं तत्त्वम् इकारघटितस्य यकारघटित आदेश इत्यानुमानिकस्थान्यादेशभावस्वीकारे सुधीत्यस्य दध्य् इत्यादेशः कथं न भवतीति चेदुच्यते स्थान्यघटित आदेशघटितः स्थानिसमभिव्याहृतयावद्वर्णघटितः स्थानिसमभिव्याहृतवर्णेतराघटितश्च आदेशो भवतीत्यर्थः । स्थानेऽन्तरतमपरिभाषासहकारेण इकोयणचीत्यादेः स्वीकारेणादोषादिति ।

## हैहेप्रयोगे हैहयोः

वाक्यघटकहूयमानपदावयवो य ऋद्भिन्नो गुरुस्तस्य स्थाने प्लुतः स्यादिति गुरोरनृत इत्यस्यार्थः, एवञ्चहेरामेत्यादावेकारस्यापि हूयमानार्थकपदघटकतया गुरोरनृतइत्येवसिद्धेइदन्नियमार्थमितितात्पर्यम् ।

ननु हैहयोरित्यस्य वाक्यविशेषणतया तदन्तविधौ हैहेशब्दान्तवाक्यघटक हैहेशब्दयोरित्यर्थात् हेरामेत्यादौ हैहेशब्दान्तत्वाभावेनप्लुतोनस्यात् अतआह हैहेन्ते इति अयम्भावः, हैहेशब्दान्तवाक्यावयवयोः प्रत्यासत्त्या हैहयोरित्यर्थक हैहेन्त इत्येव सिद्धे हैहेप्रयोग इति सामर्थ्यात्तदन्तविध्यभावे वाक्यावयवयो-

हैहयोरित्यर्थेन हेराम इत्यत्रापि प्लुतसिद्धिः ।

न च हैहेऽन्त इत्यनुचितम् हैहयोरित्युक्तेऽपि तदन्तविधिनोक्तार्थलाभसम्भवात्, निर्दिश्यमानपरिभाषाया अप्रवृत्तये हैहेऽन्त इत्यस्यैवौचित्यात् अन्यथा निर्दिश्यमानपरिभाषया 'हे राम कृष्ण हे' इत्यत्र वाक्ये हे इत्यस्य निर्दिश्यमानत्वाभावात् प्लुतो न स्यात् ।

ननु गुरोरनृत इत्यत्र वाक्ये पदस्य विशेषणत्वेन हूयमानार्थवाचकपदान्तवाक्यावयवहूयमानार्थकपदावयवगुरोरित्यर्थात् प्रत्यासत्त्या यादृशहूयमानार्थवाचकपदान्तं वाक्यं तादृशपदावयवगुरोरित्यर्थात् हे रामेत्यादौ अप्राप्तप्लुतविध्यर्थत्वेनास्यनियमनार्थत्वं न संभवति ।

अयं भावः नियम्यशास्त्रं गुरोरनृत इति तदीयोद्देश्यतावच्छेदकं संबोधनविषयकवाक्यघटकटित्वसमानाधिकारणहूयमानार्थवाचकपदघटकटित्वं तादृशपदघटकच्छिन्नानन्त्यगुरुत्वंचेत्यन्यतरत् । हैहेइत्यस्योद्देश्यतावच्छेदकं च हैहेशव्दघटकात्त्वं तस्य हेरामेत्यत्रत्यहे शव्देऽपि सत्त्वेन गुरोरित्यस्योद्देश्यतावच्छेदकस्यचासत्त्वेन व्याप्यव्यापकभावाभावात्कथंनियमार्थत्वमितिचेद्—

अत्रोच्यते वाक्यघटकप्रयुज्यमानयोः हैहयोरित्यर्थकं हैहेप्रयोगे इत्येको योगः हेराम इत्यत्रविध्यर्थस्ततो हैहयोरित्यपरो योगः तस्य नियमार्थत्वमित्याशयात् हैहेघटितवाक्यघटकगुरोश्चेत्प्लुतस्तर्हि हैहेघटकगुरोरेवेत्यर्थः इत्थं च गुरोरनृत इत्यत्र हैहेघटितवाक्यातिरिक्तत्वेन संकोच इति न काप्यनुपपत्तिरिति प्राञ्चः ।

शेखरकृतस्तु हैहयोः संबोधनद्योतकत्वेन हूयमानार्थवाचकपदत्वाभावात्प्लुताप्राप्त्या विध्यर्थमिदं हे राम इत्यादौ प्लुतसमावेशो भवत्येव इति । यत्तु हूयमानार्थपदस्य टेः प्लुतस्य बाधकोऽयं तक्रन्यायादिति तत्फलितार्थकथनमेव हैहयोरेवेति तन्न हेशिवइत्यत्रास्य चारितार्थ्येन तन्न्यायविषयाभावादित्याहुः ।

## यथासंख्यमनुदेशः समानाम् ।

यथासंख्यमिति समसंख्याकानामनुदेशः पश्चाद्भववाक्यार्थबोधकालिकः सबन्धो यथासंख्यं संख्याकर्मकातिक्रमणकर्तृत्वाभाववान्भवति विजातीयक्रमविशिष्टप्रतियोग्यनुयोगिको न भवतीति भावः । सजातीयक्रमविशिष्टप्रतियोग्यनुगिको भवतीति भावः साजात्यं च प्रथमत्व द्वितीयत्व तृतीयत्वादिना यथा एचोऽयवायावइत्यनेन प्रथमत्ववत एकारस्य प्रथमत्ववानयेव द्वितीयत्ववत ओकारस्य द्वितीयत्ववानेव ।

ननु एकारस्य प्रथमत्वे ओकारस्य द्वितीयत्वे किं गमकं वैपरीत्यमेव कुतो नेति चेन्न—

द्वितीयतृतीयेत्यादिपूरणप्रत्ययमार्थमाहात्म्येनैव तल्लाभात् ।

पूरणार्थश्चापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितमुख्यविशेष्यताश्रयत्वमिति बोध्यम् । अपेक्षाबुद्धिश्चैवं बोध्या अयमेकः एतदेकत्वविशिष्टोयमेकः इतीमौ द्वाविति द्वित्वोत्पादिकेयमपेक्षाबुद्धिः । इमौ द्वौ एतदेकत्वविशिष्टोऽयमेक इतीमे त्रयः इतीयं त्रित्वोत्पादिकापेक्षाबुद्धिः । पूरणप्रत्ययार्थविशेष्यतायां मुख्यत्वविशेषणेन प्रथमे पूरणप्रत्ययार्थत्वं न, अन्यथायमेकइति कथनेन एकत्वावाच्छिन्नप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यतायास्सत्वेन तत्रापि तत्त्वं स्यात् ।

तथा च समसंख्यानां पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः प्रतियोगिविशिष्टानुयोगिको भवति वैशिष्ट्यं च स्ववृत्तिसंख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासजातीयविशेष्यताश्रयत्वसंबन्धेन साजात्यं च मुख्यत्वामुख्यत्वान्यतरसंबन्धेन ।

यथाप्रतियोगिनौ एकार ओकारश्च तद्वृत्तिसंख्योत्पादिकाबुद्धिरयमेकारः एतदेकत्वविशिष्टोयमेकश्ओकार इतीमौ द्वौ इत्याकारिका तदीयैकत्वनिष्ठप्रकारतानिरूपिविशेष्यतोभयोरेकारौकारयोस्तयोर्मध्ये प्रथमे प्रकारतासमानाधिकरणत्वादमुख्या तत्सजातीया या अयनिष्ठैकत्वनिष्ठप्रकारतानिरूपिताऽमुख्या विशेष्यता तदाश्रयः अय् तदनुयोगिकः पूर्वोक्तः सवन्धः एकारौकारवृत्तिद्वित्वसंख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितमुख्यविशेष्यतौकारे तत्सजातीयमुख्यविशेष्यताश्रयः अव् तदनुयोगिकः संबन्धो भवति ।

अत्रेदं विचार्यते एतादृशार्थस्वीकारेपि एकारौकाररूपप्रतियोगिवृत्तिद्वित्वसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता या ओकारनिष्ठा मुख्या विशेष्यता तत्सजातीया त्रित्वसंख्योत्पादिकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपिता या आयूनिष्ठा मुख्यविशेष्यता तदाश्रयः आय् इत्यादेशोपि स्यात् ।

तस्मात्समसंख्याकानामनुदेशः प्रतियोगिविशिष्टविशेष्यताश्रयानुयोगिको भवतीत्यर्थः वै० स्ववृत्तिसंख्योत्पादकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासजातीयत्व स्ववृत्तिसंख्यावृत्तिसंख्यात्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवदपेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितत्वैतदुभयसंबन्धेन साजात्यं च मुख्यत्वामुख्यत्वान्यतरसंबन्धेन ।

अथवा एकत्वावच्छिन्नत्व एकत्वानवच्छिन्नत्वान्यतरसंबन्धेन । द्वितीयसंबन्धस्थानेऽपि स्ववृत्तिसंख्योत्पादकोपेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितत्वेति वा सवन्धोदेयः फलं तु तुल्यं एवं च ओकारस्य नायादेशः अय् अव् आय् वृत्ति त्रित्वोत्पादकापेक्षाबुद्धिः तन्निष्ठजनकतावच्छेदको धर्मो नद्वित्वोत्पादकापेक्षाबुद्धित्वस्य इति नोक्तदोष इति ।

## ङमोह्रस्वादचि ङमुण् नित्यम् ।

ङमोह्रस्वादचीत्यत्र पदस्येत्यधिकृतं विभक्तिविपरिणामेन ङमा विशेष्यते तस्मादत्र तदन्तविधौ ङमन्तपरम् ह्रस्वादिति तु स्वाव्यवहितोत्तरत्वसंबन्धेन ङमा संबध्यते ङमन्तमिति सामानाधिकरण्येन पदेन सह, अचीति सप्तम्या मयउञोवेत्यत्र चारितार्थ्येन निरवकाशया पञ्चम्या उपस्थितोत्तरस्येत्येनेन सामानाधिकरण्याय तस्याः षष्ठीप्रकल्पनम् ततश्च ह्रस्वात्परो योङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्यर्थः ।

न च पदार्थः पदार्थेनेति न्यायेन ङमन्तपदार्थैकदेशे ङमि ह्रस्वादित्यस्यान्वयो न भवितुमर्हतीति वाच्यम् गभीरायां नद्यां घोष इत्यत्रेव ङम् पदस्यैव ह्रस्वात्परङमन्तलक्षणया ह्रस्वपदस्य तात्पर्यग्राहकत्वेनादोषात् श्रुतानुमितयोरिति परिभाषया श्रुतसंबन्धस्यैव बलीयस्त्वाच्च ।

न च ङमेव ह्रस्वविशेषणमस्तु ङमः परो यो ह्रस्वस्ततः परस्याचो ङमुडित्यर्थे मन्यतेः पचाद्यचि हेमन आस्तामित्यत्रैव ङमुङ् स्यात् न तु प्रत्यङ्ङात्मेत्यादाविति वाच्यम् तस्मिन्निति निर्देशोपपत्तये ङमो विशेष्यत्वस्यैव न्याय्यत्वात् ।

न च ङम इति षष्ठ्यन्तमेवास्तु तथा च ह्रस्वात्परस्य पदावयवस्य ङमोऽचि ङमुडित्यर्थोऽस्तु इति वाच्यम् अनितीत्यादौ ङमुडापत्तेः ।

न च तदर्थं उञि च पदे इत्यतः पदे इत्यनुवर्त्य अजादौ पदे इत्यर्थान्न दोष इति वाच्यम् तत्र निर्वाहेऽपि कुर्वन्नास्त इत्यत्र णत्वापत्तेः ङम उत्तरस्याचो ङमुडिति भाष्यविरोधापत्तेश्च तस्मान्ङम इति पञ्चम्यन्तं न तु षष्ठ्यन्तम् ।

ननु तथापि ह्रस्वात्परो यो ङम् ततः परस्य पदावयस्याचो ङमुडित्येवार्थः स्यादिति चेन्न अनितीत्यादावुक्तदोषतादवस्थ्यात् ।

न च परमदण्डिनावित्यत्र अन्तर्वर्तिविभक्त्या पदत्वेन ङमुट स्यादिति पदे इत्यनुवर्त्याचीत्यस्य विशेषणत्वेन तदादिविधौ अजादेः पदस्येति वैयधिकरण्येन ङमा संबध्यते तथा च ह्रस्वात्परो यो पदावयवो ङम् ततः परस्याजादेः पदस्य ङमुडित्यर्थेन अनितीत्यादौ न दोष इति वाच्यम् नलोपवारणायोत्तरपदत्व इत्यस्यावश्यमाश्रयणीयतया तयैव ङमुड्वारणसंभवे पदे इत्यनुवृत्ते र्निष्फलत्वादिति एवं च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्येव सूत्रार्थ इति निष्कर्षः प्राचीनाः ।

शब्दरत्नकृतस्तु माषकुम्भवापेनेत्यर्थं कार्यित्वनिवेशस्यावश्यकतया परिभाषया ङमुड्वारणं न संभवतीति पदे इत्यनुवृत्तिरावश्यिक्येवेति पदावयवो ह्रस्वात्परीभूतो ङम् ततः परस्याजादेः पदस्य ङमुडिति व्याख्यानेऽपि न दोष इत्याहुः ।

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्यर्थः ।

नन्वेवमर्थस्वीकारे परमदण्डिनावित्यादौ प्रत्ययलक्षणेनान्तर्वर्तिविभक्त्या पदत्वे ङमुडापत्तिरिति चेन्न--

परमदण्डिनावित्यादौ नलोपवारणायावश्याश्रयणीयया उत्तरपदत्वे इति परिभाषया प्रत्ययलक्षणनिषेधेन दण्डिन्नित्यस्य पदत्वाभावेन ङमुडप्राप्तेरिति मनोरमाकारः । उत्तरस्य पदत्वे कोर्थः पदसंज्ञायां प्रत्ययलक्षणं न भवति पदादिविधौ तु भवतीति परिभाषार्थः प्राचीनमते ।

शब्दरत्नकारास्तु उत्तरपदत्वे चेत्यस्य पूर्वोक्तरीत्याऽर्थस्वीकारे माषकुम्भवापेनेत्यादौ कुम्भशब्दस्य पदत्वे प्रत्ययलक्षणनिषेधेन पदत्वाभावे पदव्यवायेऽपीति निषेधाप्रवृत्या णत्वापत्तिरतः कार्यित्वनिवेशस्यावश्यकतया उत्तरस्य पदत्वे कोर्थः पदसंज्ञाप्रयुक्ते कार्ये प्रत्ययलक्षणं नेति परिभाषार्थः ततश्च नलोपस्य तया वारयितुं शक्यत्वेऽपि ङमुड् वारयितुं न शक्यते इति ञ्मि च पदे इत्यतः पदे इत्यनुवर्त्य ह्रस्वात्परो यो ङम् तदन्त यत्पदं तस्मात्परस्याजादेः पदस्य ङमुडित्यर्थेन परमदण्डिनावित्यादौ ङमुटं वारयन्ति ।

न च पदव्यवायेऽपीति सूत्रारम्भादेव उत्तरपदत्वे चेति निषेधो माषकुम्भवापेनेत्यादौ न प्रवर्त्ततेति कार्यित्वनिवेशो विफलः एवं च परिभाषयैव परमदण्डिनावित्यादौ ङमुड्वारणं भविष्यति पदे इत्यनुवृत्तिर्व्यर्थेति वाच्यम् अङ्गानां योगा अङ्गयोगा चत्वारोऽङ्गयोगा यस्मिंस्तेन चतुरङ्गयोगेनेत्यादौ अङ्गशब्दस्योत्तरपदत्वाभावेन वार्तिकाप्रवृत्या पदव्यवायेऽपीत्यस्य चारितार्थ्यात् ।

न च पूर्वो दण्डी प्रियो यस्येति त्रिपदे बहुव्रीहौ नलोपार्थं दण्डिन्नित्यस्य पदत्वायोत्तरपदत्वं मध्यमत्वानाक्रान्तं विवक्षणीयम् मध्यमत्वं च वृत्तिविशिष्टत्वं वै० स्वघटकार्थवदव्यवहितपूर्वत्व स्वघटकार्थवदव्यहितोत्तरत्वोभयसंबन्धेन एवं च माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य मध्यमत्वेन निषेधाप्रवृत्या कार्यित्वनिवेशो विफल इति वाच्यम्, परमलोम्निचरः परमलोम्निशय इत्यत्र लोम्नो मध्यमत्वापत्त्या निषेधाभावेन नलोपापत्तिरतः यद्वृत्त्यारम्भकसुन्निमित्तका पदसंज्ञा त्विकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमत्वं वै० च स्वघटकार्थवदव्यवहितपूर्वत्व स्वघटकार्थवदव्यवहितोत्तरत्वोभयसंवन्धेव एवं च माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य मध्यमत्वाभावेन वार्तिकाप्रवृत्तये कार्यित्वनिवेशस्यावश्यकत्वात् ।

वस्तुतस्तु पूर्वदण्डिप्रिय इत्यत्र दण्डीत्यस्य पदत्वार्थमुत्तरपदत्वं मध्यमत्वानाक्रान्तं न विवक्ष्यते अपि तु समासघटकत्वे सति समासघटकाव्यवहिततपूर्वत्वाभाववत्स्वरूपमुत्तरपदत्वं गृह्यते एवं च माषकुम्भवापेनेत्यादौ कुम्भस्य समासघटकवापशब्दाव्यवहितपूर्वत्वस्यैव सत्त्वेन उत्तरपदत्वाभावाद्वार्तिकाप्रवृत्तौ कार्यित्वनिवेशो विफलः परमदण्डिनावित्यादौ ङमुड्वारणं परिभाषया

भविष्यतीति पदे इत्यनुवृत्तिर्व्यर्था ।

नन्वेवमुत्तरपदत्वस्वीकारे अत्रेरपत्यानि अत्रय इत्यत्र अत्रीत्यस्योत्तरपदत्वाभावेन वार्तिकाप्रवृत्त्याऽन्तर्वर्तिविभक्त्या पदत्वेन एङः पदन्तादतीति पूर्वरूपापत्तिः ।

न चैङः पदेऽतीति न्यासान्न दोष इति वाच्यम् पचति भवति सततं यस्यां क्रियायां सा पचतिभवतिः तस्मादाचारक्विपि पचतिभवतेऽतीत्यत्र पूर्वरूपानापत्तेः तथान्यासेन पूर्वरूपवारणेऽपि अत्रय इत्यत्र यलोपापत्तेश्चेति चेन्न—

वृत्तिविशिष्टत्वमुत्तरपदत्वमितिस्वीकारेणादोषात् वै० स्वघटकत्व स्वघटकान्यवहितपूर्वत्वाभाववत्त्वोभयसंबन्धेन ।

नचैवमपि परमलोम्निचरः परमलोम्निशय इत्यादौ वृत्तिघटककेकाराव्यवहितपूर्वत्वस्यैव लोमशब्दे सत्वेन उत्तरपदत्वाभावाद्वार्तिकाप्रवृत्त्या पदत्वान्नलोपापत्तिरिति वाच्यम् स्वघटकस्य प्रत्ययेतरस्य विवक्षणेनादोषात् ।

नचैवं पूर्वो दण्डी इः प्रियो यस्य स पूर्वदण्डीप्रिय इत्यत्र इकारस्य प्रत्ययत्वेन तदितरोदासीनाव्यवहितपूर्वत्वाभावस्य दण्डिन् शब्दे सत्त्वेन उत्तरपदत्वापत्त्या नलोपानापत्तिः तदर्थं सुबितरनिवेशे च पञ्चगवधन इत्यत्र गो इत्यस्यपदत्वापत्तिरिति वाच्यम् ।

वृत्तिविशिष्टत्वमुत्तरपदत्वमिति स्वीकारेणादोषात् वै० स्वघटकत्व स्वघटकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयप्रत्ययेतराव्यवहितपूर्वत्वाभाववत्त्वोभयसम्बन्धेन ।

न च राजीयतीत्यत्र वृत्तिघटकराजन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयक्यजितरोदासीनाव्यवहितपूर्वत्वाभाववत्त्वस्य राजशब्दे सत्त्वेनोत्तरपदत्वात् पदत्वाप्रवृत्त्या नःक्ये इत्यस्य नियमार्थत्ववर्णनं भाष्यकृतोऽसङ्गतं स्यादिति वाच्यम् उद्देश्यतायां सुबन्तत्वानवच्छिन्नत्वरूपविशेषणादानेनादोषात् बहुचोऽपि सुबन्तत्वावच्छिन्नोद्देश्यतेति पूर्वदण्डिबहुपाचकइत्यत्रापि न दोष इत्यलम् ।

## एतत्तदोः सुलोपोऽकोरिति ।

ककाररहितयोरेततदोस्सम्बन्धिनः सोर्लोप इति सूत्रार्थः । न च परमसद्दातीत्यत्र सोस्तच्छब्दसम्बन्धित्वाभावेन लोपो न स्यादिति वाच्यम् एततदर्थगतसंख्याभिधायित्वरूपसम्बन्धविशिष्टस्य सम्बन्धिपदेन ग्रहणात् ।

न चैवमपि ब्राह्मणः स ददातीत्यादौ तच्छब्दार्थगतैकत्वरूपसंख्याभिधायित्वस्य ब्राह्मणपदोत्तरसोरपि सत्त्वेन लोपापत्तिरिति वाच्यम् स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वसम्बन्धेन एतत्तद्विशिष्टस्यैव सवन्धिपदेन विवक्षणाद् ब्राह्मणः स ददातीत्यादौ तच्छब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्य तच्छब्दोत्तरसोरेव सत्त्वेनादोषात् ।

न चैवमपि परमस ददातीत्यादौ तच्छब्दार्थवद्निष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्य सावभावेन लोपो न स्यादिति वाच्यम् अपर्याप्ताया उद्देश्यताया विवक्षणेनादोषात् ।

न चैवमपि तत्पुरुषो नास्तीत्यादौ पुरुषपदोत्तरसोर्लोपापत्तिः स्वानन्तर्यसम्बन्धविशिष्टस्यैव सम्बन्धिनो ग्रहणेनादोषात् ।

न च ब्राह्मणस्स ददातीत्यत्र ब्रह्मणपदोत्तरसोर्लोपापत्तिः ॥

एतत्तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व एतत्तदर्थगतसंख्याभिधायित्वैतदुभयसंबन्धेन स्वविशिष्टस्यैव सम्बन्धिनो ग्रहणेनादोषात् एवञ्चापर्याप्ताया उद्देश्यताया निवेशेन परमसददातीत्यादौतत्पुरुषोविद्यते इत्यादौ च न दोष इति बोध्यम् ।

न च तत्कल्पमित्यादौ सोर्लोपापत्तिः, प्रथमसम्बन्धेनैव संबन्धित्वस्य विवक्षणात् ।

नन्वेवमपि परमस ददातीत्यत्रैव दोष इति चेन्न एतत्तच्छब्दप्रतिपाद्यतावच्छेदकधर्मावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वस्य विवक्षणात् ।

नन्वेवमपि ब्राह्मणः स ददातीत्यत्र सामान्यविशेषयोरभेदः संसर्ग इति व्युत्पत्त्या बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नाभिन्नैकत्ववान्ब्राह्मण इति बोधात् तादृशसम्बन्धेन तच्छब्दोत्तरसोरसम्बन्धित्वेन लोपानापत्तिरिति चेन्न ककाररहितैतत्तद्व्यवहितोत्तरत्वविशिष्टस्यैव ग्रहणेनाद्दोषादित्यलम् ।

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।

अस्माच्छाब्दबोधस्तु प्रतियोगित्वसंबन्धावच्छिन्ना धातुत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या भेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपिता याऽऽश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता, तथा प्रतियोगित्वसंबन्धावच्छिन्ना प्रत्ययत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या भेदत्वावच्छिन्नाविशेष्यता तादृशविशेष्यत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपिता याऽऽश्रयत्वावच्छिन्नाविशेष्यता तादृशविशेष्यत्वावच्छिन्नाभेदसंबन्धावच्छिन्नप्रकारतानिरूपिता, एवं प्रतियोगित्वसंबन्धावच्छिन्ना प्रत्ययान्ततदादित्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या भेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितायाऽऽश्रयत्वावच्छिन्नाविशेष्यता तादृशविशेष्यत्वावच्छिन्नाभेदसंबन्धावच्छिन्नप्रकारतानिरूपिता, च यार्थवत्त्वाच्छिन्ना प्रातिपदिकत्वा (प्रातिपदिकपदवत्वा) वच्छिन्नप्रकारतानिरूपिता विशेष्यता तादृशविशेष्यत्वावच्छिन्ना याऽभेदसम्ब-

न्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना वृत्तित्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपितविशेष्यताशालिनी सत्तेति बोध्यम् ।

उपपत्तिस्तु अधातुरित्यत्र नञो भेदोऽर्थः तस्य चार्थवता सममभेदान्वयस्य बाधात् स्वरूपसम्बधेनान्वयसम्भवेऽपि अर्थवदधातुरिति सामानाधिकरण्यानुरोधात् नञो भेदवति लक्षणा नञर्थैकदेशे धातुपदार्थस्य प्रतियोगित्वसम्बन्धेनान्वयः भेदस्य च स्वरूपसम्बन्धेन मतुबर्थाश्रये तस्य चाभेदेनार्थवति तत्रैव अभेद सम्बन्धेन प्रतिपदिकपदार्थस्य अर्थवतश्चाभेदेन तिवर्थाश्रये तस्य च वृत्तित्वसम्बन्धेन सत्तायामन्वयः एवमप्रत्ययपदेऽप्रत्ययान्तपदे च बोध्यम् ।

केचित्तु अधातुरित्यत्र धातुपदार्थस्य प्रतियोगित्वसंबन्धेन नञर्थभेदेऽन्वयः भेदस्य च स्वरूपसंबन्धेनार्थवत्यन्वयः भेदवति लक्षणा व्यर्था—

न च नामार्थयोरभेद एव संबन्ध इति व्युत्पत्तिविरोधः निपातातिरिक्तनामार्थविषयकत्वस्य तादृशव्युत्पत्तेर्व्युत्पत्तिवादादौ सिद्धान्तित्वादिति वदन्ति—

तन्न—अर्थवदधातुरिति सामानाधिकरण्यानुरोधेन भेदवति लक्षणाया आवश्यकत्वात् लक्षणाया अस्वीकारे 'तिङ्समानाधिकरणे प्रथमा' इति सिद्धान्तेनाधातुरित्यत्र प्रथमानुपपत्तेश्च 'अनीलं घटमानय' इत्यादौ अनीलपदाद् द्वितीयार्थे भेदवत्परत्वस्यावश्यकत्वाच्च ।

अथ भेदवति लक्षणाङ्गीकारे तदेकदेशे भेदे कथं धातुपदार्थस्य प्रतियोगितासम्बन्धेनान्वयः यत्किंचित्पदार्थनिष्ठप्रकारतानिरुपितविशेष्यतासंम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति यकिंचित्पदजन्यमुख्यविशेष्यतयोपस्थितेः कारणत्वमित्येतादृशकार्यकारणभावमूलकेन पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति नियमेन विरोधादिति चेन्न—

घटत्वगोत्वादौ नित्यापदर्थान्वयतात्पर्येण नित्यो घटः नित्यो गौरित्यादेः प्रमाण्यवारणायोक्तव्युत्पत्तिस्वीकारेऽपि देवदत्तस्य गुरुकुलं चैत्रस्य दासभार्या देवदत्तस्य नप्तेत्यादौ देवदत्तादेर्निरूपितत्वसम्बन्धेन गुरुत्वादावेवान्वयस्याभिमततया उक्तकार्यकारणभावे अभेदसम्बन्धावच्छिन्नायाः प्रकारताया नित्यसांकाङ्क्षेतरावृत्तिविशेष्यताया वा कार्यतावच्छेदककुक्षौ निवेशेन धातुनिष्ठप्रकारताया अभेदसंवन्धावच्छिन्नत्वाभावेन भेदस्य नित्यसाकांक्षत्वेन वा उक्तनियमाप्रवृत्या अदोषात् ।

ननु यद्धर्मावच्छिन्नवाचकपदोत्तरं नञ्पदश्रुतिर्नञा तद्धर्मावच्छिन्नप्रतियोगिताक एव भेदः प्रत्याय्यत इति नियमेन प्रकृतेऽर्थवत्पदोत्तरनञ्पदश्रवणेन अर्थवत्त्वावच्छिन्नप्रतियोगिताक एव भेदः प्रतीयेतेति चेन्न—

घटानधिकरणं भूतलमित्युपक्रम्य समासान्तर्गतनञामुत्तरपदार्थमात्रान्व-

यित्वव्युत्पत्तेः पञ्चलक्षण्यां स्वीकृततया यद्धर्मेत्यादिव्युत्पत्तेः समासातिरिक्तविषयत्वेनादोषात् ।

वस्तुतस्तु यद्धर्मावच्छिन्नवाचकपदसाकांक्षं नञ्पदं श्रूयते तद्धर्मावच्छिन्नप्रतियोगिताकभेदो नञा प्रत्याय्यते इत्येव व्युत्पत्तिरित्यदोषः, अन्यथा यो न वन्हिमान् स न धूमवान् इतिवाक्याद् वन्हिमद्भेदधूमवद्भेदयोः न पचति चैत्र इत्यत्र पाकानुकुलकृत्यभावस्य 'निशायामुदितो यो वै स चन्द्रो न च भास्कर' इत्यत्र भास्करभेदस्य चैत्रस्य धनं न मैत्रस्येत्यत्र धने मैत्रस्वत्वाभावस्य बोधासम्भवः स्यात् ।

ननु द्रव्यं न घट इति प्रयोगवारणाय भेदीयानुयोगितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रतियोगिनिरूपितवृत्तित्वाभावप्रकारकनिश्चयत्वेन कारणता स्वीक्रियते ततश्च प्रतियोग्यवृत्तिधर्मस्यैव भेदीयानुयोगितावच्छेदकत्वमिति नियमः फलति ।

एवं च द्रव्यत्वस्य भेदप्रतियोगिनि घटे वर्तमानतया न तथाविधः प्रयोगः एवमर्थवदधातुरित्यपि प्रयोगो न स्यात् अर्थवत्त्वस्य भेदप्रतियोगिनि धातौ वर्तमानत्वादिति चेदसति प्रतिबन्धके उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते इति नियमेनैव द्रव्यन्न घट इत्यस्य वारणसम्भवे उक्तनियमाङ्गीकारे फलाभावेनानङ्गीकारात् ।

अत एवाघटं द्रव्यमानय, अमैथिलं बाह्मणं भोजयेत्यादिप्रयोगाः संगच्छन्ते द्रव्यं न घट इत्यत्र उद्देश्यतावच्छेदकद्रव्यत्वव्यापकत्वस्य घटभेदरूपविधेये बाधान्न तथा प्रयोगः । अर्थवदधातुरित्यत्र चार्थवत्त्वमुद्दिश्य न धातुभेदो विधीयते किन्तर्हि प्रतिपदिकसंज्ञा इत्यदोषः । अर्थवत्त्वस्यानुयोगितावच्छेदकत्वाभावेपि तत्सामानाधिकरण्येनानुयोगितायाः सत्त्वे बाधकाभावाच्च अघटं द्रव्यमानय घटान्यद्द्रव्यमित्याद्यनुरोधेन भेदविधयकस्थले एव तादृशनियमस्याङ्गीकाराच्च इतरविशेषणतानापन्ने यत्र नञर्थान्वयस्तत्रैव प्रतियोग्यवृत्तिधर्मस्य नञर्थान्वयित्वावच्छेदकत्वमिति नियमस्वीकारात् ।

अतएवाघटं द्रव्यमानय इत्यस्य साधुत्वम् । एवंच प्रकृतेऽर्थवतः शब्दस्वरूपेऽन्वयात्तत्र विशेषणतापन्नेऽर्थवति नञर्थान्वये बाधकाभावः ।

ननु द्रव्यं न घट इत्यस्यैव प्रामाण्यवारणाय नञर्थस्योद्देश्यतावच्छेदकावच्छेदेनैवान्वयो नतूद्देश्यतासामानाधिकरण्येनेति स्वीकर्तव्यं प्रकृतेऽर्थवत्त्वस्य धातावपि सत्त्वेनार्थवत्त्वाच्छेदेन धातुभेदबोधासंभव इति चेन्न—

इतरविशेषणतानापन्नस्य यत्र नञर्थोद्देश्यता तत्रैवोद्देश्यतावच्छेदकावच्छेदेन नञर्थान्वय इत्यङ्गीकारेणादोषात् यत्र तु इतरविशेषणतापन्नस्य नञर्थोद्देश्यता तत्र उद्देश्यतावच्छेदकसामानाधिकरण्येनैव नञर्थान्वयः प्रकृते सामा-

नाधिकरण्येनैवान्वयः इदं सर्वं व्यपेक्षावादिनैयायिकमतेन ।

विशिष्टशक्तिवादिवैयाकरणमते तु अधातुपदस्यैव धातुप्रतियोगिकभेद-विशिष्टे शक्तिरिति न पदार्थैकदेशाद्यन्वयदोषशङ्कापीत्यलम् ।

ननु अधातुपदस्य धातुप्रतियोगिकभेदवत्परत्वे भूधातुर्नैधधातुरिति भेद-स्यापि धातुप्रतियोगिकतया भूधातोः, चालनीन्यायेन सर्वेषां धातूनां वा, प्रातिपदिकत्वापत्तिरिति चेन्न—

धातुपदार्थस्य स्ववृत्तिधातुत्वावच्छिन्नप्रतियोगिताकत्व संवन्धेन भेदेऽन्व-यस्वीकारेण अधातुपदस्य धातुत्वावच्छिन्नप्रतियोगिताकभेदवति शक्तिस्वी-कारेणवोक्तभेदस्य धातुत्वावच्छिन्नतियोगिताकत्वाभावेन ग्रहीतुमशक्यत्वात् धातुत्वावच्छिन्नप्रतियोगिताकस्य धातुर्नेति प्रतीतिसाक्षिकभेदस्य च प्रतियोगि तावच्छेदकेन सह भेदस्य विरोधितया धातौ वक्तुमशक्यत्वेनादोषात् ।

न चैवमपि एकसत्त्वेऽपि द्वयं नास्तीति प्रतीत्या धातुघटोभयं नेति प्रती तिसाक्षिकोभयभेदीयप्रतीयोगिताया धातुत्वावच्छिन्नत्वात्तन्निरूपकोभयभेदस्य धातावपि सत्त्वेन धातोरपि प्रातिपदिकत्वापत्तिरिति वाच्यम् धातुत्वेतरधर्मा-नवच्छिन्नप्रतियोगितानिरूपकभेदवतो ग्रहणेन उभयभेदीयप्रतियोगिताया धातु-त्वेतरघटत्वोभयत्वधर्माभ्यामवच्छिन्नतया तन्निरूपकभेदस्य ग्रहीतुमशक्यत्वे-नादोषात् ।

ननु धातुत्वेतरधर्मानवच्छिन्नेत्यस्य धातुत्वेतरधर्मावच्छिन्नत्वाभाववतीया प्रतियोगिता इत्यर्थः । तथाच धातुघटोभयं नेति भेदीयप्रतियोगिताया धातुत्वेत-रधर्मात्वच्छिन्नत्वेऽपि धातुत्वेतरधर्मावच्छिन्नत्वघटोभयं नास्ति निरुक्तप्रति-योगितायमिति प्रतीतिसाक्षिकधातुत्वेतरधर्मावच्छन्नत्वाभाववत्त्वस्य सत्वेन त-न्निरूपकोभयभेदमादाय धातोः प्रतिपदिकत्वापत्तिस्तदवस्था । किं च धातुत्वेतर-धर्मेत्यस्य धातुत्वत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टो यो धर्म इत्यर्थः तथा च धातुत्वे धातुत्वभेदस्य वक्तुमशक्यत्वेऽपि धातुत्वघटोभयं नेत्युभयभेदस्य वक्तुं शक्यत्वेन धात्वेतरद्धातुत्वमपि जातमिति धातुर्नेति भेदस्यापि धातुत्वेतरधर्माव-च्छिन्नप्रतियोगिताकतया निरुक्तभेदस्यैवाप्रसिद्धिरिति चेदत्रोच्यते ।

धातुत्वपर्याप्ता यावच्छेदकता तन्निरूपिता या अवच्छेद्यता तादृशावच्छेद्य-तावत्प्रतियोगितानिरूपकभेदस्य विवक्षणेन उभयभेदीयप्रतियोगितानिरूपिता-वच्छेदकताधातुत्वघटत्वद्वित्वैतत्रितयपर्याप्ता न तु धातुत्वपर्याप्ता इत्यदोषात् ।

न च प्रत्येकमपर्याप्तस्य समुदायेप्यपर्याप्तत्वनियम इति सिद्धान्तात्त्रितयप-र्याप्तापि अवच्छेदकता धातुत्वपर्याप्तैवेत्युभयभेदमादाय दोषस्तदवस्थ इति वाच्यम् धातुत्वविशिष्टा या प्रतियोगिता तन्निरूपकभेदस्य विवक्षणेनादोषात् वै० स्वव्या-प्यत्व स्वावच्छिन्नत्वोभयसंवन्धेन उभयभेदीयप्रतियोगितायां धातुत्वाच्छिन्नत्व-

सत्त्वेऽपि प्रतियोगिताया घटेऽपि सत्त्वेन धातुत्वव्याप्यत्वाभावान्न दोषः घटत्वेन धातुर्नेति भेदमादाय दोषवारणाय स्वावच्छिन्नत्वदलम् ।

ननु स्वव्याप्यत्वं स्वभाववदवृत्तित्वमिति निरुक्तोभयभेदीयप्रतियोगिताया धातुत्वाभाववद्घटवृत्तित्वेऽपि धातुत्वाभाववद्वृत्तित्वघटोभयं नास्तीत्युभयाभावमादाय स्वाभाववदवृत्तित्वरूपव्याप्यत्वस्य सत्त्वेन दोषस्तदवस्थ एवेति चेन्न—

धातुत्ववृत्त्येकत्वावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगिभूता यावच्छेदकता तन्निरूपकप्रतियोगितानिरूपकभेदस्याधातुपदेन विवक्षणेनादोषात् तथा हि निरुक्तोभयभेदीयप्रतियोगितानिरूपकावच्छेदकतापर्याप्तिः धातुत्वघटत्वोभयत्वत्रितये अनुयोगिता त्रितयनिष्ठा अनुयोगितावच्छेदकं त्रितयनिष्ठं त्रित्वं न तु धातुत्वगतमेकत्वम् तस्यानुयोगितान्यूनवृत्तित्वात् अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वमिति सिद्धान्तादिति धातुनिष्ठस्य उक्तोभयभेदस्यातथात्वेन तथाविधस्य धातुर्नेत्यस्य च धातावसत्त्वेन न दोषः ।

नचैवमपि धातुत्वेन घटोनेति व्यधिकरणधर्मावच्छिन्नाभावमादाय धातोस्तत्त्वं दुर्वारमिति वाच्यम् स्ववृत्येकत्वावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपकत्व, स्वाधिकरणवृत्तित्वोभयसंबन्धेन धातुत्वविशिष्टाया प्रतियोगिता तन्निरूपकभेदस्य विवक्षणेन धातुत्वेन घटोनेत्येत्प्रतीतिसाक्षिकभेदीयप्रतियोगिताया धातुत्वाधिकरणवृत्तित्वाभावेनादोषात् ।

अथैवमपि धातुत्वेन धातुघटोभयन्नेति भेदमादाय दोषस्तदवस्थ इति चेन्न स्ववृत्तिधातुत्वपर्याप्तावच्छेदकतानिरूपकप्रतियोगितानिरूपकत्व स्वमात्रपर्याप्तप्रतियोगितानिरूपकत्वोभयसम्बन्धेन धातुविशिष्टभेदस्यैव विवक्षणेनोक्तभेदस्य प्रथमसंबन्धेन धातुविशिष्टत्वेऽपि धातुघटोभयपर्याप्तप्रतियोगितानिरूपकत्वेन धातुपर्याप्तप्रतियोगितानिरूपकत्वाभावेन उभयसम्बधेन धातुविशिष्टत्वाभावेन ग्रहीतुमशक्यतया दोषाभावात् घटत्वेन धातुर्नेतिभेदमादाय दोषवारणाय प्रथमदलम् ।

न च धातुत्वेन तद्धातुर्नेति भेदमादय दोषस्तदवस्थ इति वाच्यम् धातुवृत्ति यदेकत्वं तद्वृत्तिर्या प्रतियोगिता तन्निरूपकभेदस्य विवक्षणेनादोषात् वृत्तितानियामकः संबन्धश्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकपर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपितानुयोगितानिरूपितनिरूपकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वोभौ ग्राह्यौ घटत्वेन धातुर्नेति भेदमादाय प्रसक्तदोषवारणाय प्रथमदलम् धातुत्वेन घटो नेति भेदमादाय प्रसक्तदोषवारणाय द्वितीयदलमित्यलम् ।

## अथाऽधातुपदार्थः प्रकारान्तरेण विचार्यते ।

अधातुपदस्य धातुप्रतियोगिकभेदवत्परत्वे भूधातुर्नैधधातुरित्याकारक-

भेदस्य भूधातावपि सत्त्वात्प्रतिपदिकत्वापत्तिः तदर्थं धातुत्वावच्छिन्नप्रतियोगितांकभेदवत्परत्वे धातुघटोभयन्नेति भेदमादाय धातोस्तत्त्वापत्तिः ।

अथ धातुत्वमात्रावच्छिन्नप्रतियोगिताकभेदवत्परत्वमङ्गीक्रियते तदा धातुत्वमात्रावच्छिन्नत्वं धातुत्वावच्छिन्नत्वे सति धातुत्वेतरानवच्छिन्नत्वरूपमिति धातुत्वघटोभयं न धातुत्वमिति भेदस्य धातुत्वेऽपि सत्त्वेन तादृशभेदस्यैवाप्रसिद्धिः ।

व्यासज्यवृत्तिधर्मानवच्छिन्ना धातुत्वावच्छिन्ना या प्रतियोगिता तन्निरूपकभेदस्य ग्रहणेन उभयभेदस्य ग्रहीतुमशक्यत्वेऽपि उभयभेदीयप्रतियोगितायां व्यासज्यवृत्तिधर्मावच्छिन्नत्वघटोभयंनास्तीत्येतत्प्रतीतिसाक्षिकाभावमादाय निरुक्तप्रतियोगितायास्तादृशत्वेन तन्निरूपकभेदग्रहणस्य वारयितुमशक्यत्वात् ।

न च धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तियोगिभूतावच्छेदकतानिरूपकप्रतियोगितानिरूपकभेदग्रहणेनोक्तदोषवारणमिति वाच्यम् धातुत्ववृत्तित्वविशिष्टत्वेन सैवावच्छेदकता धातुत्वे एव इति धातुत्ववृत्तित्वविशिष्टावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगि धातुत्वं तादृशानुयोगितावच्छेदकं धातुत्वगतमेकत्वमिति निरुक्तोभयभेदस्यपि निरुक्तरूपतया धातोः प्रातिपदिकत्वस्य वारयितुमशक्यत्वादिति चेद्—

अत्रोच्यते यथा धातुत्ववृत्तित्वविशिष्टावच्छेदकता धातुत्वे एव तथा धर्मत्रयपर्याप्तं त्रित्वमपि धातुत्ववृत्तित्वपुरस्कारेण धातुत्वे एवेत्यनुभवसिद्धम् एवं च तद्वृत्तित्वविशिष्टत्वच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगिताया अनतिप्रसक्तं धातुत्वगतैकत्वमिव तद्वृत्तित्वविशिष्टत्रित्वमपीति धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्वेन तादृशावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं धातुत्ववृत्तित्वविशिष्टत्रित्वमेव नैकत्वम् विशिष्टे तत्कल्पने गौरवादिति नोक्तभेदमादाय दोषः किं च तद्वृत्तित्वविशिष्टावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तद्वृत्तित्वविशिष्टत्वे एवाभ्युपगमात् तद्वृत्तित्वविशिष्टावच्छेदकताया धर्तुमशक्यत्वमपि ।

न चैवमपि धातुत्वेन घटो नेति भेदमादाय दोषः धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपिकाया धातुत्वसमानाधिकरणायाः प्रतियोगिताया निरूपको यो भेदः इत्यस्य विवक्षणेनादोषात् ।

न च धातुत्वेन धातुघटोभयं नेति भेदमादाय दोषः धातुत्वसामानाधिकरण्यावच्छेदकैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूता धातुत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपिका च या प्रतियोगिता तन्निरूपकस्य भेदस्य ग्रहणेनादोषात् ।

न च धातुत्वेन तद्धातुतद्धातुभिन्नधातुर्नेतिभेदप्रतियोगिताया अपि तथा-

स्वाद्दोषस्तदवस्थ एवेति वाच्यम् स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व स्वनिरूपकानुयोगितानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व संबन्धाभ्यां धातुत्वगतैकत्ववृत्तिर्या प्रतियोगिता तन्निरूपकभेदस्य ग्रहणेनादोषात् स्वदेनप्रतियोगिता ग्राह्या घटत्वेन धातुर्नेति भेदमादाय दोषवारणायाद्यदलम् धातुत्वेन घटोनेति भेदमादाय दोषवारणाय द्वितीयदलम् ।

यत्तु तद्धातुर्नेति भेदमादाय दोषवारणाय प्रतियोगितायां धातुत्वव्यापकत्वं धातुघटोभयंनेतिभेदवारणाय धातुत्वव्याप्यत्वं चेति समनियतरूपं घटत्वेन धातुर्नेति भेदवारणाय धातुत्वावच्छिन्नं च प्रतियोगित्वं निवेश्य दोष परिहारइति तत्तुच्छम् ।

धातुत्वेन तद्धातुतद्धातुभिन्नधातुर्नेति भेदमादाय दोषतादवस्थ्यात् ।

यदपि धातुत्वेतरधर्मावच्छिन्नरूपकतानिरूपितानुयोगित्वानिरूपितधातुत्वावच्छिन्नप्रतियोगिताकभेदवदित्याद्यर्थकरणेन धातुत्वेन तद्धातुतद्धातुभिन्नधातुर्नेतिभेदीयप्रतियोगितायाः धातुत्वेतरोभयत्वावच्छिन्ननिरूपकताऽनिरूपितानुयोगितानिरूपितत्वेन वारणसंभवात् घटत्वेन धातुर्नेत्यस्य च धातुत्वावच्छिन्नप्रतियोगिताकत्वाभावाद्वारणसंभवेऽलमधिकनिवेशेनेति तदपि चिन्त्यम्

धातुत्वस्यापि धातुत्वेतरधर्मतया तादृशभेदस्यैवाप्रसिद्धेरिति शिवम् ।

न च अस इत्यादौ उत्तरपदार्थप्राधान्यसम्पराये आरोपितत्वं नञर्थ इति स्वीकृतमेवं च आरोपितधातुत्वविशिष्टमधातुपदार्थमङ्गीकृत्य निखिलदूषणोद्धारसम्भवे व्यर्थोयमायास इति वाच्यम् । आरोपितत्वलक्षणेऽपि अभावस्य प्रविष्टतया अभावप्रवेशजातोक्तदूषणवारणाय मदुक्तरीतेस्त्वयाप्यनुसर्तव्यत्वात्

परे तु अधातुरित्यस्य धातुप्रतियोगिकभेदविशिष्ट इत्यर्थः धातुत्वावच्छिन्नप्रतियोगिताकभेदविशिष्टो वा नाद्यः घटत्वेन धातुर्नेतिभेदमादाय धातोरपि प्रातिपदिकत्वापत्तेः नान्त्यः धातुत्वेन घटोनेति भेदमादायोक्तदोषानुषङ्गात् ।

अथोच्येत धातुत्वनिष्ठावच्छेदकताकधातुनिष्ठप्रतियोगिताकभेद इत्यर्थेन न दोष इति तदपि न तद्धातुर्नेति भेदमादाय धातोरपि तत्त्वापत्तेः ।

न च धातुत्वव्यापकप्रतियोगिताकभेद इत्यर्थेन न दोषः तद्धातुनिष्ठप्रतियोगितायां धातुत्वव्यापकत्वाभावादिति वाच्यम् धातुघटोभयं नेति भेदमादायोक्तदोषतादवस्थ्यात् ।

यदि च धातुत्वव्यापिका धातुत्वव्याप्या च या प्रतियोगितेत्याद्यर्थकरणेन न दोष इत्युच्यते तदा तद्धातुत्वेन धातुर्नेति भेदीयप्रतियोगितायां धातुत्वव्यापकत्वविशिष्टधातुत्वव्याप्यत्वस्य सत्त्वेन तादृशभेदमादायोक्तदोषापत्तिः ।

यदपि धातुत्वनिष्ठावच्छेदकताकधातुनिष्ठप्रतियोगिताकेत्यर्थः अवच्छेदकत्वं

च धातुत्वत्वव्याप्यं ग्राह्यम् उक्तोभयभेदीयप्रतियोगितावच्छेदकता च न धातुत्वत्वव्याप्या घटत्वेऽपि सत्त्वात् एवं तद्धातुत्वेन धातुर्नेति भेदीयप्रतियोगितावच्छेदकता तत्ताविशिष्टधातुत्वे, धातुत्वत्वं च धातुत्वमात्रे इति न तादृशावच्छेदकतायां धातुत्वत्वव्याप्यत्वमिति न दोष इति ।

एवं च प्रतियोगितायां धातुत्वव्यापकत्वविशिष्टधातुत्वव्याप्यत्वरूपं विशेषणं न देयम् न वा धातुनिष्ठत्वमपि धातुत्वेन घटोनेति भेदश्च नास्त्येव 'प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक' इति ग्रन्थेन चिन्तामणौ खण्डितत्वात् ।

एतेन प्रतियोगितायां व्यधिकरणधर्मानवच्छिन्नत्वनिवेशोप्यपास्त इति तदपि न—

धातुत्वेन तद्धातुर्न धातुत्वेन धातुघटोभयंनेति भेदीयप्रतियोगितावच्छेदकताया धातुत्वत्वव्याप्यत्वेनोक्तदोषतादवस्थ्यात् ।

न च प्रतियोगितापि धातुत्वव्यापकत्वविशिष्टधातुत्वव्याप्यत्वेन विशेषणीया इति न दोष इति वाच्यम् ,

धातुत्वेन तद्धातुतद्धातुभिन्नधातूभयं नेति भेदमादाय दोषसत्त्वात् ।

तथाहि निरुक्तभेदीयप्रतियोगिता तद्धातुनिष्ठा तद्धातुभिन्नधातुनिष्ठा प्रतियोगितावच्छेदकता धातुत्वे इति अवच्छेदकता धातुत्वत्वव्याप्या, प्रतियोगिता च या तद्धातुभिन्नधातुनिष्ठा सा धातुनिष्ठा विशिष्टं शुद्धान्नातिरिच्यते इति सिद्धान्तात् एवं च धातुत्वव्यापकत्वविशिष्टधातुत्वव्याप्या जाता इति निरुक्तभेदमादाय पुनरपि धातोः प्रातिपदिकसंज्ञा दुर्वारा इति चेदत्र केचित्—

प्रतियोगिनाऽभावस्य निरूपणात् अभावस्य प्रतियोगी निरूपकः निरूपकतावच्छेदकश्च प्रतियोगिविशेषणतापन्न एव धर्मः तथा च तद्धातुतद्धातुभिन्नधातूभयं नेतिभेदीयप्रतियोगिता तद्धातुनिष्ठा तद्धातुभिन्नधातुनिष्ठा तत्र विशेषणीभूतो धर्मस्तद्धातुत्वं तद्धातुभिन्नधातुत्वं चेति भेदनिरूपकतावच्छेदकत्वं तयोरेव न तु केवले धातुत्वे, एवञ्च धातुत्वत्वव्याप्या या धातुत्वनिष्ठावच्छेदकता तन्निरूपितनिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगिताकभेदग्रहणेन न प्रकृते दोषलेशः । अवच्छेदकतायां व्याप्यत्वनिवेशफलम् धातुघटोभयं नेति भेदमादाय प्रसक्तदोषोद्धारो बोध्य इति वदन्ति ।

अत्र ब्रूमः अवच्छेदकतायां धातुत्वत्वव्याप्यत्वं नाम धातुत्वत्वाभावाधिकरणनिरूपितवृत्तित्वाभावः, एवं चोभयभेदीयप्रतियोगितावच्छेदकतायां धातुत्वत्वाभाववद्घटत्वनिरूपितवृत्तित्वेऽपि निरुक्तवृत्तित्वघटोभयाभावसत्त्वेन निरुक्तदोषसत्त्वात् एवं धातुघटोभयत्वेन धातुर्नेति भेदीयप्रतियोगितावच्छेदकतायामपि बोध्यम् एवं व्यापकत्वस्याप्यभावघटितत्वेन दोष ऊहनीयः एवं च धातोः प्रातिपदिकसंज्ञा दुर्वारा इति ।

न च धातुत्वावच्छिन्नप्रतियोगिताकभेद इत्यस्य धातुत्वमात्रावच्छिन्नेत्यादिरर्थः धातुत्वमात्रावच्छिन्नत्वं च धातुत्वावच्छिन्नत्वे सति धातुत्वेतरधर्मानवच्छिन्नत्वम् एवं च धातुघटोभयं न, तद्धातुर्न, तद्धातुत्वेन धातुर्नेत्यादिभेदीयप्रतियोगितायां धातुत्वेतरघटत्वतत्त्वाद्यवच्छिन्नत्वसत्त्वेन धातुत्वमात्रावच्छिन्नत्वाभावादिति वाच्यम् ।

तादृशभेदस्यैवाप्रसिद्धेः धातुर्नेति भेदीयप्रतियोगिताया अपि धातुत्वघटोभयभेदवद्धातुत्वस्य धातुत्वेतरधर्मतया तदवच्छिन्नत्वात् ।

न च धातुत्वपर्याप्तावच्छेदकताकप्रतियोगिताकभेदविशिष्ट इत्यर्थेन उभयभेदीयप्रतियोगितावच्छेदकता न धातुत्वपर्याप्ता किन्तु धातुत्वघटत्वोभयत्वैतत्त्रितयपर्याप्ता इति न दोष इति वाच्यम् ,

प्रत्येकमपर्याप्तस्य समुदायेऽप्यपर्याप्तत्वनियमेन निरुक्तावच्छेदकता धातुत्वपर्याप्तापीति दोषतादवस्थ्यात् धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगिताकभेदस्यैव ग्रहणेनादोषात् प्रकृतावच्छेदकता च या त्रितयपर्याप्ता सैवोक्तयुक्त्या धातुत्वपर्याप्ता तस्याः पर्याप्तिरप्येकैव त्रितये विद्यमाना धातुत्वेऽपि वर्तते एकैव च सा तदवच्छेदकं च तदन्यूनानतिरिक्तवृत्ति त्रितयगतं त्रित्वमेव न धातुत्वगतमेकत्वं तस्य न्यूनवृत्तित्वादिति सावच्छेदकता न धातुत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्ति प्रतियोगिभूतेति नोभयभेदमादायदोष इति बोध्यम् ।

न च तस्या अवच्छेदकतात्वेन पर्याप्तिर्यद्यपि त्रिष्वेव वर्तते तथापि वस्तुत्वादिना तस्याः पर्याप्तिः प्रत्येकमेव धातुत्वादिषु इति तदनुयोगितावच्छेदकं धातुत्वादिगतैकत्वमेवेति तद्दोषतादवस्थ्यमिति वाच्यम् ।

धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकभेदविशिष्टेत्यर्थेनादोषात् वृत्तिता च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंसर्गेणेति उभयभेदीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं त्रित्वमिति तेन संबन्धेन वृत्तिता त्रित्वे न त्वेकत्वे वस्तुत्वावच्छिन्नप्रतियोगिताकपर्याप्तेश्च न ग्रहणम् इत्यदोषात् ।

ननु सकलब्राह्मणव्यक्तिषु वर्तमानं ब्राह्मणत्वमेतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्वत्वेनैतद्ब्राह्मणे एव यथा वर्तते तथा त्रितयपर्याप्ताप्यवच्छेदकता धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्वेन धातुत्वे एव वर्तते इत्युक्तदोषतादवस्थ्यम् ।

न च संबन्धघटकप्रतियोगिता अवच्छेदकतात्वमात्रावच्छिन्ना ग्राह्या निरुक्ता तु न तादृशीति वाच्यम् पुनरप्युभयाभावमादायदोषतादवस्थ्यात् । अवच्छेदकतात्वपर्याप्तावच्छेदकतानिरूपितावच्छेद्यतावत्प्रतियोगिताया निवेशेनापि न दोषवारणसंभवः प्रत्येकमिति न्यायेन पूर्वोक्तदिशादोषतादवस्थ्यादिति चेन्न—

स्ववृत्त्यवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतासंबन्धेन अवच्छेदकतात्वगतैकत्ववृत्तिर्यावच्छेदकता सैव स्वनिरूपितावच्छेदकतावन्निष्ठपर्याप्तिप्रतियोगिभूतावच्छेदकता विवक्षिता । तथा च स्वनिरूपितावच्छेदकतात्वगतैकत्ववृत्त्यवच्छेदकत्वनिरूपितप्रतियोगितापर्याप्त्यनुयोगितावच्छेदकत्वसंम्बन्धेन धातुत्वगतैकत्ववृत्तिप्रतियोगिताकभेदविशिष्ट इत्यर्थः तथा च विशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोगितावच्छेदकताया धातुत्वविशिष्टावच्छेदकत्वे पर्यवसानात् स्ववृत्त्यवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधातुत्ववृत्तित्वविशिष्टावच्छेदकतात्वगतं त्रित्वं नत्ववच्छेदकत्वगतैकत्वं किन्तु शुद्धावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तेः तदीयप्रतियोगितावच्छेदकतावच्छेदकतात्वमात्रे सत्वात् तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमवच्छेकतात्वगतमेकत्वं भवितुमर्हति इत्थं च शुद्धावच्छेदकतात्वगतैकत्ववृत्तिर्यावच्छेदकता तादृशावच्छेदकतानिरूपितप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधातुत्वघटत्वद्वित्वैतत्त्रितयगतं त्रित्वमितिनोक्त संसर्गेण धातुत्वगतैकत्ववृत्तिरुक्तभेदीयप्रतियोगिता इति नोक्तभेदमादाय दोषः ।

अथैवमपि धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्ववृत्तिर्यावच्छेदकताव्यक्तिः सैवावच्छेदकतात्ववृत्तित्वविशिष्टावच्छेदकतात्वेन अवच्छेदकतामात्रवृत्तिः इत्थं चावच्छेदकतात्ववृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमवच्छेदकतात्वगतैकत्वं सुलभमेवेति न धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्ववृत्त्यवच्छेदकताया निरासः तथा सति धातुत्ववृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य धातुत्वगतैकत्वे सत्त्वेनोक्तदोषतादवस्थ्यम् ।

नचावच्छेदकतात्वगतैकत्वे स्ववृत्त्यवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन वृत्तित्ववृत्तिपर्याप्तप्रतियोगितावच्छेदकता विवक्षिता तत्र चावच्छेदकतात्ववच्छिन्नेत्यस्य स्ववृत्त्यवच्छेदकतात्वविशिष्टावच्छेदकतानिरूपितप्रतियोगिताकपर्याप्तिरित्यर्थः ।

एवं च तत्राप्यवच्छेदकता स्ववृत्यवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतासम्बन्धेन स्ववृत्त्यवच्छेदकतात्वगतैकत्ववृत्तिर्विवक्षिता तथा सति अवच्छेदकतात्ववृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोगितावच्छेदकतायाः अवच्छेदकतावृतित्ववैशिष्ट्यावच्छेदकत्वस्य त्रितये सत्त्वात् नोक्ततादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं शुद्धावच्छेदकतात्वगतैकत्वमेव इति नोक्तदोष इति वाच्यम् ।

एवमपि अवच्छेदकतात्ववृत्तित्वविशिष्टवच्छेदकतात्ववृत्तिर्यावच्छेदकता

सैवावच्छेदकतात्ववृत्तित्वविशिष्टावच्छेदकतात्वेन रूपेणावच्छेदकतात्वमात्रवृत्तिरेवं च तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वमेकत्वे सुलभमिति पुनर्निवेशेऽनवस्थापत्तिरिति चेद्—

अत्रोच्यते अयं ब्राह्मणः एतद्ब्राह्मणवृत्तित्वविशिष्टब्राह्मणत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टपदार्थत्ववान् एतद्ब्राह्मणवृत्तित्वविशिष्टद्रव्यत्ववानित्याद्यनन्तप्रतीतिविषयीभूताधेयता एतद्ब्राह्मणवृत्तित्वावच्छिन्नैकैव नैतद्ब्राह्मणवृत्तित्वब्राह्मणत्वाद्युभयधर्मावच्छिन्ना प्रतिप्रतीतिभिन्नाधेयताकल्पनाप्रसङ्गात् एतद्ब्राह्मणवृत्तिमानयं ब्राह्मणः इति प्रतीतौ एतद्ब्राह्मणवृत्तित्वावच्छिन्नाधेयतायाः क्लृप्तत्वात्

न च प्रतीतिवैलक्षण्यानुपपत्तिः प्रकारतया भासमानब्राह्मणत्वादिवैलक्षण्येनैव प्रतीतिवैलक्षण्यसंभवात् एवमेतद्व्यक्तिवृत्तिब्राह्मणत्ववानयं तद्व्यक्तिवृत्तिब्राह्मणत्ववान्स इत्यादि प्रतीतावपि एतद्व्यक्तिवृत्तित्वादिधर्मावच्छिन्नैवाधेयता नोभयधर्मावच्छिन्ना धर्मद्वयस्यावच्छेदकत्वे गौरवात् फलाभावाच्च न ब्राह्मणत्वत्वावच्छिन्ना सर्वासु ब्राह्मणव्यक्तिषु एतद्व्यक्तिवृत्तिब्राह्मणत्ववानिति प्रतीत्यापत्तेः तथा प्रकृतेऽपि धातुत्ववृत्तित्वविशिष्टावच्छेदकतावद्धातुत्वमिति प्रतीतावपि धातुत्ववृत्तित्वावच्छिन्नैवाधेयता नावच्छेदकतात्वावच्छिन्ना न वा धातुत्ववृत्तित्वावच्छेदकतात्वोभयधर्मावच्छिन्नाऽतिप्रसङ्गाद्गौरवाच्च ।

तथा च प्रकृते स्वनिरूपितावच्छेदकतात्वावच्छिन्नाप्रतियोगिताकपर्याप्तिसंबन्धावच्छिन्नाधेयतानिरूपिताधारतावच्छेदकत्वसंबन्धेन धातुत्वगतैकत्ववृत्तिप्रतियोगितानिरूपकभेद इत्यर्थेन न दोष इति ध्येयम् ।

किं च यथा त्रितयपर्याप्तावच्छेदकता धातुत्ववृत्तित्वेन धातुत्वपर्याप्तैव तथैव त्रितयपर्याप्तं त्रित्वमपि धातुत्ववृत्तित्वेन धातुत्वपर्याप्तमेवेति क्लृप्तत्वात् त्रित्वमेव तथाभूतं तथाभूतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकं नत्वेकत्वम् इति पूर्वोक्तसम्बन्धेऽपि न दोषः ।

यत्तु व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदविशिष्टेत्यर्थेन नोभयभेदादिमादाय दोष इति तन्न—

तद्धातुर्न तद्धातुत्वेन तद्धातुर्नेति भेदानामनिराकरणात् पूर्वोक्तरीत्या तत्रविशिष्टधातुत्वे एव प्रतियोगितावच्छेदकत्वसत्त्वात् स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं त्रितयगतै त्रित्वमित्यदोषः किञ्च व्यासज्यवृत्तीत्यादेः व्यासज्यवृत्तिधर्मावच्छिन्नत्वाभाववती या प्रतियोगितेत्यादिरर्थः तथा सति व्यासज्यवृत्तिधर्मावच्छिन्नत्वघटोभयं नास्तीत्यभावमादाय धातुघटोभयं नेति भेदमादाय दोषतादवस्थ्यम् ।

नन्वेवमपि धातुत्वेन घटो न धातुरिति व्यधिकरणधर्मावच्छिन्नभेदमादा-

य धातोः प्रतिपदिकत्वं दुर्वारम्

न च प्रतियोगितायां धातुनिष्ठत्वेनापि विशेषणान्नायं दोषः धातुत्वेन तद्धातुर्नेति भेदमादाय दोषात्

न च धातुत्वव्यापकत्वेन प्रतियोगिताविशेषणीया धातुत्वेन धातुघटोभयं नेति भेदमादाय दोषतादवस्थ्यादिति चेन्न

प्रतियोगिनाऽभावस्य निरूपणात् अभावस्य प्रतियोगी निरूपकः निरूपकतावच्छेदकश्च प्रतियोगिविशेषणतया भासमानो धर्म इति धातुत्वगतैकत्ववृत्त्यवच्छेदकता निरूपितनिरूपकतानिरूपितनिरूप्यतावत्वसम्बन्धेनापि अभावस्य विशेषितत्वेन नोक्ताभावमादाय दोषः निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तत्तादिविशिष्टधातुत्वगतत्रित्वादौ सत्त्वादिति सर्वं समञ्जसम् ।

केचित्तु धातुत्ववृत्तिर्या प्रतियोगिता तन्निरूपको भेदो विवक्षितः वृत्तिता च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताका या स्ववृत्त्येकत्वावच्छिन्नानुयोगिताका पर्याप्तिः तादृशपर्याप्तिसंम्बन्धावच्छिन्नाधेयतानिरूपितधिकरणतावत्त्वसंसर्गेण तथा च तेन सम्बन्धेन धातुत्वाधिकरणता धातुघटोभयंनेति प्रतीतिसाक्षिकभेदत्वे न स्वीक्रियते वायौ समवायसंसर्गावच्छिन्नाधेयतानिरूपिताधिकरणतावदित्यलम् ।

अथवा धातुत्वगतैकत्ववृत्तिर्योभेद इत्यर्थः वृत्तिता च स्वीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व स्वीयनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व संबन्धाभ्याम् ।

ननु व्यधिकरणसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकं धातुत्वेन संयोगेन धातुर्न इत्याकारकं भेदं धातावादाय धातोरपि धातुभिन्नतया प्रातिपदिकत्वापत्तिरितिचेन्न अवच्छेदकतायाः स्वरूपसम्बन्धावच्छिन्नाया ग्रहणेनादोषात् ।

न च स्वरूपसंयोगोभयसम्बन्धेन धातुत्वेन धातुर्नेतिभेदमादाय दोषतादवस्थ्यमितिवाच्यम् स्वरूपपर्याप्तावच्छेदकताया निवेशेनादोषात् ।

न च प्रत्येकमपर्याप्तस्येतिन्यायेन स्वरूपसंयोगोभयपर्याप्तायां अपि स्वरूपपर्याप्तत्वादितिवाच्यम् धातुत्वप्रतियोगिकस्वरूपसम्बन्धस्य धातुत्वस्वरूपतया धातुत्वगतैकत्वनिरूपितवृत्तितावच्छेदकतया स्वनिरूपितप्रतियोगितावच्छेददकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्यायनुयोगितावच्छेदकत्वरूप स्तृतीयः सम्बन्धोऽपि निवेशनीयः निरुक्तोभयसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्यायनुयोगितावच्छेदकता च धातुत्वरूपस्वरूपसंयोगोभयगतद्वित्वे एव न तु धातुत्वरूपस्वरूपगतैकत्वे इति नोभयसम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदमादाय दोषः ।

नच धातुत्वेन घटोन, घटत्वेन धातुर्नेति भेदयोः समनियतत्वेनाभिन्नतया तयोश्च धातावपि सत्त्वेन तद्भेदस्य निरूपकतावच्छेदकताऽन्तिमप्रतीतिमादाय प्रतियोगितावच्छेदकता चाद्यप्रतीतिमादाय तामेवादाय प्रतियोगितावच्छेदकतावच्छेदकता च धातुत्वे एवास्तीति सभेद उक्तसम्बन्धत्रयेण धातुत्वगतैकत्वे वर्तते इति तामादाय धातोः प्रतिपदिकत्वापत्तिरिति वाच्यम्

धातुगत्वगतैकत्ववृत्तिप्रतियोगिता निरूपकस्य भेदस्य विवक्षणेनादोषात् वृत्तिता च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व स्वानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदककत्वैतत्रितयसम्बन्धेन ।

स्वं प्रतियोगिता यस्याः प्रतियोगितायाः धातुत्वमवच्छेदकं तन्निरूपितानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकं घटत्वं यन्निरूपितानुयोगितावच्छेदकाभावत्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकताच्छेदकं धातुत्वं तस्या अवच्छेदकं च घटत्वमितिनेयं प्रतियोगिता प्रातिपदिकसंज्ञाप्रयोजककुक्षिप्रविष्टेति न दोषः घटत्वावच्छिन्ननिरूपताकभेदत्वावच्छेदेन धातुत्वावच्छिन्नप्रतियोगितानिरूपकत्वं धातुत्वावच्छिन्ननिरूपकताकभेदत्वावच्छेन चास्य भेदस्य घटत्वावच्छिन्नप्रतियोगिताकत्वमिति यावत् ।

## इत्युभयाभावविचारः ।

एतत्संज्ञाफलभूतेत्यादि । अत्र लक्षणे विभक्तिपदं स्पष्टार्थं न तु व्यावर्तकम् प्रत्युत तन्निवेशे खट्वेत्यादावव्याप्तिवारणाय प्रत्ययोपलक्षणत्वस्वीकारे गौरवम इन्द्राणीत्यादावागमस्य प्रत्ययेतरत्वेन तदपेक्षयैवेन्द्र इत्यस्य बोधकत्वात्प्रातिपदिकत्वसिद्धये आगमेतरत्वनिवेशस्यावश्यकतयाऽत्यन्तगौरवं च एतत्संज्ञाफलभूतेतरसमभिव्याहारानपेक्षयेत्याद्युक्तौ तु टाप आनुकश्चैतत्सज्ञाफलभूतत्वेन तदितरसमभिव्याहारानापेक्षयैव खट्व इन्द्र इत्यनयोर्बोधकत्वाल्लक्षणसमन्वयान्नापत्तिशङ्कालेशोपीति बोध्यम् ।

प्रत्ययेतरसमभिव्याहारेत्याद्येव वाच्ये एतत्संज्ञाफलभूतेति निवेशोऽस्यापत्यमिस्तेषु इषु इत्यत्र सुपोऽर्थवत्त्ववारणाय, अन्यथा तत्रेकारस्य प्रत्ययत्वेन तदितरोदासीनमादाय सुपोप्यर्थवत्त्वापत्त्या प्रत्ययपर्युदासकरणापत्तिः ।

ननु भूतान्तकथनेऽपि एषा चासौ संज्ञा एतत्संज्ञेति कर्मधारयात् इञ्प्रकृतेरकारस्य या प्रातिपदिकसंज्ञा तत्फलभूतः प्रत्ययः इकारस्तदितरोदासीनमादाय सुपोऽर्थवत्त्वापत्तिर्दुर्वारैवेति चेन्न—

एतस्य संज्ञा एतत्संज्ञेति षष्ठीतत्पुरुषाश्रयणेन एतद्वृत्तित्वविशिष्टा या संज्ञेत्यर्थः यस्यार्थवत्त्वं चिकीर्षितं तद्वृत्तित्वविशिष्टेति यावत् एवं च इषु इत्यत्र

सुपोऽर्थवत्त्वस्य चिकीर्षितत्वेन तद्वृत्तित्वविशिष्टसंज्ञायाः फलभूता विभक्तिः षु इत्यस्मात्करिष्यमाणा तदितरत्वस्येकारे सत्त्वेन तदपेक्षयैव लोकेऽर्थबोधकत्वेन लक्षणागमनेनातिव्याप्त्यभावात् अत एव देवदत्तो गार्ग्य इत्यत्र देवदत्तो गार्ग्येत्यस्य राज्ञः पुरुषावित्येतद्वाक्यघटकराज्ञः पुरुषेत्यस्य च न प्रातिपदिकत्वम् ।

यदि एतत्संज्ञाफलभूतेति नोच्यते उक्तौ वा कर्मधारयः स्वीक्रियते तदा दोषःस्यादेव तथा हि सोरौविभक्तेश्च प्रत्ययत्वेन प्रातिपदिकसंज्ञाफलभूतप्रत्ययत्वेन च तदितरोदासीनसमभिव्याहारानपेक्षत्वेनार्थबोधकतयाऽर्थवत्त्वात्प्रातिपदिकत्वं स्यात् षष्ठीतत्पुरुषमाश्रित्यैतत्संज्ञाफलभूतेति निवेशे च एतस्य देवदत्तोगार्ग्येस्य राज्ञः पुरुषेत्यस्य च या प्रतिपदिकसंज्ञा तत्फलभूतप्रत्यय आगामिस्वादिप्रत्ययः तदितरः सुप्रत्ययः औप्रत्ययश्च तत्समभिव्याहारेणैवार्थबोधकत्वान्न प्रातिपदिकत्वम् ।

किं च कर्मधारयस्वीकारे भाष्यविरोधः स्यात् तथा हि अर्थवत्सूत्रेऽधातुग्रहणं व्यर्थं सुपोधातुप्रातिपदिकयोरित्यत्र धातुग्रहणसामर्थ्येन धातोर्न प्रातिपदिकसंज्ञेति कल्पनेनादोषादित्याशङ्क्यप्रतिषिद्धार्थमेतत् स्यात् अपि काकः श्येनायते इत्युक्तं भाष्यकृता तत्र कर्मधारयसमासाङ्गीकारे श्येनायेत्यस्य प्रातिपदिकसंज्ञाफलभूतविभक्तीतरतेसमभिव्याहारापेक्षयैवार्थबोधकत्वात् अर्थवत्त्वाभावेन प्रातिपादिकत्वाप्राप्त्या प्रतिषिद्धार्थमेतदिति कथनमसंगतं स्यात् एतस्य संज्ञेति समासे तु एतद्वृत्तित्वविशिष्टा या संज्ञेत्यर्थेन श्येनायेत्यस्य या संज्ञा धातुसंज्ञा प्रतिपदिकसंज्ञा च तत्फलभूतः प्रत्ययस्तेप्रत्ययः आगामिसुप्रत्ययश्च तदितरोदासीनानपेक्षयार्थबोधकत्वेनार्थवत्त्वात्प्रातिपदिकत्वप्राप्त्या प्रतिषिद्धार्थमेतदिति कथनं सङ्गतमेवेति ध्येयम् , एतस्य चिकीर्षिता या संज्ञेत्युक्तावप्यत्र प्रातिपदिकसंज्ञाया एव चिकीर्षितत्वेन भाष्यासंगतिस्तदवस्थैवेति एतद्वृत्तित्वविशिष्टेत्यर्थ आवश्यकः ।

नन्वेतत्संज्ञाफलभूतविभक्तिसमभिव्याहारापेक्षया लोकेऽर्थबोधकत्वमर्थवत्त्वमित्येवास्तु कृतं नञ्द्वयोपादानेनेति चेन्न—

दधि मधु इत्यादेः विभक्त्यपेक्षयार्थबोधकत्वस्याभावेनार्थवत्त्वानापत्तेः नञ्द्वयोपादाने तु एतत्संज्ञाफलभूतविभक्तीतरानपेक्षार्थबोधकत्वस्य सत्त्वेनार्थवत्त्वोपपत्तिः अत एव धातुप्रत्ययान्तपर्युदासः सार्थकः । अन्यथा अहन् काण्डे इत्यादेः करिष्यमाणविभक्त्यपेक्षत्वेनार्थबोधकत्वस्याभावेनार्थवत्त्वाभावादेव प्रातिपदिकत्वाप्राप्त्या धातुप्रत्ययान्तपर्युदासो व्यर्थःस्यात् समभिव्याहारपदोपानं तुराम इत्यादीनामर्थवत्त्वसिद्धये अन्यथा विभक्तीतरत् स्वघटकं रकारादिशक्तिग्रहतात्पर्यग्रहादिकं चापेक्ष्यैवार्थबोधकतयार्थवत्त्वं न स्यात् तन्निवेशे तु समभिव्याहारस्य

पूर्वापरीभावरूपतया राम इति समुदायापेक्षया रेफे शक्तिग्रहादौ वा पूर्वत्वस्य परत्वस्य वाभावान्न दोषः।

न च रेफे व्यपदेशिवद्भावेन पूर्वत्वमस्तु इति वाच्यम् व्यपदेशिवद्भावेन पूर्वत्वादेरनतिदेशस्यान्यत्रोक्तत्वात्।

न च समभिव्याहारपदोपादानेपि राम इत्यस्यास्त्यादि समभिव्याहारापेक्षयैव बोधकतया अर्थवत्त्वानापत्तिस्तदवस्थैवेति वाच्यम् समभिव्याहारपदेन नियतपूर्वापरीभावरूपस्य समभिव्याहारस्यैव प्रकृते ग्रहणेन अस्तीत्यादेः पूर्वत्र परत्र वा प्रयोगस्य कर्तुं शक्यतया राम इत्यादीनां तत्समभिव्याहारापेक्षयाऽर्थबोधकत्वाभावेनादोषात्।

न चैवं पक्त्रीमित्यत्र पक्त्र्येतद्वृत्तित्वविशिष्टप्रातिपदिकसंज्ञाफलभूतेतराम्समभिव्याहारेणैव पक्त्रीत्यस्य बोधकतयाऽर्थत्वानापत्तिरिति वाच्यम् समभिव्याहारपदेन नियतपूर्वापरीभावस्य विवक्षणेनादोषात् विभक्तीतरमप्समभिव्याहारापेक्षयैव पक्त्रीत्यस्यार्थबोधकतया पुनरप्यर्थवत्त्वं न स्यादिति तु नाशङ्कनीयम् विभक्तिपदस्य प्रत्ययोपलक्षकताया अनिवेशस्य वा पूर्वमुक्तत्वेनादोषात् एतत्संज्ञाफलभूतेत्यनुक्तौ मपोप्येतत्संज्ञाफलभूतत्वेन दोषलेशोऽपि नास्ति अमित्यस्यैतत्संज्ञाफलभूतत्वाभावेऽपि नियतपूर्वपरीभावस्यैव समभिव्याहारपदेन विवक्षितत्वेन मपो व्यवधायकतया तत्समभिव्याहारानपेक्षत्वात् ततश्च पक्त्रीत्यनेन बोधे मपः पक्त्रिमेत्यनेनार्थबोधेऽमः समभिव्याहारस्य कारणता बोध्या।

अत्रेदं बोध्यम् केवलप्रत्ययस्य केवलप्रकृतेश्च लोकेऽर्थबोधकत्वम् असति प्रतिबन्धके प्रकृत्यार्थबोधे जननीये प्रत्ययसमभिव्याहारस्य प्रत्ययेनार्थबोधे जननीये प्रकृतिसमभिव्याहारस्य कारणतेति रीत्या। असति प्रतिबन्धक इत्युक्त्या इः इयानित्यादौ केवलप्रत्ययस्य दधि मधु इत्यादौ केवलप्रकृतेश्चार्थबोधकत्वेऽपि न क्षतिरिति लोके इत्यनुक्तौ शास्त्रीयार्थबोधकत्वस्य रामेषु इत्यत्र सुपः सत्त्वेन तत्त्वापत्तिस्ततश्चप्राचीनमतवदेतन्मतेऽपि प्रत्ययपर्युदासकरणापत्तिरूपं गौरवं स्यात् एवं च एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपमर्थवत्त्वलक्षणमुपपन्नम्॥

नन्वेवमपि एधांचक्रे इत्यत्रैधामित्यस्यार्थवत्त्वं न स्यात् एतत्संज्ञाफलभूतेतरचक्रेसमभिव्याहारेणैवार्थबोधकत्वादिति चेन्न—एतत्संज्ञाफलभूतविभक्तीतरपदेतरसमभिव्याहारेत्यादिलक्षणकरणेन तादृशविभक्तीतरत्वस्य चक्रे इत्यत्र सत्त्वेऽपि पदेतरत्वस्याभावेनोदासीनमादायार्थवत्त्वोपपत्तेः॥

नचैवं सति हरिषु इत्यत्र हरीत्यस्य तादृशविभक्तीतरत्वेऽपि स्वादिष्विति पदत्वेन पदेतरत्वाभावादुदासीनमादाय सोऽर्थवत्त्वेन प्रत्ययपर्युदासकरणापत्तिरिति वाच्यम् पदेतरेत्यनेन सुप्तिङन्तमिति पदेतरस्य विवक्षणेन हरी-

त्यस्य सुप्तिङन्तमिति पदेतरत्वेन तत्समभिव्याहारेणैवार्थबोधकत्वेन सोऽर्थवत्त्वाभावात् ।

न च परमहरिषु इत्यत्र सुपः प्रातिपदिकसंज्ञायामुत्तरपदस्य कार्यित्वाभावेनोत्तरपदत्वेऽचेति निषेधाप्रवृत्या प्रत्ययलक्षणेन हरीत्यस्य सुप्तिङन्तमिति पदत्वादुदासीनमादाय सुपोऽर्थवत्त्वापत्त्या प्रत्ययपर्युदासकरणापत्तिरिति वाच्यम् परमहरीत्यस्य सुप्तिङन्तमिति पदेतरस्य समभिव्याहारेणैवार्थबोधकतयाऽदोषात् ।

न चात्रेरपत्यानि अत्रयस्तेषु अत्रिषु इत्यत्र प्रत्ययलक्षणेन सुप्तिङन्तमिति पदत्वात्तदितरमादाय सोऽस्तत्त्वं दुर्वारमिति वाच्यम् । सुप्तिङन्तमिति पदेतरेत्यस्य स्थाने स्वादिष्विति पदत्वानाश्रयीभूतपदेतरेत्यस्य निवेशेन हरि, परमहरि, अत्रीत्यादेः स्वादिष्विति पदत्वेन स्वादिष्वितिपदत्वानाश्रयीभूतोदासीनेतरतया तत्समभिव्याहारेणैवार्थबोधकतया सोऽर्थवत्त्वाभावात् ।

नचैवमपि पञ्चगवधन इत्यत्र धनेत्यस्य स्वादिष्वितिपदत्वानाश्रयीभूतत्वेन तदितरोदासीनसमभिव्याहारानपेक्षयैव पञ्चगवेत्यस्यार्थबोधकत्वेनार्थवत्त्वापत्तिरिति वाच्यम् स्वादिष्वितिपदत्वानाश्रयीभूतपदेतरेत्यत्र पदपदेन समासचरमावयवेतरस्यैव ग्रहणेनादोषात् । तथा हि स्वादिष्वितिपदत्वानाश्रयीभूतं यत्समासचरमावयवेतरत्पदं तदितरसमभिव्याहारानपेक्षयेत्यादि लक्षणकरणेन धनेत्यस्य स्वादिष्वितिपदत्वानाश्रयत्वेऽपि समासचरमावयवेतरत्वाभावेनोदासीनं यत्स्वादिष्वितिपदत्वानाश्रयीभूतं समासचरमावयवेतरत्पदं तदितरधनसमभिव्याहारेणैव पञ्चगवेत्यस्य बोधकतयाऽर्थवत्त्वाभाव इति ध्येयम् ।

स्वादिष्वितिपदत्वानाश्रयीभूतसमासचरमावयवेतरपदेतरेत्यत्र पदपदनिवेशेन राम इत्यत्र सोऽर्थवत्त्वाभावः सिध्यति अन्यथा स्वादिष्वितिपदत्वानाश्रयीभूतत्वस्य समासचरमावयवेतरत्वस्य च राम इत्यत्र सत्त्वेन तदितरोदासीनसमभिव्याहारानपेक्षयैवार्थबोधकत्वात्सोऽस्तत्त्वं दुर्वारं पदनिवेशे तु रामेत्यस्य पदत्वाभावेन तादृशपदेतरत् रामेत्येवेति न दोषः ।

नन्वेतादृगर्थवत्त्वस्वीकारेऽपि एधस्व अ इति यस्मिन् व्यापारे स एधस्वा इत्यत्र अ अस्य इति यस्मिन् व्यापारे स आस्य इत्यत्र च सोः अत्रेरपत्यानि अत्रय इत्यत्र जसश्चार्थवत्त्वापत्तिः एधस्वा, आस्य, अत्रीत्यादेः स्वादिष्वितिपदत्वानाश्रयीभूतत्वेन समासचरमावयवेतरत्वेन आद्ये पूर्वान्तवद्भावेन द्वितीये परादिवद्भावेन तृतीये प्रत्ययलक्षणेन पदत्वेन च तदितरोदासीनमादाय समन्वयात् ।

एतेन लाघवात् स्वादिष्वितिपदत्वानाश्रयीभूतसमासचरमावयवेतरपदेतरेत्यस्य स्थाने तिङन्तेतरेत्येव निवेश्य एधांचक्रे इत्यत्र चक्रे इत्यस्य तिङन्त-

त्वेन तदितरोदासीनसमभिव्याहारानपेक्षयैव एधामित्यस्यार्थबोधकत्वेन समन्वयः कार्यः पञ्चगवधनः इत्यत्र धनेत्यस्य अत्रिषु अत्रय इत्यत्रात्रीत्यस्य हरिषु परमहरिषु इत्यत्र प्रकृतेश्च तिङन्तेतरत्वेन तत्समभिव्याहारेणैव पञ्चगवेत्यस्य सुपश्चार्थबोधकत्वेनार्थवत्त्वाभावः सेत्स्यतीत्यपास्तम्

एधस्वा आस्य इत्यत्र सोरर्थवत्त्वापत्तेर्दुर्वारत्वात् एधस्वा इत्यस्य पूर्वान्तवद्भावेन आस्य इत्यस्य परादिवद्भावेन तिङन्तत्वेन तदितरसमभिव्याहारानपेक्षयैव सोरर्थबोधकत्वात् ।

न च तिङन्तेतरपदेन स्वोत्तरतिङन्तेतरेति विवक्षणान्न दोष इति वाच्यम् । एधामित्येतस्मिन्स्वोत्तरतिङन्तेतरत्वस्य सत्त्वेन तदपेक्षयैवासतुष्कल्पमित्यस्यार्थबोधकत्वात् आसतुष्कल्पेत्यस्यार्थवत्त्वानापत्तेः ।

न च स्वघटपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतरेत्यस्यापि निवेशः तथा च स्वमासतुष्कल्पेत्येतद्घटकमासतुरिति तत्पर्याप्तविधेयतानिरूपितोद्देश्यताश्रयः एधामिति तदितरोदासीनमादाय लक्षणसमन्वय इति वाच्यम् ।

एवमपि तन्निभ इत्यत्र निभादीनामुत्तरपदभूतानामेव साधुतासम्प्रतिपत्तेः तदित्यत्र स्वोत्तरतिङन्तेतरत्वस्य स्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतरत्वस्य एतत्संज्ञाफलभूतेतरत्वस्य च सत्त्वेन तदपेक्षयैवार्थबोधकत्वान्निभादेरर्थवत्त्वानापत्तेरिति चेदुच्यते तस्य मयूरव्यंसकादिगणे पाठेन तत्र च सुपेत्यस्य निवृत्त्या सुबुत्पत्त्यभावेऽपि समासस्य निर्बाधतया स्ववृत्तिसमासाद्यवयवेतरेति निवेशेन वाऽदोषः स्वं निभशब्दस्तद्वृत्तिर्यस्समासस्तदाद्यवयवत्वेन तदित्यस्य तदितरमादाय समन्वयेनादोषश्चेति ।

एवं च एतत्संज्ञाफलभूतेतरस्वोत्तरतिङन्तेतरस्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतर स्ववृत्तिसमासाद्यवयवेतरसमभिव्याहारेत्यादिलक्षणं निष्पन्नम् ।

ननु एधांचक्रे एधस्वा इत्याद्यर्थं स्वोत्तरतिङन्तेतरेति निवेशस्यावश्यकत्वेऽपि स्वघटकेत्यादि स्ववृत्तिसमासेत्यादि एतद्द्वयस्थानेपूर्वपदेतरेति निवेशः पूर्वं च तत्पदं पूर्वपदमिति समासः तथा च एधामासतुष्कल्पमित्यत्रैधामित्यस्य पूर्वपदेतरत्वाभावेनोदासीनमादाय समन्वयः तन्निभ इत्यत्र तदित्यस्य पूर्वपदेतरत्वाभावेनोदासीनमादाय न दोष इति चेन्न—

भव पचाव इति यस्मिन्व्यापारे भवपचावो व्यापारः इत्यत्र भवपचावेति समुदायस्य तिङन्ततदादित्वाभावेन पदत्वाभावात्पूर्वपदेतरत्वेन तदपेक्षयैव सोरर्थबोधकतया तत्रत्यसोरतिव्याप्त्यभावेऽपि अ एधस्व यस्मिन् व्यापारे ऐधस्वा इत्यत्रैधस्वेत्यस्य परादिवद्भावेन पदत्वात् पूर्वपदेतरमुदासीनमादाय सोरर्थवत्त्वापत्तेः

एवं हरिषु इत्यत्र हरीत्यस्य पूर्वपदत्वेन तदितरमुदासीनमादाय सोरर्थवत्त्वापत्तिश्च तदर्थं स्वादिष्वितिपदत्वानाश्रयीभूतपूर्वपदेतरेति निवेशे हरीत्यस्य

स्वादिष्वितिपदत्वानाश्रयीभूतत्वाभावेनोदासीनताद्दशपदेतरत्वस्य हरौ सत्त्वेन तत्समभिव्याहारापेक्षबोधजनकस्य सोऽर्थवत्त्वाभावेऽपि ऐधस्वा इत्यत्र परादिवद्भावेन समुदायस्य स्वोत्तरतिङन्तेतरत्वेन स्वादिष्वितिपदत्वानाश्रयीभूतपूर्वपदत्वेन तदितरोदासीनमादाय सोऽर्थवत्त्वस्य दुष्परिहरत्वात् तस्मात्तत्रविभक्तावतिव्याप्तिवारणाय समासाद्यवयवेतरेति निवेशः कार्यः ।

न च समासाद्यवयवेतरेति निवेशे ऐधस्वो व्यापार इत्यत्र ऐधस्वेतिसमुदायस्य समासाद्यवयवेतरत्वेन तदपेक्षयैव तत्रत्यविभक्तेरर्थबोधकत्वेनातिव्याप्त्यभावेऽपि अ अ इति यस्मिन्व्यापारे स आ इत्यत्र आ इत्यस्य पूर्वान्तवद्भावेन समासाद्यवयवत्वेन तदितरोदासीनमादाय तत्रत्यविभक्तावतिव्याप्तिवारणाय स्ववृत्तिसमासाद्यवयवेतरेति निवेशेनादोषात् तथा हि स्वपदेन यस्यार्थवत्त्वं चिकीर्षितं स एव ग्राह्यः ततश्च आ इत्यत्र सोऽर्थवत्त्वं विवक्षितमिति स्वं सुस्तद्वृत्तिसमासस्यैवाभावेन स्ववृत्तिसमासाद्यवयवेतरत्वस्य आकारे सत्त्वेन तदपेक्षयैव बोधकत्वात् न विभक्तावतिव्याप्तिः नापि तन्निभ इत्यत्र निभशब्देऽव्याप्तिः निभवृत्तिसमाद्यवयवेतरत्वस्य तदित्यत्राभावात् एवं च समासाद्यवयवेतरेति निवेशे एधामासतुष्कल्पमित्यत्रासतुष्कल्पेत्येतद्घटकसमासाभावेन स्ववृत्तिसमासाद्यवयवेतरत्वस्य स्वोत्तरतिङन्तेतरत्वस्य चाक्षतत्वेन तदपेक्षयैव बोधकतया अर्थवत्त्वानापत्तिः अतः स्वघटकपर्याप्तविधेयता इत्याद्यपि निवेशनीयमेव ।

तथा च एतत्संज्ञाफलभूतेतर स्ववृत्तिसमासाद्यवयवेतर स्वघटकपर्याप्तविधेयता निरूपितोद्देश्यताश्रयेतरसमभिव्याहारेत्यादिकं लक्षणमु पपन्नम् ।

अत्र पर्याप्तेत्यस्य फलं हरिषु इत्यत्र विभक्तावर्थवत्त्वाभावोऽन्यथा स्वघटकनिष्ठविधेयतेत्युक्तौ हरिषु इत्यत्र स्वं सुः तद्घटकः सकारस्तन्निष्ठा या विधेयता अपर्याप्त्या तत्रापि विधेयतायाः सत्त्वात् ताद्दशविधेयतानिरूपितोद्देश्यताश्रयत्वस्यैव हरौ सत्त्वेन तदितरोदासीनापेक्षया सोर्बोधकतया सोऽर्थवत्त्वापत्तिः ।

अत्र घटकत्वं व्यपदेशिवद्भावानतिदिष्टं ग्राह्यमन्यथा स्वं सुः तद्घटकोऽपि व्यपदेशिवद्भावेन स एव तत्पर्याप्तविधेयतानिरूपितोद्देश्यताश्रयत्वस्य हरौ निर्बाधतया पुनरपि सोऽर्थवत्त्वस्य दुर्वारत्वं स्यात् ।

नन्वेवमपि भवतीत्यत्र अतीत्यस्यार्थवत्त्वं स्यात् अतिघटकाकारपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतरोदासीनानपेक्षया तस्यार्थबोधजनकत्वादिति चेन्न । बोधजनकत्वमित्यत्र बोधजनकतापर्याप्त्यधिकरणत्वमिति निवेशेन अ इत्यत्र ति इत्यत्र च तत्त्र सत्त्वेऽपि समुदाये शक्तेरभावेन बोधजनकत्वपर्याप्त्यधिकरणत्वस्याभावेन दोषाभावात् ।

यद्वा भवतीत्यत्र दोषवारणाय प्रत्ययेतरस्वघटकपर्याप्तविधेयतेत्यादिनिवेशः प्रत्ययेतरेति निवेशे च घटकत्वं व्यपदेशिवद्भावानदिष्टमतिदिष्टं वास्तु न कोऽपि दोषः ।

न च प्रत्ययेतरेति निवेशे भवतीत्यत्र दोषवारणेऽपि रामाणामित्यत्र नाम् घटकप्रत्ययेतरनकारपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतरोदासीनानपेक्षया। नाम् इत्यस्यार्थबोधकत्वेन तस्यार्थवत्वापत्तिः तद्वारणाय प्रत्ययावयवेतरेति निवेशे च भवतीत्यत्र व्यपदेशिवद्भावेनाकारे नकारे च स्वत एव प्रत्ययावयवत्वस्य सत्त्वात्तयोर्दोषवारणेऽपि लिट्सु इत्यत्र घुटः प्रत्ययावयवत्वेन तत्रापि दोषाभावेऽपि प्राङ्क्षु इत्यत्र सु इत्यस्यार्थवत्वं स्यात् स्वघटकककारस्य प्रत्ययावयवेतरत्वेन पदस्येत्यधिकारेण ककारपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयत्वस्यैव प्राङ् इत्यत्र सत्त्वेन तदितरोदासीनानपेक्षबोधकत्वादिति वाच्यम् स्वघटकेत्यादिस्थाने स्वविशिष्टेतरेति निवेशेनादोषात् वै० स्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयत्व स्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यतानाश्रयत्वोभयसम्बन्धेन ततश्च भवतीत्यत्र तिवैशिष्टस्य पूर्वसम्बन्धेनभूशब्दे सत्त्वेऽपि अन्तिम सम्बन्धेन वैशिष्ट्याभावान्न दोषः रामाणामित्यत्रापि नाम्वैशिष्ट्यस्य पूर्वसम्बन्धेनैव सत्वान्न दोषः प्राङ्क्षु इत्यत्रापि पूर्वसम्बन्धेनैव वैशिष्ट्यसत्वात् दोषाभावो बोध्यः एधामासतुष्कल्पमित्यत्र आसतुरित्यादाय पूर्वसम्बन्धेन वैशिष्ट्यस्य कल्पशब्दमादायोत्तरसम्बन्धेन वैशिष्ट्यस्य चैधामित्यत्र सत्त्वेन तदितरोदासीनमादायार्थवत्वं सिद्धम् ।

न चैवमपि प्राङ्क्षष्ठ इत्यत्र प्रत्ययान्ततदादित्वाभावेनार्थवत्वात्प्रातिपदिकत्वापत्तिः ककारमादाय पूर्वसम्बन्धेन षष्ठशब्दमादायोत्तरसम्बन्धेन वैशिष्ट्यस्य च सत्त्वेन तदितरोदासीनानपेक्षया तस्यार्थबोधजनकत्वादिति वाच्यम् । स्वविशिष्टविशिष्टेतरेत्युक्त्या दोषाभावात् पूर्वत्र वै० स्वघटकत्व स्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयत्वोभयसंबन्धेन उत्तरत्र वै० स्वपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयत्व स्वाव्यवहितपूर्वत्वोभयसम्बन्धेन ।

नन्वेवमपि अकैदित्यत्र विशिष्टस्य प्रत्ययान्तभिन्नत्वेन धातुभिन्नत्वेन प्रत्ययभिन्नत्वेन चार्थवत्सूत्रेण प्रातिपदिकत्वस्येष्टत्वेऽपि तद्घटकाकमात्रस्यानिष्टमपि प्रातिपदिकत्वं दुर्वारम् स्वोत्तरतिङन्ततदादित्वस्यैदितिसमुदाये सत्त्वेन तस्य स्वोत्तरतिङन्तेतरत्वाभावेन स्वोत्तरतिङन्तेतरोदासीनापेक्षयैवाक् इत्यस्य लोकेऽर्थबोधजनकत्वादिति चेन्न—

स्वोत्तरतिङन्तेतरेत्यस्य स्थाने स्ववृत्तिसंज्ञानाश्रयीभूतपदेतरेति निवेशेन दोषस्यानवकाशात् तथा हि अकैदित्यत्र विशिष्टस्य प्रातिपदिकसंज्ञायाः सत्त्वेन अक् इत्येतद्वृत्तिर्या प्रातिपदिकसंज्ञा तादृशसंज्ञाश्रयीभूतत्वेन ऐदित्यस्य प्राति-

पदिकसंज्ञानाश्रयीभूतत्वाभावेनोदासीनं यत्तादृक् संज्ञानाश्रयीभूतं पदं तदितरत्वस्य ऐदित्यत्र सत्त्वेन तदपेक्षयैव अक् इत्यस्य लोकेऽर्थबोधजनकत्वेनार्थवत्त्वाभावाददोषः ।

पञ्चगवधन इत्यत्रापि पञ्चगववृत्तिसमाससंज्ञाश्रयत्वेन धन इत्यस्य तादृक्संज्ञानाश्रयीभूतत्वाभावेनोदासीनतादृक्संज्ञानाश्रयीभूतपदेतरत्वस्य धने निर्बाधत्वेन तदपेक्षयैव च पञ्चगवेत्यस्यार्थबोधकत्वेन नार्थवत्त्वम् एधांचक्रे इत्यत्र तु चक्रे इत्यस्य एधामित्येतद्वृत्तिसंज्ञानाश्रयीभूतत्वेन तदितरानपेक्षयैव लोकेऽर्थबोधकत्वेनैधामित्यस्यार्थवत्त्वं सम्पन्नम् ।

एतत्संज्ञाफलभूतविभक्तीत्यत्र च एतद्वृत्तित्वविशिष्टा संज्ञा अपर्याप्त्यापि ग्राह्या ।

अत एव सांकूटिनं पक्त्रिमम् इत्यादौ संकूटिन् इत्यस्य पक्त्रीत्यस्य चार्थवत्त्वं सिध्यति अन्यथा विभक्तिपदस्य प्रत्ययोपलक्षणत्वेऽपि तत्रत्याणमपोः संकूटिन् पक्त्रीत्येतद्वृत्तित्वविशिष्टप्रातिपदिकसंज्ञाफलभूतत्वेऽपि तदितरसुप्रत्ययापेक्षयैव बोधकत्वेन तन्न स्यात् एतद्वृत्तित्वविशिष्टसंज्ञाया अपर्याप्त्या ग्रहणे तु संकूटिन्पक्त्रीत्येतद्वृत्तित्वविशिष्टसंज्ञाया अपर्याप्त्या अणन्ते भवन्ते चाक्षतत्वेन ताभ्यां परीभूतयोः सुविभक्त्योरपि तादृक्संज्ञाफलभूतत्वेन तदितरघटपदाद्यनपेक्षया संकूटिन् पक्त्रीत्यनयोर्लोकेऽर्थबोधकतयार्थवत्त्वसंपत्तौ बाधकाभावः अत्र च संकूटिन् पक्त्रीत्याभ्यामर्थबोधे जननीये अणमपोः समभिव्याहारस्य स्वादिसमभिव्याहारस्य च कारणत्वं बोध्यम् ।

इत्थं च एतत्संज्ञाफलभूतेतर स्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतर स्ववृत्तिसमासाद्यवयवेतर स्ववृत्तिसंज्ञानाश्रयीभूतपदेतर समभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमिति निर्दुष्टं लक्षणं सम्पन्नम् ।

एतस्यैव लक्षणस्य प्रकारान्तरेण निर्वचनम् यथा स्वविशिष्टसामग्रीजन्यबोधजनकत्वम् वै० स्वघटितत्व स्वविशिष्टाघटितत्व सम्बन्धाभ्याम् ॥ अत्र वै० स्ववृत्तिसंज्ञाफलभूतविभक्तीतरत्व स्वघटकपर्याप्तविधेयतानिरूपितोद्देश्यताश्रयेतरत्व स्वोत्तरतिङन्तेतरत्व स्ववृत्तिसमासाद्यवयवेतरत्वैतच्चतुष्टयसम्बन्धेन स्वपदेन यस्यार्थवत्त्वं विवक्षितं तदेव ग्राह्यम् । तथा चैतच्चतुष्टयसम्बन्धेन रामशब्दविशिष्ट उदासीनो घटपदादिस्तदघटितत्वं रामशब्दस्येत्यर्थवत्त्वं सम्पन्नमित्यस्मद्गुरुचरणाः ॥

ननु स्वादिविधौ ङ्याप्प्रातिपदिकादित्यस्याधिकाराद् ङ्याब्विधायकसूत्रोपन्यासानन्तरमेव प्रातिपदिकसंज्ञासूत्रं वक्तुमुचितमिति चेन्न ङ्याब्विधायकसूत्रेष्वपि प्रातिपदिकादित्यस्याधिकरेणोपजीव्यत्वात्तेभ्योऽपि प्राक् प्रातिपदिकसंज्ञासूत्रोपन्यासौचित्यात् ।

अर्थोऽस्यास्तीति विग्रहे तदस्यास्त्यस्मिन्निति मतुपि वत्वे अर्थवदितिसिद्धम् ।

अर्थाचासन्निहिते इतीनिस्तु न स्वविषयकेच्छासमवायित्वरूपासन्निहितत्वस्य प्रकृतेऽभावात् अर्थीत्यदौ तु स्वविषयकेच्छासमवायित्वरूपासन्निहतत्वसत्त्वादिनिः सिद्धः ।

नचैवमर्थमाप्नवतोपि पुंसोऽर्थविषयकेच्छासत्त्वे तत्रापीनिप्रसङ्गःनिरुक्तासन्निहितत्वस्य सत्त्वादिति वाच्यम् इष्टापत्तेः तत्रेनेरनिष्टत्वे तु निरुक्तासन्निहितत्वलक्षणे स्वाभाववत्वे सतीति देयम् एवं च विद्यार्थीत्यादावपीनिः सिद्धः, न कर्मधारयान्मत्वर्थीयो वहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति लाघवमूलकवचने कर्मधारयपदस्य समासमात्रोपलक्षकत्वे तु विद्यामर्थयते याचत इत्यर्थे णिनिरेव ।

अर्थवदित्यस्य शब्दस्वरूपविशेषणतया सोर्लुकालुप्तत्वेन प्रत्ययलक्षणाप्रवृत्त्या सर्वनामस्थानपरत्वाभावेन च उगिद्चामिति न नुम् ।

अर्थवत्त्वं नाम किमिति चेदत्र प्राञ्चः वृत्तिमत्त्वमर्थवत्वं वृत्तिश्च शक्तिलक्षणान्यतररूपा ईश्वरसंकेतः शक्तिः आधुनिकसंकेतिते तु न शक्तिः तत्र शक्तेः सत्त्वे तु ईश्वरीयत्वमनुपादेयम् । राम इत्यादौ शक्तिसत्त्वेनार्थवत्त्वम् ।

शक्यसंबन्धो लक्षणा सिंहो माणवक इत्यादौ सिंहशब्दस्य स्वसादृश्यसम्बन्धने माणवके लक्षणेति तत्राप्यर्थवत्त्वमित्याहुः ।

अत्र तार्किकमीमांसकौ राजपुरुषादौ निरुक्तार्थवत्त्वाभावेन समासग्रहणं विध्यर्थमेव

न च राजपुरुषादौ विशिष्टशक्त्यनङ्गीकारे ऋद्धस्य राजपुरुष इति प्रयोगापत्तिरिति चेन्न सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनेन तथाप्रयोगाभावात् ।

नचैतन्मते एकार्थीभावानङ्गीकारेण वहुपटव इत्यादौ अर्थवत्त्वाभावेन पूर्वसूत्रस्य, तद्धितान्तत्वाभावेनोत्तरसूत्रस्य, चाप्रवृत्या प्रातिपदिकत्वाभावेन जसो लुगभावेनेष्टस्य स्वरस्याप्रवृत्तिरिति वाच्यम् उत्तरसूत्रे तद्धितपदस्य तद्धितविशिष्टपरतया प्रातिपदिकत्वेन जसो लुकि पुनर्जसीष्टसिद्धेः वै० स्वभिन्नत्व स्वनिष्ठविधेयतानिरूपितोदेश्यताश्रयभिन्नत्वोभयसम्बन्धेन प्रकृतिमात्रस्य तत्त्ववारणायाद्यः प्रत्ययमात्रस्य तत्त्ववारणाय द्वितीयः वाक्यस्य तत्त्ववारणाय तृतीयः ।

ननु पचतकीत्यत्र तत्त्वापत्तिरितिचेन्न घटितत्वज्ञानस्यानुपूर्वीविशेषणत्तया तदभावादेवापत्त्याभावात् ।

अथवा स्वविशिष्टत्वविशिष्टाघटितत्वसम्बन्धाभ्यामेव तद्धितवैशिष्ट्य विवक्षणेनादोषः प्रथमसम्बन्धघटकवैशिष्ट्यं च स्वघटितत्वं स्वशिष्टप्रकृति घटितत्व संबन्धभ्याम् अत्र वै० स्वाव्यवहितपूर्वत्व स्वाव्यवहितोत्तरत्वा-

न्यतरसंबन्धेन द्वितीयसंबन्धघटकवैशिष्ट्यं स्वभिन्नत्व स्वविशिष्टप्रकृतिभिन्नत्व सम्बन्धाभ्याम् अत्र वै० स्वाव्यवहितपूर्वत्वस्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेन पचतकीत्यत्र दोषवारणायाद्यः बहुपटवस्तिष्ठन्तीति वाक्ये दोषवारणाय द्वितीयः ।

नन्वेवमकैदित्यत्र तद्धितवैशिष्ट्यसत्त्वेन तत्त्वापत्तिरिति चेन्न–

स्वनिष्ठविधेयतानिरूपितसुप्त्वानवच्छिन्नोद्देश्यताश्रयाघटितत्वरूपसम्बन्धप्रक्षेपेणादोषात् एवं सूत्रघटकीभूतकृत्पदस्यापि कृद्विशिष्टपरत्वेन मूलकेनोपदंशमिति समुदायस्य न प्रातिपदिकत्वम् अत्र वै० स्वघटितत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व स्वविशिष्टाघटितत्व सम्बन्धैः अत्र वै० स्वभिन्नत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयभिन्नत्व सम्बन्धाभ्याम् सम्बन्धकृत्यं स्वयमूह्यमिति वदन्ति ।

वैयाकरणास्तु समासादौ विशिष्टशक्तिस्वीकारेण राजपुरुषादौ निरुक्तार्थवत्त्वसत्त्वेन पूर्वसूत्रेण प्रातिपदिकत्वसिद्धौ समासग्रहणं नियमार्थमेव उत्तरसूत्रे तु एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वरूपमर्थवत्त्वमङ्गीकर्तव्यम् कृत्तद्धितेति सूत्रेऽर्थवद्ग्रहणानुवृत्तिसामर्थ्यात्तदन्तविधिः कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वेति भाष्यात् प्राशस्त्यार्थकमतुप्प्रत्ययान्तार्थवच्छब्दबलाच्च तादृशमर्थवत्त्वं कृदन्ते तद्धितान्ते समासे च न तु प्रत्ययमात्रे समासघटकपदमात्रे वा तन्मात्रे एकार्थीभावाभावात एकार्थीभावश्च शक्तिविशिष्टसम्बन्धवत्त्वम् वै० स्वाश्रयघटकपदार्थानुयोगिकत्व स्वाश्रयघटकपदार्थप्रतियोगिकत्वसम्बन्धाभ्याम् ।

न च घट इत्यादौ घटत्वावच्छिन्ननिरूपितशक्त्याश्रयघटकघटपदार्थानुयोगिकत्वस्य स्वाश्रयघटकघटपदार्थप्रतियोगिकत्वस्य च समवायेऽपि सत्त्वेन तद्वत्त्वस्य सत्त्वात्तत्त्वापत्तिरिति वाच्यम् उक्तसम्बन्धद्वयमपहाय स्वाश्रयघटकपदपर्याप्तशक्तिप्रयोज्यपस्थितीयमुख्यविशेष्यताश्रयानुयोगिकत्व स्वाश्रयघटकपदपर्याप्तशक्तिप्रयोज्योपस्थितीयमुख्यविशेष्यताश्रयप्रतियोगिकत्वसम्बन्धाभ्यां शक्तिवैशिष्ट्यविवक्षणेनादोषात् ।

न च वाक्येप्याकांक्षारूपशक्तेस्सत्त्वेन तस्यापि तत्त्वापत्तिरिति वाच्यम् शक्तिपदेन उपस्थापकतारूपायां अभ्युपगमेन तत्र तदभावेनादोषादिति वदन्ति

वस्तुतस्तु सूत्रद्वयेऽपिवृत्तिमत्त्वरूपमेवार्थवत्त्वं ग्राह्यमर्थाधिकारानुरोधात् अर्थवद्ग्रहणानुवृत्तिसामर्थ्यात्तदन्तविधिरित्यादि भाष्यस्य त्वयमर्थः कृत्तद्धितसूत्रेऽनुवृत्तार्थवदिति विशेष्यमादाय तदन्तविधिः कर्तव्यः संज्ञाविधाविति निषेधस्तु ज्ञापकसाजात्यात्तदादिविशेष्यकतदन्तविधेरेव कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वेत्यस्य कृत्तद्धितान्तं चैवार्थवत्प्रातिपदिकं न केवलाः

कृतस्तद्धिता वा अर्थवन्तः प्रातिपदिकानि, सूत्रे तदन्तविधिसत्त्वादिति शेषः ।

अथवा वा चैव शब्दावप्यर्थे भिन्नक्रमौ कृतस्तद्धिता चैवार्थवन्तो न अपि तु कृत्तद्धितान्तमप्यर्थवदिति व्याख्यानमेवं च न भाष्यविरोधलेशोऽपि इति ।

अन्ये तु पञ्चगवधन इत्यत्र पञ्चगवेत्यस्यार्थवत्त्ववारणाय उत्तरसूत्रे एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वरूपमर्थवत्त्वमभ्युपगन्तव्यम् तथा च पञ्चगव इत्यत्रैकार्थीभावविरहेणादोष इति वदन्ति ।

परे तु स्वपर्याप्त्यधिकरणत्व स्वप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतापर्याप्त्यधिकरणत्वसम्बन्धाभ्यां वृत्तिविशिष्टत्वमेवार्थवत्त्वम् । रामघटकान्त्याकारादीनां तत्त्ववारणायाद्यः, राज्ञः पुरुषावित्येतद्घटकस्य राज्ञः पुरुषेत्यस्यार्थवत्त्ववारणायान्त्यः भाष्यविरोधस्तु पूर्वोक्तरीत्या परिहरणीयः ।

नचैवं कृतद्धितान्तमिति प्रतीकमुदाय लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयते इति कैयटग्रन्थासंगतिः निरुक्तार्थवत्त्वस्य प्रत्ययेषु सत्त्वादिति वाच्यम् भाष्यविरोधाभावेन कैयटविरोधस्याकिंचित्करत्वादिति प्राहुः ।

ननु पूर्वोत्तरसूत्रयोर्वृत्तिमत्त्वमेवार्थवत्त्वमस्तु परन्तु पूर्वसूत्रे शक्तिलक्षणान्यतररूपा सा उत्तरसूत्रे तु कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपा सा कृत्तद्धितसमासग्रहणस्य तु न वैयर्थ्यमेकशेषादेः प्रातिपदिकत्वव्यावृत्तये आवश्यकत्वात् तत्त्वं त्वेकशेषस्थले वक्तुमशक्यम् विभक्त्यन्तानामेकशेष इति पक्षस्य शिष्यमाणविभक्तिश्रवणापत्तिभियैव निराकृतत्वात् नाप्यर्थवतोऽनुवृत्तिर्व्यर्था तदन्तविधिलाभाय तदावश्यकत्वात् समासपदस्य वृत्तेरेकशेषरूपाया उपलक्षणत्वेन च विभक्त्यन्तानामेकशेष इति पक्षस्थापनं तु न युक्तम् भाष्यादौ तत्पक्षस्थापनस्यादृष्टत्वादिति चेन्न—

पञ्चनावप्रिय इत्यादौ समासत्वस्य पञ्चनावेत्यत्र सत्त्वेन प्रातिपदिकत्वापत्त्या टावापत्तेः ङीबापत्तिस्तु न शंक्या टिड्ढेति सूत्रेऽनुपसर्जनाधिकारस्य सत्त्वेन पञ्चनावेत्यस्योपसर्जनत्वात् स्त्रियाः पुंवदिति पुंवद्भावोऽपि न शंक्यः अप्रियादिष्विति निषेधात् गोस्त्रियोरिति ह्रस्वत्वमपि नाशङ्कनीयम् राजकुमारीपुत्र इत्यत्र कुमार्या ह्रस्वत्ववारणाय प्रत्यासत्त्या यत्समासीयोपसर्जनत्वं तत्समासीयप्रतिपादिकत्वस्य ग्रहणेन प्रकृतेऽदोषात् ।

नचोत्तरपदाव्यवहितपूर्वत्वमुपजीव्यजायमानस्समासस्तमुपजीव्यजायमानष्टच् उत्तरपदाव्यहितपूर्वत्वविघातकटाब्विधावनिमित्तं स्यात् सन्निपातपरिभाषयेति वाच्यम् परम्परासन्निपातविघातके तत्प्रवृत्तौ मानाभावात् कुम्भकारेभ्य इत्यादि भाष्यप्रयोगेण परम्परासन्निपातविघातके तदप्रवृत्तिकल्पनाच्च ।

नच समाससंज्ञाविधायकतद्धितार्थेति शास्त्रीयाभ्यनुज्ञावाक्ये सन्निपातप-

रिभाषाकृतसंकोचेन टापोऽप्राप्तिरिति वाच्यम् संज्ञाशास्त्रेऽभ्यनुज्ञाविधायकत्व-स्यैवाभावात् ।

न च संज्ञाशास्त्रेऽभ्यनुज्ञादानस्याभावे दाक्षिरित्यादावंगसंज्ञाऽल्लोपेऽनि-मित्तं स्यादिति भाष्यं विरुध्येतेति वाच्यम् तस्यैकदेशयुक्तित्वेनादोषात्

नचैवमप्युपसर्जनं पूर्वमित्यस्यानुपसर्जनाव्यहितपूर्णमुपसर्जनं प्रयोज्यमित्य-र्थः एतच्छास्त्रीयाभ्यनुज्ञावाक्ये संकोचेन पञ्चनावप्रिय इत्यत्र न टाबिति वाच्यम् अव्यवहितांशस्य फलाभावेनानिवेशात्

यत्तु न यासयोरिति निर्देशेनानित्यत्वात्परिभाषाया अप्रवृत्तिरिति तन्न इष्टस्थलेप्यप्रवृत्तौ परिभाषया निर्विषयत्वापत्तेः बुद्धावित्यत्र टाबापत्तेश्च ।

यदप्युक्तं पूर्वान्तवद्भावेन सन्निपातविघाताभावमादाय सन्निपातपरिभा-षाया अप्रवृत्तिरिति तदपि न आतिदेशिकसन्निपातविघाताभावमादाय परि-भाषाऽप्रवृत्तेर्भाष्यादिविरुद्धत्वात् ।

नच पञ्चनावप्रिय इत्यत्र टजपि कथम् पञ्चनौ इत्यस्य प्रातिपदिकत्वाभावा-दिति वाच्यम् समासान्तविधौ प्रातिपदिकादित्यस्यासम्बन्ध इत्यर्थस्याव्ययीभा-वशेखरे उक्तत्वादिति ।

नवीनास्तु पूर्वोत्तरसूत्रद्वये अर्थवत्त्वद्वयस्वीकरणमर्थाधिकारत्यागः प्रत्यय-पर्युदासकरणं चेति दूषणैः पूर्वोत्तरसूत्रद्वयसाधारणमेतत्संज्ञाफलभूतविभक्ती-तरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपमर्थवत्त्वं स्वीकु-र्वन्ति अत्रैतत्संज्ञाफलभूतेतिवस्तुस्थितिकथनं न तु लक्षणघटकं फलाभावात् अत एव शब्दरत्ने न दृश्यते इति ।

ओदनं पचतीत्यादौ ओदन पचेति समुदायस्य विभक्तीतरसमभिव्यहारा-नपेक्षयैवार्थबोधकत्वेन अर्थवत्त्ववारणाय तदति राघवेन्द्राचार्याः ।

देवदत्तोगार्ग्य इत्यत्र देवदत्तोगार्ग्य इति यञन्तस्य राज्ञः पुरुषावित्यत्र राज्ञः पुरुष इत्यस्य सु औ विभक्तीतरघटादिसमभिव्याहारानपेक्षया बोधकत्वस्य सत्त्वेनार्थवत्त्वे प्रातिपादिकत्ववारणाय तदिति परे

विभक्तिपदमपहाय तिङितर इत्युक्तौ पूर्वोक्तदोषवारणेऽपि ओदनं पचे-त्यत्र पूर्वोक्तदोषस्तदवस्थः राम इत्यस्यार्थवत्त्वानापत्तिश्च सुवितरेत्युक्तौ ओदनं पचेत्यत्र दोषाभावेऽपि देवदत्तोगार्ग्य इत्यत्र दोषस्तदवस्थस्तस्मात् एतत्संज्ञा-फलभूतेति विशेषणमावश्यकम् ।

एतत्संज्ञेत्यत्र एषचासौ संज्ञा एतत्संज्ञेति कर्मधारयः एतस्य संज्ञेति षष्ठीतत्पुरुषो वा नाद्यः राज्ञः पुरुषावित्यत्र राज्ञः पुरुष इत्यस्य तत्त्वापत्तेः षष्ठीतत्पुरुषाङ्गीकारे तु एतस्य राज्ञः पुरुष इति समुदायस्य या संज्ञा चिकीर्षि-तप्रातिपदिकसंज्ञा तत्फलभूतेतरा औ विभक्तिस्तत्समभिव्याहारापेक्षयैव बोध-

कत्वेन न तत्त्वम् ।

न च षष्ठीतत्पुरुषाङ्गीकारे देवदत्तो गार्ग्य इत्यत्र देवदत्तोगार्ग्येति समुदाये तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्ववारणाय प्रत्ययग्रहणपरिभाषया तदादिविधिप्रतिपादनं भाष्योक्तमसगतं स्यात् अर्थवत्त्वाभावादेव प्रातिपदिकत्त्ववारणसिद्धेरिति वाच्यम् ।

अर्थवदन्तं यत्तद्धितान्तमित्यर्थमाश्रित्य तद्भाष्यस्योल्लापनात् ।

किं च अधातुरिति किम् न च धातोस्तत्त्ववारणाय तत् सुपोधात्वित्यत्र धातुग्रहणेन धातोर्न प्रातिपदिकसंज्ञा इति चेन्न प्रतिषिद्धार्थं धातुग्रहणमपि काकः श्येनायत इत्युक्तं भाष्ये कर्मधारयाङ्गीकारे प्रातिपदिकसंज्ञाफलभूतेतरतेसभिव्याहारेणैवार्थबोधकत्वेन प्रकृतेऽर्थवत्त्वाभावादेव प्रातिपदिकत्वाभावे सिद्धे प्रतिषिद्धार्थमित्युक्तिरसंगता स्यात् मम तु एतस्य श्येनायेत्यस्य या संज्ञा धातुसंज्ञातत्फलभूतप्रत्ययस्ते इति तदितरो घटादिस्तदनपेक्षयैवार्थबोधकत्वेन अर्थवत्त्वमस्तीति प्रतिषिद्धार्थमित्युक्तिः सम्यगेव ।

ननु एतत्संज्ञाफलभूतविभक्त्यपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वमित्येवास्तु कृतं भेदद्वयप्रवेशेनेति चेन्न अहन् काण्डे इत्यत्र प्रातिपदिकसंज्ञाफलभूतविभक्त्यपेक्षया बोधकत्वस्याभावेन अधातुपर्युदासस्य अप्रत्ययपर्युदासस्य च वैयर्थ्यापत्तेः ।

नचेष्टापत्तिः दधीत्यस्य प्रातिपदिकत्वानापत्तेस्तत्रापि विभक्त्यपेक्षया बोधकत्वस्याभावात् ।

नचैवमपि एतत्संज्ञाफलभूतविभक्तीतरानपेक्षया बोधकत्वमित्येवास्तु समभिव्याहारनिवेशः किमर्थ इति वाच्यम् राम इत्यत्र विभक्तीतरशक्तिज्ञानापेक्षयैव बोधकत्वस्य सत्त्वेनार्थवत्वानापत्तेः समभिव्याहारनिवेशे तु पूर्वापरीभाव एव समभिव्याहारपदार्थ इति न दोषः ।

नचैवमपि सर्वं वाक्यं क्रियया परिसमाप्यत इति सिद्धान्तात् अस्त्यादिपदसमभिव्याहारापेक्षयैव रामशब्दस्यार्थबोधकत्वेन तत्त्वानापत्तिरिति वाच्यम् नियतपूर्वापरीभाव एव प्रकृते समभिव्याहारपदार्थ इत्यदोषात् ।

ननु लोकेऽर्थविषयकबोधजनकत्वमित्येवास्तु लक्षणमिति चेन्न पञ्चगवधन इत्यत्र पञ्चगवेत्यस्य लौकिकार्थविषयकबोधजनकत्वसत्त्वेन अर्थवत्त्वापत्तेः ।

अथ लोक इति निवेशो व्यर्थ इति चेन्न हरिषु इत्यत्र सोरर्थवत्त्वापत्या प्रत्ययपर्युदासकरणापत्तेः तस्यापि तत्तच्छास्त्रबलेन प्रकृत्यनपेक्षयैव शास्त्रीयार्थबोधकत्वादिति पदकृत्यम् ।

अत्रेदं वक्तव्यं निरुक्तार्थवत्त्वस्वीकारे रमागौरीत्यादौ प्रातिपादिकसंज्ञाफलभूतविभक्तीतरटाब्ङीप्समभिव्याहारपेक्षयैवार्थबोधकत्वेन रमेत्यादौ प्राति-

पदिकत्वानापत्तिः टाब्विधानं त्वनियतलिङ्गे चरितार्थम् विभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्वाङ्गीकारेण पूर्वोक्तदोषवारणेतु भवानीत्यादौ आनुगागमसमभिव्याहारेणैव बोधकतया दोषस्तदवस्थः एतत्संज्ञाफलभूतेतर इत्युक्तौ च एधाश्चक्रे इत्यत्र एधामित्यस्य चक्रे समभिव्याहारापेक्षयैवार्थबोधकत्वेन अर्थवत्त्वानापत्त्या प्रातिपदिकत्वाभावेन पदत्वानापत्तिस्तथाच वापदान्तस्येति परसवर्णः तिङ्ङतिङ इति निघातश्च न स्याताम् एतत्संज्ञाफलभूतेतरपदेतर इत्युक्तौ तु हरिषु इत्यत्र सोरपि तत्त्वापत्तिः एतत्संज्ञाफलभूतेतर सुप्तिङन्तमितिपदेतरेत्याद्युक्तौ दोषवारणेऽपि परमहरिषु इत्यादौ सुप्तिङन्तमिति पदत्वेन तदितरोदासीनानपेक्षयैव बोधकत्वेन सोरर्थवत्त्वापत्तिः ।

यदि च परमहरीतिसमुदायस्य सुप्तिङन्तमितिपदेतरत्वेन दोषाभाव इत्युच्यते तदा मधोरत्रेश्चापत्यानि तेषु मधुषु अत्रिषु इत्यत्र प्रत्ययलक्षणेन सुप्तिङन्तमितिपदत्वसत्त्वेन तदितरानपेक्षयैव बोधकत्वसत्त्वेन सोस्तत्त्वापत्तिः एतत्संज्ञाफलभूतेतर स्वादिष्वितिपदत्वानाश्रयीभूतपदेतरेत्युक्तौ राज्ञः पुरुषाविल्यादौ समुदायघटकपुरुषपदोत्तरजायमानविभक्तिरहितस्य राज्ञःपुरुषेत्यस्य स्वादिष्वितिपदत्वानाश्रयपदेतरद्विवचनविभक्तिसमभिव्याहारापेक्षयैवार्थबोधकत्वेनाऽर्थवत्त्वाभावेऽपि पञ्चगवधन इति समुदायघटकस्य पञ्चगवेत्यस्यार्थवत्वापत्तिः ।

यत्तु एधाञ्चक्र इत्यादौ एधामित्यस्यार्थवत्त्वसिद्धये तिङन्तेतरत्वं निवेश्यम् तेन च हरिषु मधुषु इत्यादौ न क्वापि दोष इति ।

तन्न अ अभवाव यस्मिन्व्यापारे आभवावो व्यापार इत्यत्राख्यातमाख्यातेनेति समासे परादिवद्भावेनाभवावेत्यस्य तिङन्तत्वेन तदितरोदासीनसमभिव्याहारानपेक्षयैवार्थबोधकत्वात्सोरर्थवत्त्वापत्तिः तन्निभमित्यादौ तिङन्तेतरतत्पदसमभिव्याहारापेक्षयैवार्थबोधकत्वान्निभादेरर्थवत्वानापत्तिश्च स्वादिष्वतिपदत्वानाश्रयपदेतरं विहाय स्ववृत्तिसंज्ञानाश्रयपदेतरं लक्षणे निक्षिप्य पञ्चगवेत्यस्य स्ववृत्त्यपर्याप्तसमाससंज्ञाश्रयोदासीनपदेतरधनसमभिव्याहारापेक्षयैवार्थबोधकत्वादर्थवत्त्वाभावेऽपि कौम्भकारेय इत्यत्र कारेत्यस्य स्ववृत्तिसंज्ञानाश्रयपदेतरकुम्भादिसमभिव्याहारापेक्षयैवार्थबोधकत्वादर्थवत्त्वाभावेन कुम्भकारेयोप्यापतेति शेखरासंगतिः ।

येऽपि स्ववृत्तिसंज्ञाभाववत्पदेतरं स्ववृत्तिप्रातिपदिकत्वाभावादितरं वा निवेश्य पञ्चगवस्यार्थवत्तां निराकर्तुमिच्छन्ति ते उक्तशेखरासंगत्यैव दूषिताः पूर्वपदेतरस्यापि प्रवेशे पक्त्रिममित्यत्र पक्त्रीत्यस्य स्ववृत्तिसंज्ञानाश्रयपदेतरपूर्वतरसुसमभिव्याहारापेक्षयैवबोधकत्वादर्थवत्त्वाभावेन क्त्रेर्मम्नित्यमिति मप्प्रत्ययो न स्यात् ।

यदि च सुविभक्तेरपि परम्परया पक्त्रीत्येतद्वृत्ति प्रातिपदिकसंज्ञाप्रयोज्यत्वेन तादृशसंज्ञाफलभूतेतरोदासीनसमभिव्याहारनपेक्षयैव बोधकतया पक्त्रीत्यस्या-

र्थव त्वं तदा हरिषु इत्यत्र सोस्तत्वापत्तिः

अथ पूर्वपदे स्वादिष्विति पदत्वाभाववत्त्वं निवेश्य दोषवारणं तदा एधामासतुष्कल्पम् इत्यत्र आसतुरित्येतद्वृत्यपर्याप्तपदसंज्ञानश्रयोदासीनपदेतरसमासाद्यवयवपूर्वपदेतरैधाम्समभिव्याहारापेक्षयैवार्थबोधकत्वादासतुष्कल्पेत्यस्यार्थवत्वानापत्तिः वृत्तितायाः अधिकवारकपर्याप्तिनिवेशे आसतुष्कल्पवृत्तिसंज्ञाया कस्याश्चिद्विरहेण तादृशसंज्ञानाश्रयैधांपदेतरोदासीनसमभिव्याहारानपेक्षयैव बोधकत्वादासतुष्कल्पेत्यस्यार्थवत्त्वे तु देवदत्तस्य पञ्चगवधनः इत्यादौ देवदत्तस्य पञ्चगवेति समुदायवृत्तिसंज्ञायाः कस्याश्चनाभावेन स्ववृत्तिसंज्ञानाश्रयधनपदेतरोदासीनसमभिव्याहारानपेक्षयैव बोधकत्वात् अर्थवत्त्वापत्तिः

स्ववृत्तित्वविशिष्टसंज्ञानाश्रयपदेतरं निवेश्य विशिष्टाधिकरणतायाः अन्यत्रानभ्युपगमादासतुष्कल्पवृत्तित्वविशिष्टसंज्ञाया एधामित्यत्र विरहेण तादृशसंज्ञानाश्रयैधाम्पदेतरोदासीनसमभिव्याहारानपेक्षयैवार्थबोधकत्वात् अर्थवत्त्वसत्त्वे तु पञ्चगववृत्तित्वविशिष्टसमासंज्ञानाश्रयधनपदेनरोदासीसमभिव्याहारानपेक्षयैव पञ्चगवस्यार्थबोधकत्वादर्थवत्त्वापत्तिः

पूर्वं च तत्पदं पूर्वपदमितिकर्मधारयं स्वीकृत्य एधामित्यस्य पूर्वपदत्वेन अर्थवत्त्वेऽपि राजीयतीत्यादौ क्यचः स्वादिष्वितिपदत्वाभाववत्पूर्वपदराजीतरोदासीनसमभिव्याहारानपेक्षयैवार्थबोधकत्वेनार्थवत्त्वापत्तिः तस्मात्किमर्थवत्त्वमिति चेद्

अत्र केचित् एतत्संज्ञाफलभूतेतरस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम् अत्र चोद्देश्यताश्रयपदेन स्वोत्तरपदभिन्नपदमेव गृह्यते तेन पचगवादेर्नार्थवत्त्वमिति बोध्यम् तेन सकलेष्टसिद्धिरिति वदन्ति ।

अन्ये तु यस्य प्रातिपदिकत्वं चिकीर्षितं तन्निष्ठविधेयतानिरूपितोद्देश्यतानाश्रयपदेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वं तत्त्वम् राम इत्यादौ रामनिष्ठविधेयतानिरूपितोद्देश्यतानाश्रयघटादिपदेतरानर्थकत्राक्यादिसमभिव्याहारानपेक्षयैव बोधकत्वेन तत्त्वम्

न च पञ्चगवधन इत्यत्र पञ्चगवनिष्ठविधेयतानिरूपितोद्देश्यतानाश्रयधनपदेतरोदासीनसमभिव्याहारानपेक्षयैव बोधकत्वेनार्थवत्त्वं स्यादिति वाच्यम् तादृशार्थविषयकबोधजनकतापर्याप्त्यधिकरणत्वस्यैव तत्त्वाभ्युपगमेनादोषात् ।

न च गवित्यमाहेत्यादौ गोनिष्ठविधेयतानिरूपितोद्देश्यतानाश्रयपदेत्ययमाहेतरोदासीनसमभिव्याहारानपेक्षयार्थबोधकत्वाद् गवित्यस्यार्थवत्त्वापत्तिरितिवाच्यम् तादृशार्थविषयकबोधानुकूलशक्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधतात्पर्येणोच्चरितत्वस्यैवार्थवत्त्वाभ्युपगमेनादोषात् ।

न च गामानयेति वाक्ये समुदायशक्त्यभावेन तादृशशक्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधतात्पर्येणानुच्चरितत्वादर्थवत्त्वानापत्तिरिति वाच्यम् यस्य प्रातिपदिकत्वं चिकीर्षितं तन्निष्ठविधेयतानिरूपितोद्देश्यतानाश्रयपदेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधानुकूलशक्तिविशिष्टत्वस्यैवार्थवत्त्वाभ्युपगमेनादोषात् वै० स्वाश्रयत्व स्वनिष्ठविषयतानिरूपितशब्दबोधीयविषयताप्रयोजकतापर्याप्त्यधिकरणत्वसम्बन्धाभ्यां एवं च गामानयेत्यादावर्थवत्त्वसौलभ्यमिति न कोपि दोष इत्याहुः ।

परे तु स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरसमभिव्याहारानपेक्षया लोकेर्थविषयकबोधजनकत्व स्वातादात्म्य सम्बन्धाभ्यां शब्दविशिष्टत्वमर्थवत्त्वम् हरिषु इत्यत्र सुनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरहरिसमभिव्याहारेणैव बोधकत्तया न तत्त्वम् एधाश्चक्र इत्यत्रेधाम्निष्ठोद्देश्यतानिरूपितविधेयताश्रयचक्रे पदेतरोदासीनसमभिव्याहारानपेक्षया बोधकत्वेन तत्त्वं सिध्यति परूचगवधन इत्यत्र च परूचगवादेः स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरधनसमभिव्याहारेणैव बोधकतया न तत्त्वम् ।

ननु तन्निभ इत्यादौ निभादेरर्थवत्त्वानापत्तिरिति चेन्न स्वावधिकपूर्वत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व सम्बन्धाभ्यां स्वविशिष्टेतरसमभिव्याहारानपेक्षया बोधकत्व स्वतादाम्य सम्बन्धाभ्यां शब्दविशिष्टत्वरूपार्थवत्त्वस्वीकारेणादोषात्

न च हरिष्वित्यादौ सोरर्थवत्त्वापत्तिरिति वाच्यम् पदशब्देनसुप्तिङन्तमितिपदसंज्ञकस्यैव ग्रहणात् ।

न चैवमपि अत्रेरपत्यानि अत्रयस्तेषु अत्रिषु इत्यत्र प्रत्ययलक्षणेन सुप्तिङन्तमितिपदत्वस्य सत्त्वेन सोस्तत्त्वापत्ति रिति वाच्यम् स्वावधिकपूर्वत्व स्वप्रयोज्यपदत्वाभाववत्त्वसम्बन्धाभ्यां स्वविशिष्टपदेतरत्व स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वसम्बन्धाभ्यां स्वविशिष्टसमभिव्याहारेत्यादिरूपप्रथमसम्बन्धाभ्युपगमेनादोषात् ।

नन्वेवमपि राजपुरुष इत्यत्र स्वन्तपुरुष इत्यस्यार्थवत्त्वं स्यात् स्वावधिकपूर्वत्वं विहाय स्वघटितसमासाघटकत्वनिवेशे तन्निभमित्यत्र दोष इति चेन्न स्वविशिष्टपदेतरत्वं विहाय स्वघटितपदाघटकपदेतरत्वरूपसम्बन्धनिवेशेन समासाघटकनिभादेः स्वघटितपदाघटकपदत्वेन तदितरोदासीनसमभिव्याहारानपेक्षयाऽर्थबोधकत्वेनार्थवत्त्वात् ।

न च कौम्भकारेयोऽप्यापद्येतेति नागेशग्रन्थासंगतिरिति वाच्यम् अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्चेति नागेशोक्त्या कारेत्यस्यार्थवत्त्वाभावस्यैवेष्टत्वात् टिड्ढेति सूत्रे द्वितीयतदन्तविध्यभावे कर्मण्यणित्येव

सिद्धे शीलिकामातिणविधानसामर्थ्येनाप्रातिपदिकत्वेऽपि ङीबित्याशयादितिवदन्ति

सूक्ष्मदर्शिनस्तु एतत्संज्ञाफलभूतेतरो यः सुप् तत्प्रकृत्येतदन्यतरस्तत्समभिव्याहारानपेक्षया लोकेऽर्थविषयबोधजनकत्वमेवार्थवत्त्वम् ।

न च तन्निभ इत्यादौ निभादेस्तदनापत्तिरिति वाच्यम् मयूरव्यंसकादेराकृतिगणत्वेन तत्र निभस्य पाठेनाप्रातिपदिकत्वेऽपि समासादित्याहुः ।

नव्यास्तु स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयपूर्वपदत्ववदितरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम् तन्निभमित्यत्र निभनिष्ठोद्देश्यतानिरूपितविधेयताश्रयपूर्वपदत्ववदितरोदासीनसमभिव्याहारानपेक्षया बोधकत्वेनार्थवत्त्वम् पञ्चगवधन इत्यत्र पञ्चगवेत्यस्य न तत्त्वम् धनेत्यस्य पूर्वपदत्वाभावात् ।

न च रामघटकराशब्दस्याप्यर्थवत्त्वापत्तिः दानरूपार्थबोधने मसमभिव्याहारानपेक्षणादिति वाच्यम् बोधजनकत्वमित्यस्य बोधजनकताविशिष्टत्वमित्यर्थतात्पर्यात् वै० स्वपर्याप्त्यधिकरणत्व स्वप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वोभयसम्बन्धेन बोधजनकता च शक्तिरूपैवेत्याहुः ।

अत्रास्मत्पितृचरणाः

आवर्त्तितेऽप्रत्ययपद इति आवृत्तौ प्रमाणं तु सात्पदाद्योरिति सूत्रे साद्ग्रहणम्

प्रत्यस्य यत्र संज्ञेति, संज्ञानिष्ठविधेयतानिरूपितसाक्षात्प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तदादिविशेष्यकतदन्तग्राहकं न भवतीत्यर्थः ।

न च कृदतिङित्यत्रापि तदन्तविध्यापत्तिः तदन्तस्य पर्य्युदासेपि तस्याप्रत्ययत्वेन प्राप्त्यभावेनातिङ्ग्रहणवैयर्थ्यात् यद्वा अ इति तिङिति पृथक्पदम् एवञ्च साक्षादुद्देश्यताप्रत्यये सुलभेति ।

प्रत्ययग्रहणखण्डनार्थम्प्राचीनोक्तमर्थवत्त्वमपहाय परिष्करोति, एतत्संज्ञेति । प्रातिपदिकसंज्ञायामर्थवत्त्वज्ञानं निमित्तमर्थवत्त्वपरिष्कारे प्रातिपदिकत्वज्ञानमित्यन्योन्याश्रय इति केचित् ।

तन्न यथा तार्किकाणां नदी घु इत्यदयः संज्ञाः । स्वज्ञानमन्तरापि बोधजनिकाः एवं प्रकृतेऽपि वक्तुं शक्यत्वात् रामेष्वित्यत्र सोरामपदापेक्षयैवार्थवत्त्वमिति पर्य्युदासो न कार्य्यः नञ्द्वयोपादानं दधि मधु इत्यादेः प्रातिपदिकत्वार्थम् राम इत्यादेरस्तीत्यादि क्रियापेक्षयैव बोधकत्वात्समभिहार इति देवदत्तोगार्ग्य इति वाक्यस्य प्रातिपदिकत्वाभावार्थमेतत्संज्ञेति । एतस्य संज्ञेति षष्ठीसमासात्पक्रिमम् इत्यादौवर्थवत्त्वम् कर्मधारये तु प्रातिपदिकसंज्ञाफलभूतप्रत्ययेतरधातुसंज्ञाफलभूतमप्रत्ययसमभिव्याहारापेक्षत्वात्तन्न स्यात्फलभूतप्रत्ययस्य द्वयोः सत्त्वात् खट्वा इत्याद्यर्थम्विभक्तिपदस्य प्रत्ययपरत्वात् ।

नन्वेवमेधाञ्चक्रे इत्यादावेधामित्यस्य अर्थवत्त्वानापत्तिः चक्र इत्यपेक्षया

तस्यार्थबोधजनकत्वात् ।

न च विभक्तीतरः पदेतर एव ग्रहीष्यत इति वाच्यम् एवमपि पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्य तत्त्वापत्तेः ।

न चोत्तरपदत्व इति निषेधात्प्रिय इति न पदमितिवाच्यम उत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिः ।

न च पदेतरेत्यस्य स्थाने उत्तरपदेतर इति निवेश इति वाच्यम् एवमपि हरिष्वित्यत्रापि सोस्तत्त्वापत्तिः स्वादिष्वितिपदत्वानाश्रयेति विशेषणेन तित्रादोषेपि अत्रय इत्यत्र लुप्तप्रत्यनिरूपितपदत्वेन अस इत्यस्य तत्त्वापत्तिः तदर्थम्प्रकृतीतरत्वम्विशेषणमापूरणीयम् तत्वञ्च स्वनिष्ठविधेयतानिरूपितोद्देश्याश्रयेतरत्वमितिस्वीकारेपि राजीयतीत्यादौ यतीत्यस्य तत्त्वापत्तिः यतिनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरपदमेव राजीयति तदितरघटकपदसमभिहारानपेक्षयाऽर्थविषयकबोधजनकत्वात् एतदर्थम् विधेयताया अपर्याप्ताया ग्रहणेन वारणेऽपि एधामासतुष्कल्पमित्यत्र तत्त्वानापत्तिः अपर्याप्ताया आसतुष्कल्पनिष्ठाविधेयता तन्निष्ठोद्देश्यतैव एधा मित्यत्रेति चेद्—

उच्यते विधेयतापर्य्याप्त्यैव गृह्यते तेनैधामासतुष्कल्पमित्यत्र न दोषः ।

न च राजीयतीति कथम् अर्थबोधजनकत्वे सति शक्तिपर्य्याप्त्यधिकरणत्वमिति स्वीकारेणादोषात् तत्र हि न यतीत्यत्र शक्तिः आकांक्षारूपा ईश्वरेच्छारूपा वा एवं चैतत्संज्ञेत्यपि विशेषणन्न देयम् 'देवदत्तो गार्ग्य इत्यत्रविशिष्टे शक्तेः केनाप्यबोधनात् अतएव शब्दरत्ने न दृश्यते एवञ्चोत्तरपदेत्यपि न देयम् निष्कृष्यैकार्थीभावशक्तेस्तत्राभावात्

न च भवतीत्येतद्घटकभवेत्यस्य शक्तिपर्य्याप्त्यधिकरणत्वाभावेन वारणेऽपि लोड्मध्यमपुरुषैकवचनभवेत्यस्य सत्त्वेन तत्त्वापत्तिरिति वाच्यम् प्रत्ययान्तपर्य्युदासेन सिद्धेः ।

यद्वा स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयसमभिहारानपेक्षया लोकेऽर्थविबोधजनकत्वमेवार्थवत्त्वम् राम इत्यत्र विधेयताया एवाप्रसिद्धेस्तत्त्वम् हरिष्वित्यत्र सुनिष्ठविधेयतानिरूपितोद्देश्यताश्रयसमभिहारानपेक्षयैवार्थ बोधजनकत्वमिति न प्रत्ययपर्युदासावश्यकत्वम् एधाञ्चक्रे इत्यत्र चक्रइत्यस्य विधेयत्वेन तन्निष्ठविधेयतानिरूपितोद्देश्यत्वाश्रय एधामिति समभिव्याहारापेक्षा इति न दोषः देवदत्तोगार्य इत्यस्य वारणार्थं शक्तिपर्य्याप्त्यधिकरणत्वन्देयम् एवञ्च विभक्तीत्यस्याकरणेन लाघवमिति केचित्

एतत्संज्ञेति एतस्यसंज्ञेत्यर्थः इदञ्चविशेषणन्देवदत्तोगार्ग्यैस्यार्थवत्वाभावाय । विभक्तीतरेति प्रत्ययेतरेत्यर्थः अतएव खट्वेत्यस्य तत्त्वम् रामइत्यस्यार्थवत्त्वसम्पादनाय समभिहारेति नञ् द्वयस्यफलन्तुमूले उक्तमेव ।

नचैधांचक्रे इत्यत्रैधामित्यस्यार्थवत्त्वानापत्तिः पदत्वं तु वा पदान्तस्येतिपरसवर्णार्थम्वावश्यकम्

न च पदेतरेतिविशेषणेन तद्वारयितुमशक्यम्पञ्चनावप्रिय इत्यत्र पञ्चनावेत्यस्य तत्वे ङीबापत्तेर्मूले उक्तत्वादिति वाच्यम् पदेतरत्वमेवात्र विशेषणन्देयम् पदञ्चस्ववृत्तिप्रातिपदिकत्वभाववद् गृह्यते एवञ्च पञ्चनावप्रिय इत्यत्र प्रियइत्यस्य स्ववृत्ति प्रातिपदिकत्वस्य सत्त्वान्नोत्तरपदेन तद्गृह्यते किन्त्वन्यत् तदितरत्वस्य सत्त्वान्नादोषः ॥

एधामासतुष्कल्पमित्यत्र एधामित्यस्यार्थवत्त्वसम्पादनाय स्ववृत्तित्वविशेषणम्प्रातिपदिकत्वेऽन्यथा आसतुष्कल्पमित्यस्य तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वेन प्रातिपदिकत्वाऽभाववत्पदेतरेतरत्वस्य तत्र सत्त्वेन तत्समभिहारापेक्षत्वात्तस्य तत्वानापत्तिः निभादिशब्दानामुत्तरपदभूतानामेव प्रयोगेण स्ववृत्तिप्रातिपदिकत्वाऽभाववदन्यपदमादाय तदितरत्वान्निभेत्येतद्घटकतच्छब्दसमभिव्याहारपेक्षैवेति दोषवारणाय पदेतरत्वम्विशेषणं स्वातन्त्र्येण देयम् ।

नन्वेवमपि हरिषुइत्यत्र सु इत्यस्य तत्त्वापत्तिः स्ववृत्तिप्रातिपदिकत्वाऽभाववत्पदं हरिरिति तदितरत् घटपदं तदसमभिहारानपेक्षत्वात्त्वम्प्रवर्तते इतिचेत्सत्यम् पदपदेन सुबन्ततिङन्तान्यतरेतिविशेषयितव्यम् चञ्चेव मनुष्यश्चऋचा तासु चञ्चासु इत्यत्र सोरर्थवत्त्वाऽऽपत्तिः ।

यदि चैतद्वारणाय स्वादिष्वतिपदत्वानाश्रयेति विशेष्यते तदा राजयतीत्यत्र यतीत्यस्य तत्त्वप्रवृत्तिरिति तद्वारणाय प्रत्ययनिमित्तकपदत्वानाश्रयत्वं विशेषणीयमिति नियमसूत्राणां विधिमुखेनैव प्रवृतिरिति नःक्ये इति तत्त्वमेवात्रेतिवारणम् ।

नचापि काकः श्येनायेत्यत्रस्यार्थवत्त्वेनप्रातिपदिकत्वमाशङ्क्यप्रत्ययान्तपर्युदासपर्यन्तम्भाष्यकृतोऽनुधावनं निष्फलं यत्किञ्चित्प्रत्ययनिमित्तकपदत्वानाश्रयपदेतरीभूततेशब्दमादाय तत्समभिहारापेक्षेयैवार्थबोधजनकत्वेन निरुक्तार्थवत्त्वाऽभावादिति वाच्यम् समभिव्याहारे तिङितेरतिविशेषणेनादोषात् ।

नचैवप्येधाञ्चक्रे इत्यादौ चक्रइत्यस्य स्ववृत्तिप्रातिपदिकत्वाऽभाववद्यत्किञ्चित्प्रत्ययनिरूपितपदत्वानाश्रयतितरं यत्पदन्तादितरचक्र इति पदन्तत्समभिव्याहारापेक्षा वर्त्तते इति एधामित्यस्य तत्त्वानापत्ति रिति चेत्सत्यम् ।

तिङन्तेतरेतिस्वतन्त्रंविशेषणमित्यदोषः एधामासतुष्कल्पमित्यत्रैधां समभिव्याहार इव अनुप्रयोगसामर्थ्येन भूभावाऽभाववदन्यत्र भूआदेशा एवेति एधांसमभिव्याहारः कारणमिति दोषस्तु नाशङ्क्यः स्वातन्त्र्येणप्रयोगार्हीभूतोत्तरयोर्वापदयोरुत्तरसूत्रस्थग्रहणेन समासहणनियमेन विशिष्टस्यैव प्रातिपदिकत्वमिति एवमपि कुम्भकार इत्यत्र कुम्भेत्यस्य पूर्वपदेतरत्वाभावेन तदन्यसमभि-

द्वारापेक्षा कारेत्यस्य नास्ति इति कारेत्यस्यार्थवत्त्वे मदुक्तार्थवत्त्वाभावादिति स्त्रीप्रत्ययस्थशेखरग्रन्थेन विरोधवारणाय पूर्वपदेतरत्वं पदे विशेषणं देयम् ।

यद्वैतादृशलक्षणस्य गुरुत्वेन पदेतरत्वं न देयम् तस्मिन्विशेषणञ्च नेति बोध्यम् पूर्वनावप्रिय इत्यत्र नावान्ते वाक्यशक्तेराकांक्षाशक्तेर्वोऽभावेनादोषः एवन्देवदत्तोगार्ग्य इत्यत्र प्रत्ययरहिते शक्तिर्नास्तीति न दोषः ।

यद्वा प्रत्ययभिन्नसमभिहारानपेक्षेत्यादिलक्षणं कर्तव्यम् एधाञ्चक्रे इत्येतदर्थम्पदेतरत्वं देयम् हरिषु इत्यत्र सुपस्तत्त्ववारणाय यत्किञ्चिन्निरूपितपदत्वानाश्रयत्वम्पदे विशेषणम् एधामासतुष्कल्पमित्यत्र कल्प इत्यस्य कल्पब्निरूपितपदत्वाश्रयसमभिव्याहारेणादोषात् ।

एधामित्यस्य तत्त्वार्थन्तिङन्तेतरत्वं देयम् अपि काकः श्येनायत इत्यत्र देवदत्तोगार्ग्यः कुम्भकार इत्यादौ विशिष्ट एव शक्तिरिति न दोषः ।

अर्थविषयकबोधजनकत्वमित्यत्र बोधजनकता स्वरूपयोग्यतारूपा उत फलोपधायकतारूपा नाद्यः रामघटकरा इत्यत्रापि तत्सत्त्वान्नान्त्यः यस्य पुंसो रामशब्दाद् बोधो न जातस्तत्र दोषात् उच्यते अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वमेवनिवेश्यते ।

न च रामशब्दे रा इत्यत्रातिव्याप्तिः, अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्य्याप्त्यधिकरणत्वनिवेशेनादोषात्

ननुप्रत्येकमपर्य्याप्तस्य समुदायेऽप्यपर्याप्तिः प्रत्येकात्समुदायस्याभिन्नत्वात् तथाचरामशब्दघटकरेफादावपि पर्याप्त्या अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतावत्त्वस्य सत्वेन प्रातिपदिकत्वापत्तिरिति वाच्यम् तादृशतात्पर्यीयविशेष्यतापर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वस्य विवक्षणेनादोषात् ।

न च 'रामशब्दघटकरेफोऽर्थबोधको भवतु' इति तात्पर्यीयविशेष्यतापर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वस्यापि रेफे सत्त्वेनोक्तदोषतादवस्थ्यम् अवयवतात्पर्यज्ञानाधीनबोधं प्रति समुदायतात्पर्यज्ञानस्य प्रतिबन्धकत्वेन बोधाभाव इत्यन्यदिति वाच्यम्

अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशिष्टत्वमर्थवत्त्वमिति स्वीकारेणादोषात् वैशिष्ट्यं च स्वीयविशेष्यतापर्याप्त्यनुयोगितावच्छेदकधर्मवत्व स्वज्ञानजन्यतावच्छेदकविषयतावच्छेदकधर्मावच्छिन्ननिरुपितशक्तिपर्याप्त्यनुयोगितावच्छेदकधर्मवत्वोभयसम्बन्धेन रेफे तादृशविशेष्यतापर्याप्त्यधिकरणत्वसत्वेऽपि तात्पर्यज्ञानजन्यतावच्छेदकधर्मोरामत्वादिः तदवच्छिन्ननिरुपितशक्तिपर्याप्त्यधिकरणत्वाभावादिति केचित् ।

वैयाकरणनये प्रत्येकात्समुदायस्य समुदायात्प्रत्येकस्य च भिन्नत्वात् अत एव समासग्रहणं नियमार्थम् अन्यथा प्रत्येकस्य प्रत्ययान्ततदादित्वेन समुदाये

प्रत्ययान्तपर्युदासेन विध्यर्थत्वस्यैव युक्तत्वात् अत एव समुदायस्य सखिरूपत्वाभावेनेत्यादि सङ्गच्छते इति अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमित्येतन्मात्रोक्तावपि न कश्चिद्दोष इत्यन्ये

यद्वा लोकेऽर्थविषयकबोधजनकत्वप्रकारकतात्पर्य्यविशेष्यतापर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्य्याप्तिविशिष्टाधिकरणत्वमेव तत्त्वम् भवति हि रामेत्यत्र रामशब्दो दशरथाऽपत्यम्बोधयतु इत्याकारकतात्पर्य्यविशेष्यतापर्य्याप्त्यनुयोगितावच्छेदकधर्मस्तद्व्यक्तित्वं तदवच्छिन्नाऽनुयोगिताकपर्याप्त्यधिकरणं रामेति न तु रेति मेति

वस्तुतस्तु सूत्रद्वयेऽपि वृत्तिमत्त्वमेवार्थवत्त्वमस्तु न च तथासति प्रत्ययपर्युदासकरणापत्तिः, प्रत्ययमात्रस्य प्रातिपदिकत्वेऽपि लिङ्गसंख्याद्ययोग्यत्वेन विभक्त्यापत्तेरसंभवेन क्षतिविरात् ।

न चौत्सर्गिकैकवचनापत्तिः एकवचनमिति महासंज्ञाकारणानुरोधेन सति प्रमाणे एव तदुत्पत्तेरभ्युपगमात् यथाऽव्ययेभ्यः सुबुत्पत्तौ अव्ययादाप्सुप इति प्रमाणम् न तथा प्रकृते प्रमाणमस्ति ।

न च कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वेति भाष्यविरोधः भवदुक्तार्थवत्त्वस्य केवलप्रत्ययेऽपि सत्त्वादिति वाच्यम् कृत्तद्धितान्तं चैवार्थवदित्यस्य प्रातिपदिकमिति शेषः तथा च कृत्तद्धितान्तमेवार्थवत्प्रातिपदिकम् भवति केवलाः कृतस्तद्धिता वा अर्थवन्तोऽपि न प्रातिपदिकसंज्ञका इत्यर्थात् कृत्तद्धितपदाभ्यां प्रत्ययग्रहणपरिभाषया तदादितदन्तोपस्थितौ केवले प्रातिपदिकत्वाप्रवृत्तेरिति भावः ।

न च व्यपदिशिवद्भावेन तदादितदन्तत्वं प्रत्यये स्यादिति वाच्यम् असहाय एव व्यपदेशिवद्भावप्रवृत्तेः घटकत्वघटितत्वयोरेव तेनातिदेशाच्च इयानित्यादौ यथोद्देशपक्षाश्रयणेनैव पदत्वोपपत्तिरिति वदन्ति ।

कृत्तद्धितसमासाश्च ।

ननु राजन् अस् पुरुषस् इत्यत्र समुदायस्य प्रत्ययभिन्नत्वात्प्रत्ययान्तभिन्नत्वात् अर्थवत्त्वाच्च पूर्वसूत्रेणैव प्रातिपदिकत्वसिद्धौ समासग्रहणं व्यर्थम्—

न च तादृशसमुदाये प्रत्ययनिष्ठचरमावयवतानिरूपकत्वरूपप्रत्ययान्तत्वमेवेति वाच्यम् प्रत्ययग्रहणपरिभाषया प्रत्ययविशिष्टस्वरूपस्यैव प्रत्ययान्तत्वस्य स्वीकारात् वै० स्वनिष्ठचरमावयवतानिरूपकत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठावयवतानिरूपकत्वोभयसम्बन्धेन । एवं च राजन् अस् इत्यस्य पुरुष स् इत्यस्य च सत्त्वेऽपि समुदायस्य न प्रत्ययान्तत्वादिति भावः ।

न च कपटसमुदायो न घट इति प्रतीतिवारणाय स्ववृत्तिव्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकः स्वप्रतियोगिकभेदो नाङ्गीक्रियते इति प्रत्ययान्त-

समुदायत्वावच्छिन्नानुयोगिताकः प्रत्ययान्तभेदः कथं तिष्ठेदिति न पूर्वसूत्रप्राप्तिरिति वाच्यम् प्रत्ययान्तसमुदायत्वेऽनुयोगितावच्छेदकत्वं विनापि निरवच्छिन्नानुयोगिताकस्य तादृशभेदस्य सत्त्वे बाधकाभावाद् ।

न चैवं घटपटसमुदायो न घट इत्यपि स्यादिति वाच्यम् उद्देश्यतावच्छेकावच्छेदेन विधेयान्वयस्य क्लृप्ततया प्रकृते भेदस्य विधेयतया निरवच्छिन्नानुयोगिताकस्य भानासंभवात अत्र च भेदस्य विधेयत्वाभावेनादोषात ।

अथवा तद्व्यक्तित्वावच्छिन्नानुयोगिताक एव प्रत्ययान्तभेदः प्रत्ययान्तसमुदायेऽस्तु तावतैव पूर्वसूत्रेण प्राप्तिरिति चेदत्रोच्यते—

समासग्रहणं व्यर्थं सत् यत्र संघाते पूर्वोभागः पदं तस्य चेद्भवति प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमार्थमित्यदोषः ।

ननु विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते इत्यभियुक्तोक्त्या पञ्च पञ्चनखाभक्ष्या इत्यस्येव प्रातिपदिकसंज्ञायाः समासे अन्यत्र वाक्ये च प्राप्त्या परिसंख्यार्थत्वमेव युक्तं समासग्रहणस्य नतु नियमार्थत्वं समासे प्रातिपदिकसंज्ञायाः पाक्षिकप्राप्त्यभावादिति चेन्न—

अन्यनिवृत्तिरूपनियमसाधर्म्येणात्र शास्त्रे परिसंख्यायामपि नियमशब्द प्रयोगात् । अत एव भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते इति भाष्ये उक्तम् ।

अत्र शास्त्रे नियमत्वं च यत्किञ्चिच्छास्त्रविशिष्टत्वं वै० च स्वीयविधेयतावच्छेदकधर्मावच्छिन्नविधायकत्व स्वीयोद्देश्यतावच्छेदकव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वोभयसम्बन्धेन । वृद्धिरेचीत्यस्यादेङ्गुणः इति शास्त्रवैशिष्ट्यवारणायाद्यः ओमाङोश्चेत्यस्य एङि पररूपमिति शास्त्रवैशिष्ट्यवारणाय द्वितीयः सम्बन्धः । प्रकृते चार्थवच्छास्त्रविशिष्टत्वान्नियमत्वम् ।

नियमशास्त्राणां च निषेधमुखेन विधिमुखेन च प्रवृत्तिर्भवति । स्वीयोद्देश्यतावच्छेदकव्यापको यः स्वव्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो धर्मस्तद्धर्मावच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकधर्मावच्छिन्नातिरिक्तस्य स्वविधेयाभावो निषेधमुखेन प्रवृत्तौ बोध्यते ।

यथा स्वीयोद्देश्यतावच्छेदकसमासत्वव्यापकम् अर्थवच्छास्त्रीयोद्देश्यतावच्छेदकधातुभिन्नप्रत्ययभिन्नप्रत्ययान्तभिन्नार्थवत्त्वव्याप्यं च पूर्वभागपदकसमुदायत्वं तदवच्छिन्नस्य समासातिरिक्तस्य वाक्यस्य प्रातिपदिकत्वाभावो बोध्यते तथा च समासेतरस्य पूर्वभागपदकसमुदायस्य प्रतिपदिकसंज्ञा न भवतीति सूत्रार्थः। सिद्धस्य विधाने फलाभावेन समासपदस्य समासेतरपरत्वस्य भवतीत्यस्य न भवतीत्यर्थकत्वस्य चाङ्गीकरणात् ।

परन्त्वस्मिन्पक्षे वाक्ये प्राप्तस्य प्रातिपदिकत्वस्य बाधः । समासस्य प्राति-

पदिकसंज्ञेति यः स्वार्थस्तस्य त्यागः । समासेतरस्य प्रातिपदिकसंज्ञा न भवतीति यः परार्थस्तस्य कल्पनेति दोषत्रयमतो नवीनाः सर्वत्र विधिमुखेन प्रवृत्तिं नियमशास्त्राणामभ्युपगच्छन्ति अत्र च पक्षे नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचो भवति इति धातुभिन्नं प्रत्ययभिन्नं प्रत्ययान्तभिन्नं पूर्वभागपदकसमुदायभिन्नं च यदर्थवच्छब्दस्वरूपं तत्प्रातिपदिकमित्यर्थवत्सूत्रस्यार्थः । इति वाक्ये समासे च प्रातिपदिकत्वाप्राप्त्या समासे प्रातिपदिकत्वं विधीयते इति एतदेव यत्र संघात इत्यादिना कौमुद्यामुक्तम् । अत्र पूर्वभागपदेनोत्तरभागस्याक्षेपः स च पूर्वभागप्रकृतिकप्रत्ययभिन्नो गृह्यते तेन जन्मवानित्यस्याव्यावृत्तिः राजा इयान् इत्यस्यव्यावृत्तिश्च सिद्धेति बोध्यम् ।

ननु गवित्ययमाहेत्यादौ गवित्यस्य पदत्वाभावेन समासग्रहणकृतनियमेन गोइतीत्यस्य प्रातिपदिकत्वाव्यावृत्तिः । वृषण्वसुरित्यादौ समासत्वस्य सत्त्वेन पूर्वभागपदकसमुदायत्वस्य चासत्त्वेन तस्य समासत्वव्यापकत्वाभावात्तद्धर्मावच्छिन्नातिरिक्तत्वेन पूर्वसूत्रे संकोचासंभवश्च पदशब्दस्यार्थवत्परत्वेन व्यापकत्वोपपादने च बहुपटव इत्यत्र प्रतिपदिकत्वानापत्तिरिति चेद्—

अत्र मनोरमाकृतः यद्वा प्रकृतिप्रत्ययभावानापन्नसंघातविषयको नियमोऽस्तु इति अर्थात् प्रकृतिप्रत्ययभावानापन्नसमुदायस्य चेत्प्रातिपदिकत्वं तर्हि समासस्यैवेति नियमाकार इति वदन्ति

प्रकृतिप्रत्ययभावानापन्नत्वं च प्रत्ययविशिष्टभिन्नत्वं वै०स्वनिष्ठचरमावयवतानिरूपकत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठावयवतानिरूपकत्वोभय संबन्धेन

नन्वेवं बहुपटव इत्यस्य प्रकृतिप्रत्ययभावानापन्नत्वेन तत्त्वानापत्तिरिति चेन्न—

वै० स्वघटितत्व स्वप्रकृतिघटितत्व स्वविशिष्टाघटितत्वैतत्त्रितयसंबन्धेन अत्र वै० स्वेतरत्व स्वप्रकृतीतरत्वोभयसंबन्धेन । बहुपटव इत्यादौ निरुक्तत्रितयसंबन्धेन स्ववैशिष्ट्यस्यैव सत्त्वात् न प्रकृतिप्रत्ययभावानापन्नत्वम् ।

नन्वेवं परमगार्ग्यायण इत्यस्य तत्त्वेन अर्थवत्सूत्रेण प्रतिपदिकत्वानापत्तिरिति चेद्—

अत्रोच्यते स्वघटितत्व स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकतापर्याप्त्यधिकरणघटितत्व स्वविशिष्टाघटित्वैतत्त्रितयसंबन्धेन वैशिष्ट्यस्य विवक्षणेनादोषात् अत्र वै० स्वेतरत्व स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकतापर्याप्त्यधिकरणेतरत्वोभयसंबन्धेनेतिः ।

नन्वेवं घट इत्यादेरपि तत्त्वेन पतिपदिकत्वानापत्तिरिति वाच्यम् अर्थवद्-

घटितत्वे सति प्रकृतिप्रत्ययभावानापन्नसमुदायस्य चेत्प्रातिपदिकत्वं तर्हि समासस्यैवेति नियमस्वीकारेणादोषादित्याहुः ।

केचित्तु प्रत्ययविशिष्टभिन्नत्वं प्रकृतिप्रत्ययभावानापन्नत्वम् । वै० स्वघटितत्व स्वविशिष्टवर्णाघटितत्वोभयसंबन्धेन अत्र वै० स्वानवयवत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयानवयवत्व स्वान्ततदादिपर्याप्तोद्देश्यतानिरूपितविधेयश्रयानवयवत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावाश्रयानवयवत्वैतच्चतुष्टयसंबन्धेनेति वदन्ति ।

अस्मद्गुरवस्तु प्रत्ययविशिष्टभिन्नत्वं प्रकृतिप्रत्ययभावानापन्नत्वं वै० स्वघटितत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वोभयसंबन्धेन जन्मवानित्यादौ समन्वयः स्पष्टः

न च राज्ञः पुरुष इत्यस्यापि तत्त्वापत्तिः स्वविशिष्टाघटितत्वस्यापि तृतीयस्य संबन्धस्य निवेशात् । अत्र वै० स्वेतरत्व स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वोभय संबन्धेन ।

न च लिम्पः विन्दः इत्यादौ उभयसंबन्धेन स्वविशिष्टत्वं नुमस्तद्घटितत्वेन तत्वानापत्तिरिति वाच्यम् । द्वितीयसंबन्धस्थाने स्वनिमित्तकाङ्गसंज्ञावद्घटकेतरत्वनिवेशेनादोषात्

नच परमगार्ग्यायण इत्यत्र दोषः द्वितीयसंबन्धस्थाने स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकेतरत्व निवेशेनादोषात्

नच अतिमाल इत्यत्र दोषः स्वप्रयोज्यविषयतानिरूपितशक्त्यधिकरणेतरत्वनिवेशेनादोषादित्याहुः ।

शेखरकृतस्तु स्वातन्त्र्येणप्रयोगार्हार्थवत्पूर्वभागकस्य स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरभागकस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैव नियमाकारः तेन वहुपटवः जन्मवान् पुत्रकाम्या इत्यादौ नातिव्याप्तिः नवाङ्गसंज्ञासूत्रस्थभाष्य विरोधः प्राचां तु देवदत्तो गार्ग्य इति समुदायस्य पूर्वभागपदकत्वेन नियमेन प्रातिपदिकत्ववारणात् प्रत्ययग्रहणपरिभाषया तद्वारणमसंगतं स्यात् । मम तु उत्तरभागस्य विभक्तिरहितस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावान्न नियमेन व्यावृत्तिसम्भव इति भाष्यसंगतिः ।

न च देवदत्तो गार्ग्य इति समुदाये एतत्संज्ञेति परिष्कृतार्थवत्त्वस्याभावेन प्रातिपदिकत्वाप्राप्त्या प्रत्ययग्रहणपरिभाषया तद्वारणमसंगतमेवेति वाच्यम् अर्थवदन्तं यत्तद्धितान्तं तत्प्रातिपदकमित्यर्थाभिप्रायेणास्य भाष्यस्य संगमनीयत्वात् ।

न चेदानीं प्रत्ययग्रहणपरिभाषाभावे पूर्वसूत्रे प्रत्ययान्तत्वस्यापि यथाकथचिद्ग्रहीतुं शक्यतया समासे पूर्वसूत्राप्राप्त्या समासग्रहणस्य नियमार्थत्वाभावेन नैतद्भाष्यविरोधः प्राचामिति वाच्यम् प्रत्ययग्रहणपरिभाषाभावेऽपि न विद्यते

प्रत्ययो यत्रासौ अप्रत्ययः अन्यपदार्थश्च प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाद्यवयवकप्रत्ययचरमावयवकसमुदायभिन्नः ग्रहीष्यते इति समासग्रहणस्य नियमार्थत्वसंभवेन प्राचां भाष्यविरोधस्य दुष्परिहरत्वात् इदमभिप्रेत्यैव भाष्यकृता मूलकेनोपदंशमित्यत्र कृदन्तत्वेन प्राप्तप्रातिपदिकत्ववारणं फलं प्रथमोपस्थितमप्यप्रदर्श्य तद्धितान्ते देवदत्तो गार्ग्य इत्यत्र तद्वारणं फलत्वेन प्रदर्शितम् तेन च पूर्वसूत्रे पत्ययग्रहणपरिभाषाया अन्यथासिद्धिः सूचिता ततश्च मूलकेनोपदंशमित्यत्र नियमेनैव वारणान्न फलत्वेन प्रदर्शनम् ।

नचैवमपि देवदत्तः पाचक इति समुदाये कृदन्तत्वात्प्राप्तप्रातिपदिकत्वस्याभावः फलतया किं नोक्त इति वाच्यम् तद्वारणस्याप्यन्यथासिद्धत्वमित्याशयात् अयं भावः प्रत्ययग्रहणपरिभाषाभावे कृद्ग्रहणपरिभाषाया नियमार्थत्वं स्यात् ततश्च सपूर्वकस्य चेद्गतिकारकपूर्वकस्यैवेति नियमेनैव देवदत्तः पाचक इत्यत्र न दोषः ।

वस्तुतस्तु प्रत्ययविशेषग्रहणे परिभाषाप्रयोजनप्रदर्शनाय प्रवृत्तभाष्यकर्तुः प्रत्ययसमान्यग्रहणे प्रयोजनाप्रदर्शनं न च्तिकरम् इति समासग्रहणस्य नियमार्थत्वेन प्राचां भाष्यविरोध एव ।

ननु प्राचीनमते एकार्थीभावविशिष्टत्वरूपार्थवत्वाभावादपि देवदत्तो गार्ग्य इत्यत्र प्रातिपदिकत्वाप्राप्ता भाष्यासंगतिरिति चेन्न अर्थवदन्तं यत्तद्धितान्तमित्यर्थस्वीकारेण विभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधकत्वरूपार्थवत्वस्योत्तरसूत्रेङ्गीकारेण वा दोषपरिहारात् औपगवादावर्थदन्तत्वं व्यपदेशिवद्भावेन ।

ननु स्वातन्त्र्येण प्रयोगार्हत्वं कुम्भकार इत्यत्र कार इत्यस्य नास्ति पञ्चगवधनेत्यत्र पञ्चगवेत्यस्य नास्तीति कथं समासत्वव्यापकत्वमुक्तरूपस्येति चेन्न

स्वनिष्ठप्रकृतित्वनिरूपकप्रत्ययप्रकृत्यन्यतरसमभिव्याहारानपेक्षबोधकत्वस्यैव स्वातन्त्र्येण प्रयोगार्हार्थवत्वरूपत्वात् कुम्भकार इत्यत्र कार इत्यस्य समुदायोत्तरजायमानसुसमभिव्याहारापेक्षत्वेऽपि स्वनिष्ठप्रकृतित्वनिरूपकप्रत्ययानपेक्षत्वमस्त्येव सांकूटिनमित्यत्र कूटिन् इत्यस्य च समुदायोत्तराणपेक्षत्वेऽपि स्वनिष्ठप्रकृतित्वनिरूपकपत्ययानपेक्षत्वमस्त्येव जन्मवानित्यादौ मतुपः प्रकृत्यपेक्षत्वात् देवदत्तो गार्ग्य इत्यत्र गार्ग्य इत्यत्र पुरुषस्य स्वप्रत्ययापेक्षत्वात् न स्वातन्त्र्येण प्रयोगार्हत्वमिति न नियमेन व्यावृत्तिः ।

नचैवं राज्ञः पुरुष इत्यस्यार्थवत्त्वाभावेन समासग्रहणेनवारणासम्भव इति वाच्यम् प्रकृतिसमभिव्याहारानपेक्षबोधकार्थवत्पूर्वोत्तरभागकस्य अर्थवतश्चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवेतिनियमाङ्गीकारेणादोषात् अर्थवत्ता चोपस्थापकानुभावकान्यतरशक्तिमत्त्वेन देवदत्तोगार्ग्यइत्यत्र उभयविधार्थवत्वाभावान्न दोषः राज्ञःपुरुष इत्यत्र बोधकताशक्तेः सत्वेन नियमेन वारणम्भवति नीलोघट इत्यत्र विभक्तिरहिते परिष्कृतार्थवत्वाभावात्

वस्तुतस्तु समासग्रहणस्य विध्यर्थत्वं मत्वा प्राचां भाष्यासंगतिविरहः देवदत्तोगार्ग्य इत्यस्य पूर्वभागपदकत्वेऽपि अनर्थकत्वात्समासग्रहण व्यावर्त्यत्वासम्भवाच्चेत्येत्यलम् द्विविधशक्तेरभावादर्थवत्वाभानाच्च न प्रातिपदिकसंज्ञाप्राप्तिःदेवदत्तो गार्ग्यइत्यत्र पूर्वसूत्रस्याप्राप्तावपि तद्धितान्तत्वात्प्राप्तिरिति न भाष्यविरोधः नपरमगार्ग्यण इत्यत्र गार्ग्यायण इत्यस्य प्रयोगार्हार्थवत्प्रकृतिसमभिव्याहारानपेक्षबोधकत्वेऽपि अनर्थकत्वान्न स्वातन्त्र्येणार्थवत्पूर्वभागकत्वमिति न नियमेन व्यावृत्तिरिति सुधियोविभावयन्तु

## सरूपाणामेकशेष एकविभक्तौ ।

ननु निर्धारणविभक्तिप्रकृत्यर्थस्य स्वघटकत्व स्वघटकनिर्धार्यमाणेतरावृत्ति धर्मवत्त्वसम्बन्धाभ्यामन्वयः स्वीक्रियते अन्यथा नृणां ब्राह्मणः प्राणीति प्रयोगापत्तिरेवं च प्रकृते एकत्वस्य केवलान्वयितया सर्वत्र सत्त्वात् तदितराप्रसिद्ध्याऽन्वयोऽनुपपन्न इति चेन्न ।

प्रकृते प्रथमार्थकैकशब्दस्य ग्रहणेनादोषात् ।

नन्वेकविभक्तावित्युक्त्या समुदायाद्विभक्तेरभावेन सूत्रानर्थक्यम् ।

न च समुदायस्यार्थवदिति प्रातिपदिकत्वाद्विभक्तिसम्भवः समासग्रहणकृतनियमेन वारणात् एकविभक्तावित्यस्य समानविभक्तावित्यर्थेन विभक्त्यन्तानामेकशेष इति स्वीकारेऽपि शिष्यमाणे एकवचनश्रवणप्रसङ्ग इति चेन्न

विभक्तिः सारूप्ये उपलक्षणमित्यङ्गीकृत्य प्रातिपदिकानामेकशेष इति पक्षस्यैव भाष्ये सिद्धान्तितत्वात् ।

नन्वेवं जाननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोरेकशेषापत्तिः सजातीयविभक्तौ सारूप्यं येषां तेषामेकः शिष्यते इत्यर्थादिति चेन्न—

वृद्धो यूनेति सूत्रादेवकारापकर्षणेन दोषाभावात् ।

नन्वेवशब्दार्थस्य स्वीयभेदप्रतियोगितावच्छेदकाभाववद्व्यवच्छेदकत्वेन विभक्तावन्वये विभक्त्यव्यवहितपूर्वत्वावच्छिन्नप्रतियोगिताकभेदवत्सारूप्याभाववतामेकशेष इत्यर्थे घटादिशब्दस्यापि तद्धितादौ सारूप्यसत्त्वेन एकशेषाप्राप्त्या सूत्रमेव व्यर्थं स्यात् एकशेषपदार्थेऽन्वये फलाभावः एकशेषपदेनैव तल्लाभश्च सरूपाणामित्यस्य सारूप्यवदारब्धसमुदायघटकानामित्यर्थः तत्र घटके एवार्थोन्वये यत्पदोत्तरमेवकारः प्रयुज्यते तदर्थसम्बन्धस्य तदर्थेतरसम्बन्धाभावस्य विशेषणे विशेष्ये वा प्रतीयमानतया सारूप्यवदारब्धसमुदायघटकःसारूप्यवदितरारब्धसमुदायाघटकः शिष्यमाणत्वेनेच्छाविषयैकत्ववान् इत्यर्थेन रामश्च कृष्णश्च रामश्चेति सहविवक्षायां रामकृष्णरामा इति प्रयोगापत्तिः, समुदाये तदर्थान्वये सारूप्यवदारब्धसमुदायघटकस्य सारूप्यवदारब्धसमुदायेतराघटकस्येत्यर्थे मातृमातरावित्यत्रैकशेषापत्तिः सारूप्यवति तदन्वये सारूप्यवदार-

ब्धसमुदायघटकस्य सारूप्यवदन्यारब्धसमुदायाघटकस्येत्यर्थेन रामकृष्णा इत्यत्रैकशेषानापत्तिः मातृशब्दयोरेकशेषापत्तिश्चेति चेन्न—

सारूप्ये तदन्वयेन सजातीयविभक्तौ सारूप्यमेव येषां तेषामेकः शिष्यत इत्यर्थेयन निखिलदोषपरिहारात्।

न च पदार्थैकदेशे सारूप्ये कथं तदन्वय इति वाच्यं प्रकृते सरूपपदस्यैव सारूप्ये लक्षणेत्युपगमात्।

नन्वेवमपि सर्वेषां शब्दानां स्वसारूप्यवत्तया विरूपाणामप्येकशेषापत्तिरितिचेन्न ययोरेकशेषश्चिकीर्षितस्तयोरेव परस्परं सारूप्यप्रतियोग्यनुयोगित्वेन विवक्षितत्वात्।

न चैवं यत्ताच्छब्दार्थयोरननुगतत्वेनानुगमापत्तिरिति वाच्यम्।

सारूप्यं यत्किंचित्पदविशिष्टत्वं वै स्ववृत्तिरूपवत्त्व स्वावृत्तिरूपाभाववत्त्वसम्बन्धाभ्यां मातृत्वादीनामपि मातृशब्दवृत्तित्वं वृत्तितायाः समवायस्वादेश्यत्वान्यतरसम्बधेन विवक्षणात्।

न च हरिणीशब्दे एकशेषानापत्तिः हारितं हारिणमिति तद्धिते वैरूप्यादिति वाच्यम् स्वावृत्तिविभक्त्यव्यवहितपूर्वत्वावच्छिन्नरूपाभाववत्त्वसंसर्गस्यैव द्वितीयसम्बन्धस्थाने निवेश्यत्वात्।

न च जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोरेकशेषापत्तिः, स्ववृत्तियावद्रूपवत्त्व संबन्धस्य प्रथमसंबन्धस्थाने निवेश्यत्वात्।

न च हरिणीशब्दे द्वितीयसम्बन्धसत्त्वेऽपि प्रथमसम्बन्धाभावेन दोषस्तदवस्थ एवेति वाच्यम् स्ववृत्तिविभत्यवहितपूर्वत्वावच्छिन्नयावद्रूपवत्त्वस्य विवक्षणेनादोषात्।

ननु सारूप्यं विभक्तित्वावच्छेदेन विभक्तित्वसामानाधिकरण्येन वा नाद्यः दाराश्च दारश्चेत्यत्रैकशेषापत्तेः नान्त्यः मातृशब्दे तदापत्तेरिति चेन्न—

एकविभक्तावित्यनेन सामानविभक्तित्वावच्छेदेन सारूप्यस्य ग्रहणाद् दारशब्दे जश्शसादिषु सारूप्यादेकशेषः मातृशब्दे औजसोर्वैरूप्यान्न दोषः।

नन्वेवं सर्वनामसंज्ञकसंज्ञाभूतसर्वशब्दयोरेकशेषानापत्तिः सर्वस्मै सर्वायेति दर्शनादिति चेन्न इष्टापत्तेः।

न च न क्षतमित्यर्थकसार्वविभक्तिकाक्षतशब्दस्य तण्डुलपर्यायनित्यबहुवचनान्ताक्षतशब्दस्य चैकशेषापत्तिः आद्याक्षतशब्दवृत्त्यदन्तत्वरूपस्येतरस्मिन्नवृत्तेरिति चेदत्र केचित्

यत्किंचित्पदविशिष्टत्वं सारूप्यम् वै स्ववृत्तिरूपविशिष्टरूपवद्विभक्त्यव्यवहितपूर्वत्वसम्बन्धेन रूपवै० रूपे स्वभिन्नत्व स्वाश्रयोत्तरविभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वसंबन्धाभ्यां रामवृत्तिरूपविशिष्टत्वाद्रामशब्दे

समन्वयः स्वभिन्नत्वनिवेशान्न रामशब्दे दोषः स्वाश्रयेत्यादिनिवेशात् हरिणीशब्दे न दोषः अत्ततत्ववैशिष्ट्यस्याद्यतात्वेऽभावादत्ततशब्देऽपि दोषाभावात् ।

न च स्वाश्रयोत्तरसुविभक्तिवृत्तिप्रथमात्वरूपविभक्तिविभाजकधर्मवज्जसादिप्रत्ययाव्यवहितपूर्वत्वात् स्वभिन्नत्वाच्चाद्यतात्वेऽत्ततत्वरूपवैशिष्ट्यादिति वाच्यम् विभक्तिविभाजकविभाजकधर्मवदित्यादिनिवेशेन विभक्तिविभाजकप्रथमात्वादिविभाजकैकवचनत्वादिधर्मवद्विभक्त्यव्यवहितपूर्वत्वाभावान्न दोषइत्याहुः

परे तु यत्किंचित्पदविशिष्टत्वं वै० च स्ववृत्तिरूपविविशिष्टरूपवद्भिन्नत्वसम्बन्धेन अत्र वै० स्वभिन्नत्व स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्वत्वसम्बन्धाभ्याम् एवं च नोक्तस्थलेषु दोषः ।

न च द्वित्रिशब्दयोरेकशेषापत्तिः द्विशब्दवृत्तिरूपविशिष्टं घटत्वादिकमेव न तु त्रिशब्दगतं रूपमपि तस्य स्वभिन्नत्वेऽपि द्वितीयसम्बन्धाभावादिति वाच्यम् स्वसमानानुपूर्वीकत्वस्यापि पदवैशिष्ट्यनियामकत्वेनाभ्युपेतत्वात् ।

न च जरसावित्यादौ जराशब्दगतरूपविशिंष्टजरस्त्वरूपवद्भिन्नत्वाभावादेकशेषानापत्तिरिति वाच्यम् स्वभिन्नत्वमपहाय स्वाश्रयवृत्तिभिन्नत्वस्य निवेशेनादोषात् वृत्तिता च पूर्वसंसर्गेणैव ।

न च मातृशब्दयोरेकशेषापत्तिः जननीवाचकमातृशब्दवृत्तिरूपविशिष्टघटत्वादिमद्भिन्नत्वान्न हि जननीवाचकमातृशब्दवृत्तिभेदो मातर्त्वरूपे विद्यते आचारक्विबन्तात् हेतुमण्णिचि ऋकारस्य वृद्धौ मातारयति इत्यादेर्दर्शनादितिवाच्यम् स्वाश्रयवृत्तिभिन्नत्वमपहाय स्वविशिष्टरूपवद्भिन्नत्वसम्बन्धनिवेशेनादोषात् स्वपदेनात्र रूपं गृह्यते तद्वैशिष्ट्यां रूपे स्वाश्रयवृत्तित्व स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्वत्वसम्बन्धाभ्यां मातृशब्दयोस्तु नैकशेषः मातर्त्वस्य द्वितीयसंसर्गसत्त्वेऽपि प्रथमसंसर्गाभावात् तथा हि मातरत्वरूपाश्रयः स्वोद्देश्यतासम्बन्धेन मातृशब्दस्तद्वृत्तित्वाभावात् मातारयतीतिस्थलीयमातार्त्वस्य स्वाश्रयवृत्तित्वेऽपि द्वितीयसंसर्गाभावात् ।

यद्यपि तदुत्तरत्वादेरानुपूर्व्या जातिविशेषरूपतया तस्या उभयत्रैक्यात् तथाप्यानुपूर्व्यवच्छिन्न वर्णसमुदायस्य रूपपदवाच्यतया प्रत्युच्चारणं शब्दानां भेदाद् मातारौ मातारयति इत्येतत्स्थलीयमातार्शब्दयोर्भिन्नत्वात् ।

यदि तु रूपानुपूर्व्योर्लौकिव्यवहारेण संकीर्णत्वमादाय तयोरैक्यं प्रत्यवस्थीयते तदा स्वविशिष्टरूपभिन्नत्वमपहाय स्वविशिष्टवृत्तितावद्रूपभिन्नत्वसम्बन्ध उपादेयः वृत्तितायां स्वस्य वैशिष्ट्यं च स्वाश्रयनिरुपितत्व स्वाश्रयोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्त्यव्यवहितपूर्वपरिच्छेत्तवाचकमातृशब्दवृत्तिरूपितवृत्तितास्वाश्रयनिरुपिता न भवतीति न दोष इत्याहुः ।

स्थूलदृशस्तु शब्दविशिष्टशब्दत्वं सारूप्यं वै स्वोत्तरसुविभक्तित्वावच्छेदे-

नसुप्रत्यययाव्यवहितपूर्ववृत्तित्वविशिष्टस्ववृत्तिरूपवत्वसम्बन्धेन स्वोत्तरौवि-भक्तित्वावच्छेदेनौप्रत्यययाव्यवहितपूर्ववृत्तित्वविशिष्टस्ववृत्तिरूपवत्व संबन्धेनैवं सर्वासु विभक्तिषु योजनीयः जननीपरिच्छेत्तृवाचिनोमातृशब्दयोरौविभक्तित्वाव-च्छेदेन स्ववृत्तिरूपवत्वाभावान्नैकशेष इत्याहुः ।

अन्ये तु शब्दविशिष्टशब्दत्वं तत्वं वै च विभक्तित्वावच्छेदेन स्ववृत्ति-यावद्रूपवत्त्वसम्बन्धेन जननीपरिच्छेतृशब्दयोर्न दोषः विभक्तित्वावच्छेदेन ज-ननीवाचकमातृशब्दगतयावद्रूपस्य परिच्छेतृवाचिमातृशब्देऽभावादित्याहुः ।

सूक्ष्मदृशस्तु प्रातिपदिकानामेकशेषे मातृमात्रो प्रतिषेधो वक्तव्यः माता च ज-नयित्री मातारौ धान्यस्य मातृमातार इति वैरूप्यविषयोदाहरणोपन्यासेन यस्या-पि विभक्त्यन्तानामेकशेषस्तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यस्तस्यापि क्वचित् सरूपाणि मातृभ्यां मातृभ्यांचेति अथ सतमेतद्विभक्त्यन्तानां सारूप्ये भवित-व्यमेकशेषेणेति भाष्येण भयास्येकशेषोभवत्येव अथ सतमेतदितिप्रतीकमुपादा-य अर्थविप्रतिषेधादत्रैकशेषो न भवति कृते ह्येकशेषेताभिरित्यनुप्रयोगे पुमर्थो न प्रतीयेत तैरिति चोक्तेस्त्र्यर्थानवगतिरिति कैयटोक्तं तु न युक्तम् तैरित्यनुप्र-योगे स्त्र्यर्थावगतिसम्भवात् सा च तौ च तैरित्येकशेषसम्भवात् अर्थविप्रति-षेधेनैकशेष इत्यत्र मानाभावाच्च अत एव प्रातिपदिकानामेकशेष इति पक्षे एक-विभक्तौ यानि सरूपाणि तेषामेकशेष इति एवकाराघटितो वाक्यार्थनिष्कर्षो भाष्यकृता दर्शितः अपकर्षस्य भाष्यकृता कुत्राप्यनाश्रयणाच्च अत एव प्राति-पदिकतन्त्रमाश्रित्यैकशेषप्रत्याख्याने न फलभेदः यत्र हि मातृभ्यामित्यत्र सारूप्यं तत्रैकशेषो भवति मातृमातारावित्यत्र च नेत्याहुः ।

सर्वतन्त्रस्वतन्त्रा । अस्मत्पितृचरणानां गुरुवरा नकच्छेदशमशर्ममहादयास्तु शब्देन्दुशेखरजटायां सारूप्यं न स्ववृत्तिरूपवत्वम् मातृशब्दयोरेकशेषा-पत्तेः नापि स्वावृत्तिरूपाभाववत्त्वम् अक्षतशब्दे एकशेषानापत्तेः किन्तु स्ववृ-त्तिरूपविशिष्टरूपावच्छिन्नप्रतियोगिताकभेदवत्त्वम् वै० स्वभिन्नत्व स्वाश्रयाव्य-वहितोत्तरविभक्तिवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविभक्त्यव्यव-हितपूर्ववर्तिवृत्तित्वोभयसंबन्धेन सञ्ज्ञाभूतसर्वनामसर्वशब्दे एकशेषानापत्तिरू-पदोषस्तु नात्र तत्रैकशेषाभावस्यैवेष्टत्वात् ।

न च जराशब्दे एकशेषानापत्तिः स्वभिन्नत्वमित्यस्य स्थाने स्वाश्रयाव्यव-हितोत्तरविभक्त्यव्यवहितपूर्ववृत्तिरूपत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्य निवे-शेनादोषात् ।

न च द्वित्रिशब्दयोरेकशेषापत्तिः स्वविशिष्टत्वं स्वसारूप्यम् वै० स्ववृत्ति-रूपविशिष्टरूपावच्छिन्नप्रतियोगिताकभेदवत्त्व स्वाव्यहितोत्तरविभक्तिवृत्तिश्रा-वणप्रत्यक्षविषयतावच्छेदकरूपावच्छिन्नविभक्त्यव्यवहितपूर्वत्वोभयसं अत्र वै०

पूर्वोक्तोभयसंबन्धेनेति वदन्ति।

नचैवकारापकर्षे एकविभक्ताविति व्यर्थम् यानि सरूपाण्येवेत्युक्त्यैवक्तो-दोषवारणादिति वाच्यम् हरिणस्त्रीवाचकहरिणीशब्दस्य हरितवर्णविशिष्टवाच-हरिणीशब्दस्य चैकशेषानापत्तेः तद्धिते वैरूप्यात्।

अन्ये तु एवकारो नापकृष्यते भाष्येऽदर्शनात् मातृशब्दयोस्तूक्तयोर्भ्यामेक-शेषो भवत्येव एवं क्विबन्तशुद्धङ्यन्तकुमारीशब्दयोरौजसोरेकशेषो भवत्येव न तु शसि यणपूर्वसवर्णदीर्घाभ्यां वैरूप्यात् मातृमात्रोः प्रतिषेधो वक्तव्य इति वार्तिकन्तूपलक्षणम् एकविभक्ताविति तु सहविवक्षाया उपलक्षणार्थम् सहविंव-क्षायामेकविभक्तेरेव दर्शनात् तदेतदभिप्रेत्य भाष्यकृतोक्तम् एकविभक्ताविति किमर्थम् पयः पयो जरयति वासो वासश्छादयति ब्राह्मणाभ्यां कृतं ब्राह्मणा-भ्यां देहीति, असहविंवक्षाविषयप्रत्युदाहरणदानेनैकविमक्तावित्यस्य सहविव-क्षोपलक्षणत्वं स्पष्टमेव सूचितम् विभक्तिःसारूप्येणाश्रीयत इति प्रातिपदिकै-कशेषोपपादनप्रकरणस्थं भाष्यं त्वेकदेश्युक्तिः।

नचैवं सति मातृमातरावित्यत्राप्येकशेषापत्तिः शिष्यमाणस्य कृतदी-र्घत्वे जननीबोधासम्भवेनाकृतदीर्घत्वे परिच्छेतृबोधासम्भवेनैकशेषाप्रवृत्तेः एकशेषशास्त्रं हि एकस्य नानेकार्थतोत्पादकं किन्तु लोकसिद्धानुवादकं न हि लोके दीर्घोपधात् मातृशब्दाज्जननीबोधो ह्रस्वोपधाच्च परिच्छेतृबोधोदयः तदेतदभि-प्रेत्योक्तम्भाष्ये शब्दस्य स्वभाविकी वानेकार्थता स्याद्वाचनिकी वा स्यात् तद्यदि तावत्स्वाभाविकी अशिष्य एकशेषः किं कारणमेकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् यदि तर्हि एकेनानेकस्याभिधानं भवति प्लक्षन्यग्रोधावे-केनोक्तत्वादपरस्य प्रयोगोनुपपन्नः इदानीमेवोक्तमेकेनानेकस्याभिधानं भवतीति सरूपाणामेकेनानेकस्याभिधानं भवति न विरूपाणां किं कारणं सरूपाणामेके-नानेकस्यभिधानं भवति न विरूपाणामभिधानं पुनः स्वाभाविकमिति।

एतेन शिष्यमाणस्य स्वस्वरूपार्थबोधकत्वं स्फुटं प्रतिपादितम् अत एव हरि-णीशब्दयोस्तद्धितविवक्षानिमित्तकपुंवद्भावापेक्षयाऽनैमिकत्वेनान्तरङ्गत्वादेकशेषे कृते स्वरभिन्नानामिति ङीबन्तस्य शेषे तस्मात्तस्य समूह इत्यणि हारितम् रूपं न भवति तशब्दघटितस्य विरूपत्वेन हरिणीशब्दार्थाप्रतिपादकत्वात् यत्र तु तद्धिते द्वयोरूपं समानं तत्र भवत्येवैकशेषः यथा हरिण्योरपत्ये हारिणेयावत्रे भस्याढे इनि न पुंवत्त्वमढे इति पर्युदासादित्याहुः

ननु समानानामेकशेष एकविभक्तावित्येव सिद्धेरूपग्रहणं किमर्थमिति चेन्न शब्देनार्थेन च समानेषु प्लक्षा वृक्षाइत्यादिष्वेवैकशेषः स्यात् पदा माषा इत्यादौ च न स्यात् कृते तु रूपग्रहणे नैषदोष इत्यलम्

ननु शेषग्रहणं किमर्थमितिचेन्न सरूपाणामेकादेशापत्तेरश्वाश्वाश्वाश्वाश्वा-

वित्यादावान्तर्यवतो द्व्युदात्तवतः स्थानिनोद्व्युदात्तवानादेश, स्यादिति शेषग्रहणम् इति शिवम्

## रषाभ्यांनोणः समानपदे ।

नन्वत्र सूत्रे पदग्रहणसामर्थ्येनैकत्वसंख्याया विवक्षणात् निमित्तनिमित्तनोरेकपदस्थत्वे एव नस्य णत्वमित्यर्थेन प्रातर्नमनमित्यादिव्यासे णत्ववारणसम्भवे समानग्रहणं व्यर्थम् ।

नचापदे कुर्वन्नित्याद्यनुकरणे णत्ववारणाय पदग्रहणमिति तत्सामर्थ्येनैकत्वविवक्षणं कर्तुमशक्यमितिवाच्यम् अपदं न प्रयुञ्जीतेतिभाष्येणापदस्य प्रयोक्तुमशक्यत्वात् ।

नच भूसत्तायामित्यादिनिर्देशोपपत्तये अपरिनिष्ठितस्येत्यर्थकरणस्यावश्यकत्वेन कुर्वन्नित्यस्य परिनिष्ठितत्वेन प्रयोक्तुं शक्यत्वमिति वाच्यम् परिनिष्ठितान्तस्य नस्य णत्वं नेत्यर्थकेन पदान्तस्येत्यनेनैव णत्वनिषेधसम्भवादिति चेन्न समानमेव अखण्डमेव यत्पदं तत्रैव णत्वं यथा स्यादित्यर्थे समानग्रहणस्यावश्यकत्वात् ।

ननु किन्नाम समानपदत्वम् इति चेत् निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वं समानपदत्वम् पदे निमित्तानधिकरणेति विशेषणानुपादाने सुवपर्णेत्यत्र । णत्वानापत्तिः पदे निमित्तमदितिविशेषणाभावे रामेणत्यादावुदासीनतादृशपदाघटितत्वेन तत्वसिद्धावपि सुपर्वणेत्यत्र तादृशसुपदघटितत्वेन तत्त्वानापत्तिः मातृभोगीण इत्यत्र तादृशभोगपदघटितत्वेन तत्त्वानापत्तिश्च । पदग्रहणानुपादाने मातृभोगीण इत्यत्र तादृशभोगीनघटितत्वातत्त्वानापत्तिः तत्सत्त्वे तु भोगीनेत्यस्य प्रत्ययमात्रस्य वा पदत्वाभावान्नदोषः ।

नन्वत्र पदपदेन किं गृह्यते सुप्तिङन्तमिति पारिभाषिकम् अथार्थवन्मात्रम् ।

नाद्यः रामं नमतीति रामनाम गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्रागेव समासे नामगानयोः पदत्वाभावेन तादृशोदासीनपदाघटितत्वेन समानपदत्वेन णत्वापत्तेः

नान्त्यः रामेण मातृभोगीण इत्यत्र इनेनयोरर्थवत्त्वेन तद्घटितत्वात्समानपदत्वाभावेन णत्वानापत्तेरिति चेदुच्यते—

विभक्तीतरानपेक्षया लोकेऽर्थविषयकबोधजनकमेव पदशब्देन गृह्यते मातृभोगीण इत्यत्र भोगीनेत्यस्य ईनस्य वा तादृशपदत्वाभावेन तद्घटितत्वेऽपि न समानपदत्वक्षतिः । एवं च रामनाम गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्राक्समासेऽपि निमित्तानधिकरणनिमित्तिमदर्थवन्नामगानपदघटित्वात् समानपदत्वम् ।

न च नाथरघुणा इत्यत्र तादृशनाथपदघटितत्वेन समानपदत्वाभावाणत्वं न स्यादिति वाच्यम् निमित्तानधिकरणनिमित्तमदुत्तरपदाघटितत्वमित्यङ्गीकारेणादोषात् ।

नन्वत्रोत्तरपदशब्दस्समासचरमावयवे रूढ उत उत्तरं च तत्पदमिति गृह्यते नाद्यः सुन्दरो नवीनः प्रासादो यस्येति त्रिपदबहुव्रीहौ सुन्दरनवीनप्रासाद इत्यत्र णत्वापत्तेः। नापि द्वितीयः गिरां नाथः गीर्नाथः स च रघुस्तेन गीर्नाथरघुणा इत्यादौ तादृशनाथपदघटितत्वेन समानपदत्वानापत्त्या णत्वानापत्तेरिति चेदुच्यते—

करिष्यमाणणत्वनिमित्तीभूतरेफानधिकरणस्यैव निमित्तिमदुत्तरपदस्य ग्रहणेन उत्तरं च तत्पदमिति स्वीकारपक्षे गिरवयवरेफानधिकरणनिमित्तमन्नाथपदघटितत्वेऽपि णत्वनिमित्तरघ्वयवरेफानधिकरणनिमित्तिमदुत्तरपदाघटितत्वेन समानपदत्वसिद्धेः—

न च सुवर्णनामेत्यत्र समानपदत्वानापत्तिरिति वाच्यम् कृतणत्वस्यैव नामपदेन सह समासे दोषाभावात् ।

न च सर्वनरेण परमाग्नीध्रेण वानरनराणामित्यत्र तादृशोदासीनपदाघटितत्वेन समानपदत्वान्नरनकारस्य णत्वापत्तिरिति वाच्यम् रेफषकारान्यतरात्परस्य नस्य णो भवतीत्यर्थेनादोषात् वै० स्वोत्तरत्व स्वाघटितपदाघटकत्वोभयसम्बन्धेन समानपदग्रहणमत्रैव तात्पर्यग्राहकं बोध्यम् । नरेणेत्यत्र नरनस्य णत्ववारणायाद्यं रामनामेत्यत्र णत्ववारणाय द्वितीयम् ।

न च सर्वनरेणेत्यत्र सर्वघटकरेफोत्तरत्वस्य नरशब्दस्य रेफघटित्वेन रेफाघटितोदासीनपदाघटकत्वस्य च नकारे सत्त्वेन णत्वं स्यादिति वाच्यम् यस्माद्रेफात् णत्वं चिकीर्षितं तदेव स्वपदे न ग्राह्यमिति सर्वघटकरेफाघटितनरशब्दघटकत्वस्यैव नकारे सत्त्वेनादोषात् ।

न च व्रीहिवापाणीत्यादौ प्रातिपदिकान्तेत्यादेरसिद्धत्वादट्कुप्वाङिति नित्यं णत्वं स्यात् नुमो ग्रहणं तु प्रहिण्वन्नित्यत्र णत्वार्थं चरितार्थमिति वाच्यम् स्वानधिकरणपदघटितसमुदायनिरूपितावयवत्वाभाववत्त्वरूपतृतीयसम्बन्धस्यापि वैशिष्ट्यनियामकस्याङ्गीकारेणादोषात् नुमस्तादृशसमुदायनिरूपितावयवत्वसत्त्वात्

न च वारिणिशय इत्यादौ नुमस्तादृशसमुदायनिरूपितावयत्वेन णत्वानापत्तिरिति वाच्यम् तृतीयसम्बन्धस्थाने स्वानधिकरणपदघटितसमुदायनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयतानाश्रयत्वस्य निक्षेपेणादोषात् ।

नारायण इत्यत्र णत्वं तु पूर्वपदादिति बोध्यम् ।

यत्तु निमित्तिविशिष्टनिमित्तघटितत्वमेवाखण्डपदत्वम् । वै० स्वानुत्तरत्व स्वाघटितपदाघटकत्वसम्बन्धाभ्यां प्रथमसम्बन्धनिवेशात्सर्वनरेणेत्यत्र द्वितीयसम्बन्धनिवेशात् रामनामेत्यत्र णत्वाभाव इति तन्न मातृभोगीण इत्यत्र णत्वानापत्तेः ।

केचित्तु निमित्तिविशिष्टपदाघटितत्वमेव समानपदत्वम् वै० स्वघटितत्व

१०

स्वानुत्तरनिमित्ताघटितत्वसम्बन्धाभ्यां रामनामेत्यत्र निमित्तनकारानुत्तररामावयवरेफाघटितोदासीनपदाघटितत्वेनाऽखण्डपदत्ववारणायाद्यम् सर्वनरेणेत्यत्रणत्वसिद्धये द्वितीयं दलमित्याहुः ।

यत्तु निमित्तवत्पदभिन्नपदत्वाभाववत्त्वमेवाखण्डपदत्वमिति रामेण मातृभोगीण इत्यस्य रेफादिमत्पदभिन्नपदत्वाभाववत्त्वसत्त्वात्समानपदत्वसिद्धिरिति ।

तन्न रामनामेत्यादौ उत्तरपदत्वे चेति प्रत्याख्यानरात्यातिव्याप्तेः सुबुत्पत्तेः प्रागेव समासात् गन्धर्वगानमित्यादौ अतिव्याप्तेश्च सर्वनरेणेत्यत्र पूर्वनस्य णत्वापत्तेश्च ।

निमित्तस्य निमित्तिमत्पदस्थत्वमेव समानपदत्वमित्यपि न युक्तम् रामनाम गन्धर्वगानमित्यादावतिव्याप्तेरन्यथा मातृभोगीण इत्यत्राव्याप्तेः सर्वनरेणेत्यत्र पूर्वनस्य णत्वापत्तेश्च ।

ननु पूर्वपदात्संज्ञायामग इति सूत्रारम्भात्पूर्वपदस्थान्निमित्तात्परस्य नस्य णत्वं चेत्तर्हि संज्ञायामेवेति नियमादेव रामनामेत्यादौ दोषाभावात् समानपदग्रहणं व्यर्थम् । प्रातिपदिकान्तनुम् इति सूत्रं तु प्रातिपदिकान्तनुम्विभक्तिभिन्नस्य नस्येति विशेषणदानेन चरितार्थमिति चेन्न शोभनप्रियनायिक इत्यत्र णत्वापत्तेः पूर्वपदशब्दस्य समासप्रथमावयवरूढत्वादिति शम् ।

## प्रत्ययलोपे प्रत्ययलक्षणम् ।

ननु हरिरित्यत्र जसोऽभावसत्त्वाज्जसि चेति गुणापत्तिः न च शास्त्रकर्तृकप्रत्ययलोपे प्रत्ययलक्षणमित्यङ्गीकारान्न दोष इति वाच्यम् हरिप्रिय इत्यत्र ङसोऽभावसत्त्वेन घेर्ङितीति गुणापत्तेरिति चेन्न—

यस्याः प्रकृतेर्विहितस्य यत्प्रत्ययस्याभावः शास्त्रकर्तृकस्तस्याः प्रकृतेस्तत्प्रत्ययनिमित्तकं कार्यमित्यर्थाभ्युपगमेन हरिरित्यादौ दोषाभावात् हरिप्रिय इत्यत्र तु नलुमतेति निषेधान्न दोषः ।

न च राज्ञ इत्यत्र नलोपापत्तिः राजेत्यत्रशास्त्रकर्तृकप्रत्ययाभावसत्त्वादिति वाच्यम् 'प्रत्युच्चारणं शब्दा भिद्यन्त' इत्यभ्युपगमेन सुप्रकृतिराजशब्दापेक्षया ङस्प्रकृतिराजशब्दस्य भिन्नत्वेनादोषात् ।

न च भेदीयानुयोगितावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रतियोगिनिरूपितवृत्तित्वाभावप्रकारकनिश्चयत्वेन कारणतेति नियमस्य स्वीकारेण राजशब्दाद्भिन्नो राजशब्द इति व्यवहार एवानुपपन्न इति वाच्यम् राजशब्दत्वावच्छिन्नप्रतियोगिताकभेदस्य राजशब्दे वक्तुमशक्यत्वेऽपि सुसमभिव्याहृतराजशब्दप्रकृतिकभेदस्य ङस्समभिव्याहृतराजशब्दे वक्तुं शक्यत्वात् समभिव्याहृतत्वं च शब्दविशिष्टत्वं वै० स्वपूर्वत्व स्वोत्तरत्वान्यतरसम्बन्धेनेति ।

लोपनं लोपः प्रत्ययस्य लोपः प्रत्ययलोपः प्रत्ययो लक्षणं निमित्तं यस्य

तत्प्रत्ययलक्षणम् प्रत्ययलोप इति यस्य च भावेनेति सप्तमी प्रत्ययलोपे सतीत्यर्थः औपश्लेषिकाधिकरणबोधकसप्तम्यभ्युपगमे तु प्रत्ययलोपाव्यवहितपूर्वस्य प्रत्ययनिमित्तकं कार्यं स्यादित्यर्थः स्यात् । स च न सम्भवति अभावेन पौर्वापर्यव्यवहारासम्भवात् बौद्धपौर्वापर्यव्यवहाराङ्गीकारेऽपि बहुपरिव्राजका नगरीत्यत्र प्रत्ययलोपाव्यवहितपूर्वस्य कार्याभावेन प्रत्ययलक्षणाप्रवृत्त्या असुप इति निषेधाभावेनेत्त्वापत्तेः वोभवीतीत्यत्र प्रत्ययलोपाव्यवहितपूर्वस्य कार्याभावेन प्रत्ययलक्षणाप्रवृत्त्या 'यङो वे'तीडागमानापत्तेश्च ।

नन्वस्मिन्सूत्रे प्रथमप्रत्ययग्रहणं किमर्थम् न चापिपूर्वकादीयतेः क्विपि भागुरिमते अल्लोपे औविभक्तौ पियावित्यत्र प्रत्ययलक्षणेनानेकाच्त्वाद्यण् स्यादिति वाच्यम् उदियावित्यत्र यण्व्यावृत्तये किञ्चिद्धात्वयवपूर्वकस्यैव यण्विधानेन प्रकृतेऽदोषात् ।

न च ननन्देत्यादाविकारलोपे प्रत्ययलक्षणेनानेकाच्त्वादाम् स्यादिति वाच्यम् अनुबन्धरहितस्यैवानेकाचो ग्रहणस्य कासग्रहणेन ज्ञापनात् ।

न च ग्रामणिकुलमित्यत्र प्रत्ययलक्षणेन तुगापत्तिः कृते तु प्रत्ययग्रहणे तत्सामर्थ्येन प्रत्यये सति यत्कार्यं प्राप्नोति तल्लोपे सति भवतीत्यर्थकल्पनान्न तुगिति वाच्यम् अन्तरङ्गे तुकि बहिरङ्गह्रस्वस्यासिद्धत्वेनादोषात् प्रत्ययग्रहणेनोक्तार्थकल्पनायां जगदित्यत्र द्युतिगमिजुहोतीनामिति क्विपि अन्तरङ्गत्वात्पूर्वं क्विलोपे तुगापत्तेश्च प्रत्ययग्रहणं प्रत्ययत्वपर्याप्त्यधिकरणलोपे प्रत्ययलक्षणं यथा स्यादित्यर्थं तेनाघ्नीयेत्यत्र नानुनासिकलोपः ।

नागेशभट्टास्तु प्रत्ययेत्यनुवृत्त्यैव सिद्धे प्रत्ययग्रहणमुक्तार्थे प्रमाणमित्याहुस्तन्न अन्यतरच्छक्यमकर्तुमिति भाष्येण विरोधात् ।

परे तु प्रत्ययेत्यनुवृत्त्येत्यस्य प्रत्ययस्य प्रत्यासत्त्यानुपश्चाद् वृत्त्या सम्बन्धेनेत्यर्थकरणेन भाष्यविरोधं परिहरन्ति ।

न च नागेशमते प्रत्ययेत्यनुवृत्तौ प्रत्ययलोप इत्यर्थेन प्रत्ययत्वपर्याप्त्यधिकरणस्यैव लोपे प्रत्ययलक्षणं भविष्यतीति आघ्नीयेत्यत्र दोषाभावात्तदर्थं सूत्रस्थप्रत्ययग्रहणं निरुक्तार्थकमिति कथनमयुक्तमिति वाच्यम् प्रत्ययावयवेऽपि प्रत्ययत्वपर्याप्त्यधिकरणत्वव्यवहारो भवतीति सूत्रस्थप्रथमप्रत्ययग्रहणेन ज्ञापनात् तेनादेशप्रत्यययोः इदुदुपधस्याप्रत्ययस्येत्यादौ न प्रत्ययपदस्य प्रत्ययावयवे लक्षणोपयोगः सूत्रस्थं प्रत्ययग्रहणं तु कृत्स्नप्रत्ययलोपे एव प्रत्ययलक्षणार्थमिति बोध्यम् ।

न चानुदात्तोपदेश इति सूत्रे वनसाहचर्येणानुपधालोपिनोनुदात्तोपदेशस्यानुनासिकान्तस्य लोपविधानेनाघ्नीयेत्यत्र दोषाभावान्निरुक्तकल्पना व्यर्थेति वाच्यम् सहचरितपरिभाषाया अनित्यत्वात् किं च वनसाहचर्याज्झलादौ क्ङित्यनु-

पधालोपिनोऽनुनासिकान्तस्य झलादौ क्ङिति अनुनासिकलोप इत्यर्थस्य शब्द-मर्यादयाऽलाभात् झलादिक्ङित्पदयोस्तन्त्रे आवृत्तौ वा प्रमाणाभावात् आघ्नीयेत्यत्र झलादौ क्ङिति लोपाभावाच्च अजादौ क्ङिति उपधालोपेन झलादाव-नुपधालोपित्वस्यैव सत्त्वाद् अनुपधालोपिनोऽनुनासिकान्तस्य झलादौ क्ङिति लोप इति सामान्यार्थस्वीकारेणाघ्नीयेत्यत्र दोषवारणे तु हतो हथ इत्यत्रापि लोपानापत्तिः तस्मात्सहचरितपरिभाषया न निर्वाह इति बोध्यम् ।

किञ्चोक्तकल्पनायाः समिधेति फलम् समिधमिच्छतिसमिध्यति क्विप्य-ल्लोपयलोपयोष्टाविभक्तौ प्रत्ययलक्षणेनादन्तत्वमादाय इनादेशःस्यात् कृत्स्न-प्रत्ययलोप एव प्रत्ययलक्षणाङ्गीकारे तु न दोषः ।

न च प्रत्ययावयवे प्रत्ययत्वव्यवहाराङ्गीकारे यस्मिन्विधिरिति सूत्रस्थभाष्य विरोधः तत्र हि यस्मिन्विधिरिति परिभाषां खण्डयन् अचिश्नु इतीयङ् श्रियै इत्यत्रैव स्यात् । न तु श्रिय इत्यत्रेत्युक्तवान् पतञ्जलिर्भगवान् त्वद्रीत्या ङसोऽकारेऽपि प्रत्ययत्वसत्त्वात्तस्मिन्नपीयङ् स्यादेवेति भाष्यासङ्गतिः स्पष्टैवेति वाच्यम्

असोऽकारे प्रत्ययत्वसत्त्वेऽपि अजन्तत्वविरहादेवेयङोऽप्राप्त्या भाष्यासंगत्य-भावात् अजन्तत्वं च अज्विशिष्टत्वं वै०स्वघटितत्व स्वध्वंसाधिकरणक्षणवृत्तिवर्णा-घटितत्वोभयसंबन्धेन असोकारस्याच्त्वात्तद्घटितत्वाभावात् व्यपदेशिवद्भावेन तु नाज्घटितत्वव्यवहारः असहाये एव तत्प्रवृत्तेः असहायत्वं मुख्यधर्मवदघटक-त्वे सति मुख्यधर्मवदघटितत्वे सति मुख्यधर्मवदसमभिव्याहृतत्वम् अकारस्य मुख्यधर्मवतोऽसो घटकत्वात् किञ्चाङ्गसंज्ञानिमित्तकेऽजन्तप्रत्यये इयङित्यर्थेना-कारमात्रस्याजन्तप्रत्ययत्वेऽपि अङ्गसंज्ञानिमित्तकत्वाभावात् ।

न च राममित्यत्र मकारेपि सुप्त्वव्यवहारमादाय सुपिचेति दीर्घापत्तिरिति वाच्यम् सामान्यातिदेशो विशेषानतिदेश इति न्यायेन प्रत्ययावयवे प्रत्ययत्वावच्छि-न्नविषयताया प्रत्ययग्रहणेन ज्ञापनेऽपि सुबवयवे सुप्त्वावच्छिन्नविषयताया अङ्गी-कारस्य कर्तुमशक्यत्वात् ।

नचोष्ट्रगोयुगम् इति लक्ष्ये गोयुगच्प्रत्ययावयवे प्रत्ययत्वव्यवहारेण वान्त-देशापत्तिरिति वाच्यम् ओकारोच्चारणसामर्थ्येन तद्वारणात् ।

नन्वाखनिकवक इत्यत्र ककारस्येत्संज्ञापत्तिः न च फलाभावान्नेत्संज्ञेति वाच्यम् गमहनेत्युपधालोपस्यैव फलत्वादिति चेन्न—

अवयवत्वन्यूनवृत्तिधर्मावच्छिन्नविषयताऽनिरूपिता प्रत्ययत्वावच्छिन्ना विषयता प्रत्ययावयवे गच्छतीत्यर्थस्यैव प्रत्ययग्रहणेन कल्पनात् एवं च लशक्वित्यस्य प्रत्ययादिभूता लशकवर्गा इतः स्युरित्यर्थेनात्रत्यप्रत्ययपदप्रयोज्या प्रत्ययत्वावच्छि-न्ना विषयता अवयवत्वन्यूनवृत्त्यादित्वावच्छिन्नविषयतानिरूपिता इत्यदोषः ।

किंचादिग्रहणसामर्थ्येन प्रत्ययविशिष्टप्रत्ययपदप्रयोज्यप्रत्ययत्वावच्छिन्ना विषय-

ताऽवयवेऽपि स्वीक्रियत इत्येव कल्प्यते वै० स्वतादात्म्य स्वेतरपदप्रयोज्यविषयतानिरूपितविषयत्वाप्रयोजकत्वसम्बन्धाभ्याम् एवंचात्रत्यप्रत्ययपदस्य स्वेतरादिपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वस्यैव सत्वान्न दोषः ॐ

केचित्तु येनविधिरितिसूत्रस्थभाष्यविरोधपरिहाराय षष्ठ्यन्तपदप्रयोज्या विषयता यत्र तत्रैव प्रत्ययावयवे प्रत्ययत्वव्यवहार इति कल्प्यते–

न च लशक्वित्यत्रापि प्रत्ययपदस्य षष्ठ्यन्ततया दोष इति वाच्यम् षष्ठ्यन्तपदप्रयोज्या यत्र मुख्या विषयतेत्यङ्गीकारेणादोषाद् विषयतायां मुख्यत्वं च स्वावयनिष्ठविशेष्यतानिरूपितप्रकारत्वासामानाधिकरण्यम् प्रत्ययस्य स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वस्यैव सत्त्वान्न दोष इति वदन्ति ।

केचित्तु ज्ञापकसाजात्यात्सूत्रघटकप्रत्ययपदप्रयोज्यविषयताया एवावयवे आरोप इत्यङ्गीकारेण 'अचिश्नु' इत्यत्राङ्गाक्षिप्तप्रत्ययपदप्रयोज्यविषयताया अवयवेऽनारोपान्न भाष्यविरोध इति प्राहुः ।

ननु नियमस्य संकोचरूपत्वेन तदाकारस्यात्र विघटनान्न सांप्रतं प्रत्ययपदस्य नियमार्थत्वं वक्तुमुचितमिति चेन्न सामान्यतः प्रोच्यमानस्य प्रत्ययपदस्यावयवत्वानवच्छिन्नत्वेन विशेषमात्रपरत्वात् ।

ननु ग्रामावयवे दग्धेऽपि ग्रामो दग्ध इति यथालौकिकप्रतीतिस्तथा प्रत्ययावयवलोपव्यवहारो भविष्यत्यतीदमेव मानमिति कथनं भट्टस्यायुक्तमिति चेत्तर्हि एतस्य लोकसिद्धानुवादकत्वात् ।

केचित्तु यदागमपरिभाषया लिङवयवे सीयुटि लोकविदितप्रतीतिवत् प्रत्ययत्वव्यवहारेऽपि सकारे तदभावदर्शनेनाऽवयवेपीत्यस्यावयवावयवेपीत्यर्थस्यावश्यकत्वादित्याहुः ।

ननु स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं किमर्थम् ।

नचाल्विध्यर्थम् गवे हितम् गोहितमित्यत्रावादेशवारणाय वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषयाऽस्याप्यल्विधावनिष्टत्वात् ।

न च प्राधान्येनालाश्रयणे स निषेधः अप्राधान्येनालाश्रयणे प्रत्ययलक्षणं भवत्येव तेन अतृणेडित्यत्र हलादिपित्त्वमादाय इमागमसिद्धिरिति वाच्यम् नाभ्यस्तस्याचीत्यतो न अचीतिपदद्वयमनुवर्त्य तृणह इमागमः स्यात् पिति सार्वधातुके अचि नेत्यर्थकरणेन तृणहानीत्यत्र दोषाभावेन हलादिनिमित्तकत्वाभावेन अतृणेडित्यस्य स्थानिवत्सूत्रेण सिद्धेः ।

न च मित्रशीरित्यत्रेत्वार्थं प्रत्ययलक्षणसूत्रम् इति बोध्यम् 'शास इत्' ततः 'अङि' अजादौ चेदङ्येवेति नियमेन शासतीत्यादिसिद्धेर्हल्ग्रहणाकरणेन मित्रशीरित्यत्र कित्त्वस्य स्थानिवत्त्वेनैव सिद्ध्या प्रत्ययलक्षणानुपयोगात् ।

ननु अङ् साहचर्येण हलादावपीत्वं परस्मैपदे एवेति आशास्ते इत्यत्र नेत्व-

मिदानीं साहचर्यस्य वक्तुमशक्यत्वेनेत्वं स्यादिति चेन्न आशासः क्वाविति वार्तिकस्य आङ्पूर्वाच्छास्तेश्चेत्तर्हि क्वावेवेति नियमार्थतया इत्ववारणात्

न चाशीरित्यत्र वर्णाश्रयत्वेन प्रत्ययलक्षणाप्रवृत्त्या इत्वार्थं तदिति वाच्यम् इदानीं शास इत् इति योगविभागपक्षे हलादिनिमित्तकत्वाभावेन वर्णाश्रयत्वाभावात् क्षियाशीरित्यादिनिर्देशेनाशीरित्यस्य सिद्धिं कृत्वा वार्तिकप्रत्याख्यानपक्षे तु आरम्भप्रत्याख्यानयोः फलैक्याय शासु अनुशिष्टौ इत्यस्यैव सूत्रे ग्रहणमिति बोध्यम् ।

यत्तु क्तिसाहचर्यात् ङितोऽपि परस्मैपदविहितस्यैव ग्रहणमिति आशास्त इत्यत्र दोषाभाव इति ।

तन्न आशशासे इत्यत्र कितोऽप्यात्मनेपदस्य सत्त्वात् इति चेन्न—

प्रत्ययलोपे सति प्रत्ययलक्षणमेव न तु स्थानिवदिति नियमार्थं तदावश्यकत्वात् ।

ननु व्यर्थशास्त्रीयोद्देश्यतावच्छेदकव्यापकं व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचः क्रियते एवं च व्यर्थताप्रयोजकस्थानिवत्सूत्रीयोद्देश्यतावच्छेदकादेशत्वव्याप्यत्वस्य प्रत्ययलोपत्वे सत्त्वेऽपि व्यर्थप्रत्ययलक्षणशास्त्रीयोद्देश्यतावच्छेदकप्रत्ययलोपत्वव्यापकत्वस्याभावात् कथं स्थानिवत्सूत्रीयादेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन संकोचः ।

न च स्वसमानाधिकरणात्यन्ताभावीयप्रतियोगितानवच्छेदकधर्मवत्त्वरूपव्यापकत्वस्य स्वस्मिन्नपि सत्त्वेन स्वव्यापकत्वं स्वस्यापीति प्रत्ययलोपत्वव्यापकत्वस्य प्रत्ययलोपत्वे सत्त्वान्न दोष इति वाच्यम् निरुक्तव्यापकत्वस्य प्रकृते स्वीकारे समासत्वव्यापकत्वस्य समासत्वेऽपि सत्त्वेनार्थवत्सूत्रे तदवच्छिन्नातिरिक्तत्वेन संकोचे स्नुषाश्वश्रून्यायप्रसङ्गात् वाक्ये प्रातिपदिकत्वस्य दुर्वारत्वाच्च प्रकृते स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्व स्वाभावाधिकरणनिरूपितवृत्तित्वोभयसंबन्धेन स्वविशिष्टत्वरूपव्यापकत्वस्य स्वीकारे स्वनिरूपितत्वस्य स्वस्मिन्नसत्त्वात् ।

न च प्रत्ययलोपसूत्रे प्रत्ययलक्षणमिति उद्देश्यसमर्पकं प्रत्ययलोपे इति विधेयसमर्पकम् एवं च प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताकं कार्यं प्रत्ययलोपनिमित्तकं भवति एवं स्थानिवत्सूत्रे स्थानिवदिति उद्देश्यसमर्पकम् आदेश इति विधेयसमर्पकम् एवं च स्थानिवृत्तिधर्मावच्छिन्ननिमित्तताककार्यवदादेशो भवति तथा च स्थानिवृत्तिधर्मावच्छिन्ननिमित्तताककार्यत्वव्याप्यं प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्यत्वव्यापकं च प्रत्ययवृत्तिधर्मावच्छिन्ननिमित्तताककार्यत्वमिति तेन रूपेण संकोचान्न कोऽपि दोष इति वाच्यम् रामायेत्यादौ दीर्घस्य

प्रत्ययवृत्तिधर्मावच्छिन्ननिमित्तताककार्यत्वेन स्थानिवत्सूत्राप्रवृत्तौ दीर्घानापत्तेरि-ति चेन्न प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताककार्यप्रयोजकप्रत्ययलोपत्वव्यापकप्रत्ययलोपत्वावच्छिन्नातिरिक्तत्वेन संकोचे क्षतिविरहात् ।

न च लोपत्वावच्छिन्नातिरिक्तत्वेनैव संकोचोऽस्तु इति वाच्यम् दामन् शब्दादचक्षाणणिचि क्विपि दामः समीपमुपदाममित्यत्र स्थानिवद्भावेन अनन्तादनश्चेति टचि उपदाममिति भवति लोपातिरिक्तत्वेन संकोचे स्थानिवत्त्वाप्राप्त्या तदसिद्धेः ।

न च प्रत्ययलोपातिरिक्तत्वेन संकोचे स्नुषाश्वश्रून्यायप्रसङ्ग इति वाच्यम् प्रत्ययलोपे तल्लक्षणमित्येव सिद्धेः द्वितीयप्रत्ययग्रहणं यत्र प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणम् इति बोधयति असाधारण्यं च प्रकृते प्रत्ययवृत्तित्वे सति तदितरावृत्तित्वरूपम् सुदृषत्प्रासाद इत्यत्र स्थानिवत्त्वेनासन्तत्वमादाय सुदृषच्छब्दे दीर्घः प्राप्तः नियमेन वार्यते प्रत्ययलक्षणेन दीर्घस्तु न प्राप्नोति अस्त्वस्य प्रत्ययासाधारण्याभावदिति सुदृषदित्यत्र दीर्घव्यावृत्त्यर्थं नियमस्यावश्यकतया स्नुषाश्वश्रून्यायप्रसङ्गाभावात् ।

न चातुसाहचर्येण श्रूयमाणासन्तस्यैव ग्रहणेन प्रकृते दीर्घाप्राप्त्या नेदं नियमफलमिति वाच्यम् सहचरितपरिभाषानित्यत्वस्यापि ज्ञापनात् ।

यत्तु मतिमच्छब्दादाचक्षाणण्यन्तात्क्विपि स्थानिवद्भावेनात्वन्तत्वात्सौ परे दीर्घदर्शनान्न तत्साहचर्येण सुदृषदित्यत्र दीर्घौ वारयितुं शक्य इति तन्न सूत्रेऽतु इत्यस्य लुप्तषष्ठ्यन्तनिर्देशात् निर्दिश्यमानपरिभाषयाऽतुपदीयनिर्दिश्यमानावयवोपधाया दीर्घविधानेनेन प्रकृतेऽतुशब्दावयवोपधाया अभावेन दीर्घाप्राप्तेः साहचर्यस्य वक्तुं शक्यत्वात् ।

अन्ये तु घटवच्छब्दादाचक्षाणणिचि क्वौ विन्मतोरिति लुकि प्रत्ययलक्षणेन अतुप्रत्ययान्ततया सौ दीर्घदर्शनान्न साहचर्यसम्भव इति वदन्ति ।

तदपि न रम्यम् उक्तयुक्तेः अचश्चेतिपरिभाषोपस्थितौ अचो दीर्घविधानाच्च ।

वस्तुतस्तु पचद्वच्छब्दादाचक्षाणण्यन्तात्क्वौ प्रत्ययलक्षणेनात्वन्तत्वे दीर्घदर्शनेन साहचर्यस्य वक्तुमशक्यत्वम् इति बोध्यम् ।

यत्तु यशस्वीत्यादिषु विनिप्रत्ययलाभार्थं अस्मायेत्यत्रासन्तेत्यर्थ आवश्यक इति तदर्थमनिनस्मन्निति असि वर्णत्वातिदेश आवश्यक इति अल्विधित्वात्स्थानिवत्त्वाप्राप्त्या सुदृषदित्यत्र दीर्घाप्राप्तिरिति

तदतिस्थवीयः उपदाममिति प्रदर्शितप्रयोगस्य पयःशब्दाण्णौ क्विपि स्थानिवद्भावेनासन्तत्वाद् विनिप्रत्यये पयस्वीति प्रयोगस्य चासिद्ध्यापत्तेः बहुदण्डिन्छब्दाण्णौ क्विपि संयोगान्तलोपे बहुदन्नित्यत्र इनः स्त्रियामितिकपो राजन्छब्दाण्णौ क्विपि राज्ञः समीपमुपराडित्यत्र स्थानिवद्भावेनानन्तत्वमादाया-

ऽनश्चेति टचः बोभवीतीत्यत्र स्थानिवत्त्वेन ङित्वादात्मनेपदस्य च वारणाय नियमस्यावश्यकत्वमित्यलम् ।

यत्तु सुदृषत्प्रासाद इत्यत्र दीर्घस्य फलत्वाभावेऽपि अस्मायेतिविनिवारण-मेव फलमिति तन्न तत्रापि मायादिसाहचर्येणासवयववर्णघटितस्यैवासन्तस्य ग्रहणेनादोषात् ।

ननु अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमितिवार्तिकमते-ऽतृणेडित्यस्य कथं सिद्धिः प्रत्ययेतरपदार्थनिष्ठविशेष्यतानिरूपितविशेषणताना-श्रयत्वरूपप्रत्ययप्राधान्ये एव प्रत्ययलक्षणप्रवृत्तेरिति चेन्न वर्णाश्रय इति निषे-धस्य वर्णप्राधान्यविषयकत्वेन प्रकृतेऽप्रवृत्तेः ।

वर्णप्राधान्यं च प्रत्ययनिष्ठविशेषणतानिरूपितविशेष्यताश्रयत्वम् इतरपदा-र्थनिष्ठविशेष्यतानिरूपितविशेषणतानाश्रयत्वं च आद्योदाहरणं चित्रायां जाता चित्रा अणो याऽकार इत्यर्थात् अन्त्योदाहरणं गोहितम् अत्रावादेशाभावः ।

ननु गोहितमित्यत्र नलुमतेतिनिषेधादेवावादेशो न स्यादिति नेदं परि-भाषाफलमिति चेन्न लुप्तप्रत्ययनिमित्ताङ्गोद्देश्यककार्ये एव तेन निषेधात् ।

न च लुप्तप्रत्ययनिष्ठविषयतानिरूपिताङ्गनिष्ठविषयतानिरूपके कार्ये प्रत्यय-लक्षणमित्यर्थाद्गोहितमित्यत्रावादेशवारणं भविष्यतीति वाच्यम् । उक्तमित्यस्य सिद्धयर्थं लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नाङ्गत्वप्रतियोगिकपर्याप्त्यनुयोगिता-वच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तविषयतानिरूपकं कार्यं नेत्यर्थेन गोहित-मित्यत्र तेन वारणासम्भवात् ।

ननु शब्दानां नित्यत्वाभ्युपगमेन एचोऽयन्नेत्यस्याजव्यवहितपूर्वत्वविशि-ष्टैज्घटितोच्चारणेच्छायामयादिघटितमुच्चारणीयं तेनैवार्थो बोद्धव्यस्तदेव साधु इ-त्यर्थस्वीकारेण गोहितमित्यत्र लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नाङ्गपर्याप्तोद्दे-श्यकत्वेन निषेधः सुलभ इति चेन्न—

गोधनावित्यत्र औकाराव्यहितपूर्वत्वविशिष्टगोधनादिबुद्धिप्रसङ्गेऽवादिघटि-तबुद्धिवारणायाचीत्यस्यचो विशेषणतया लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नाङ्ग-निष्ठविषयताया अभावेन निषेधासंभवात् ।

नन्वेवं निर्जरपुत्र इत्यत्र जराया इति सूत्रेऽजादिविभक्तावित्यस्य निर्दि-श्यमानविशेषणत्वेन लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नविषयताया जरानिष्ठत्वेनाङ्गनिष्ठत्वाभावात् प्रत्ययलक्षणेन जरसादेशः स्यादिति चेन्न—

स्वाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नविषयतानिरूपकत्व स्वाव्यवहितपूर्व-त्वावच्छिन्नाङ्गत्वपर्याप्तविषयतानिरूपकत्वोभयसंबन्धेन लुप्तप्रत्ययविशिष्टं कार्यं नेत्यर्थकरणेनादोषात् ।

अन्ये तु लुप्तप्रत्ययविशिष्टविषयताकं कार्यन्नेत्यर्थः वै० च स्वाव्यवहित-

पूर्वत्वेन साक्षादवच्छिन्नत्व स्वनिमिताङ्गसंज्ञावत्पर्याप्तधर्मेणसाक्षात्परम्परया वावच्छिन्नत्वसंबन्धाभ्यामेवं च न दोष इति वदन्ति ।

ननु प्रत्ययलोपे प्रत्ययवदिति सूत्रमस्तु लक्षणग्रहणं व्यर्थमिति चेन्न ।

प्रत्ययनिमित्तकमेव कार्यं यथा स्यान्न तु प्रत्ययस्थानिकमित्यर्थं निमित्तग्रहणस्यावश्यकत्वात् ।

तेन नखभिन्न इत्यत्र प्रत्ययलक्षणेनैस् नेति नागेशः ।

ननु अन्तरङ्गानपोति परिभाषया अन्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेन प्रकृते प्रथममैसादेशे प्रत्ययलक्षणेनापि तदप्रवृत्तौ फलकथनमसंगतमेवेति चेन्न सर्वस्याहितं सर्वाहितमित्यत्रापि उक्तरीत्या स्याटि सुब्लुक्यपि स्याटः श्रवणापत्तेः ।

केचित्तु प्रत्ययस्य लुगिति शास्त्रेण प्रत्ययत्वावच्छिन्नकर्मकादर्शनत्वस्यैव लुकूपदार्थतावच्छेदकतया सर्वाहितमित्यत्र स्याडागमे सति यदागमपरिभाषया विशिष्टस्यैव प्रत्ययत्वात् लुङ् न प्राप्नुयादिति वदन्ति ।

तन्न सुपोधात्वित्यत्र तदन्तविधिना सुबन्तस्य लुग्वारणाय निर्दिश्यमानपरिभाषाप्रवृत्तेरावश्यकतया पुनरप्युक्तदोषानुषङ्गात् ।

लुकूपदमहिम्ना तदन्तविधेर्निर्दिश्यमानपरिभाषायाश्च बाधः क्रियते इत्यपि न युक्तम् । लुकूपदमहिम्ना संज्ञाशास्त्रे भूतपूर्वप्रत्ययग्रहणकल्पनाया एवोचितत्वात् । शास्त्रबाधकल्पनापेक्षयास्यैवार्थस्यौचित्यात् ।

उच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावान्नैस् इति तु न युक्तम् निर्जरसावित्यादौ स्थानिवद्भावेन जराबुद्धावपि उच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावेनैसानापत्तेः ।

ननु प्रत्ययोद्देश्यककार्यस्य प्रवृत्तावपि प्रत्ययस्थानिककार्यस्याभावेन नागेशग्रन्थोऽसंगत इति चेन्न अवकोकिलेनेत्यत्रावकुष्टः कोकिलयेति विग्रहेऽवादय इति समासे गोस्त्रियोरिति ह्रस्वात्पूर्वमिनादेशाप्राप्त्या कृते तस्मिन्निनादेशापत्तेः एकया खट्वया क्रीत इत्यर्थे तद्धितार्थेतिसमासे ठको लुकि लुक्तद्धितेति स्त्रीप्रत्ययलुकि प्रत्ययलक्षणेन भिस ऐसापत्तेश्च टाङसीत्यस्यादन्ताद्विहितानां टादीनामित्यर्थेन न दोष इति चेत्तर्हि येन यैरित्याद्यसिद्धिरेव दूषणमित्यवेहि त्यदादीनाम इत्यत्र विषयसप्तम्यङ्गीकारेण येनेत्यादिसाधने तु अनेषकेत्यस्यासिद्धिः समासात्पूर्वं टाप्यापः सुप्परत्वाभावेनेत्वापत्तेरिति दिक् ।

## उत्तरपदत्वे चापदादिविधौ प्रतिषेधः ।

उत्तरशब्द उत्तरपदपरः विनापि प्रत्ययमिति पदशब्दलोपात् । तथा च उत्तरपदस्य पदसंज्ञायां कर्तव्यायां प्रत्ययलक्षणं नेत्यर्थः तेन परमवाचा परमगोदुहेत्यादौ कुत्वघत्वादयो नेति दीक्षितः ।

नागेशभट्टास्तु उत्तरेति लुप्तषष्ठीकं बहुच्पूर्वस्यापदादिविधौ प्रतिषेध इति

वार्तिकारम्भसामर्थ्येन उत्तरपदे लाक्षणिकं तस्य च समासचरमावयवे रूढिरिति आर्द्रे चर्मेत्यत्र न दोषः आर्द्रचर्मेत्यत्र तु समुदायोत्तरजायमानविभक्तिनिमित्तको नलोपः । पदव्यवायेपीत्यत्र सप्तमीसमासमाश्रित्यातद्धित इति वार्तिकप्रत्याख्यानपरभाष्येण पदपदं पदत्वप्रयुक्तकार्यपरं तथा च उत्तरपदनिष्ठोद्देश्यताके पदत्वयुक्ते कार्ये प्रत्ययलक्षणं नेत्यर्थस्तेन माषकुम्भवापेनेत्यत्र पदव्यवायेपीतिणत्वनिषेधसिद्धिरित्याहुः ।

ननु पूर्वो दण्डी प्रियो यस्येति त्रिपदे बहुव्रीहौ पूर्वदण्डिप्रिय इत्यत्र नलोपसिद्ध्यर्थं परिभाषायामुत्तरपदत्वं मध्यमपदत्वानाक्रान्तं ग्राह्यम् ।

तत्त्वं च स्वघटकप्रातिपदिकावधिकपूर्वत्व स्वघटकप्रातिपदिकावधिकोत्तरत्वोभयसम्बन्धेन वृत्तिविशिष्टत्वमेवं च दण्डीत्यस्य मध्यमपदत्वाक्रान्तत्वेन प्रत्ययलक्षणनिषेधाप्रवृत्या नलोपसिद्धिः ।

नन्वेवं परमलोम्निचर इत्यत्रापि लोम्नो मध्यमपदत्वेन निषेधाप्रवृत्या नलोपापत्तिरिति वाच्यम् सम्बन्धघटकपूर्वत्वोत्तरत्वशब्दाभ्यामव्यवहितपूर्वत्वोत्तरत्वयोर्विवक्षणेनादोषात् एवं स्थिते माषकुम्भवापेनेत्यत्राप्यत एव सिद्धेः कार्यित्वनिवेशो विफलः ।

न च यणादिपरमित्यादिनिर्देशेन यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञाचिकीर्षिता तद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वे सति तद्वृत्तिघटकार्थवदव्यवहितोत्तरत्वस्यैव मध्यमपदत्वेन माषकुम्भवापेनेत्यत्र कुम्भशब्दस्यातथात्वेन निषधाप्रवृत्तये कार्यित्वनिवेश आवश्यक इति वाच्यम् । एवमपि अतद्धित इति वाच्यमिति वार्तिकं पदे परतो यो व्यवाय इत्यर्थकसप्तमीसमासेन आर्द्रगोमयेणेति लक्ष्यं प्रसाध्य प्रत्याचक्षाणस्य भाष्यकर्तुर्मते माषकुम्भं वपतीति माषकुम्भवाप इत्यत्र सुबुत्पत्तेः प्रागेव समासात् पदे परतो व्यवायस्याभावेन णत्वं पदेन व्यवाय इति तृतीयासमासेन वार्तिकस्वीकर्तुर्मते णत्वाभाव इति । आरम्भप्रत्याख्यानयोः फलभेदवारणाय पदपदस्य पदत्वयोग्यार्थकत्वस्यावश्यकतया माषकुम्भवापेनेत्यत्र दोषाभावेन कार्यित्वनिवेशवैफल्यतादवस्थ्यात् ।

एतेन माषः कुम्भः पो यस्येति त्रिपदबहुव्रीहौ पदे परत इति कार्यित्वनिवेशाभावे उत्तरपदत्व इति निषेधाणणत्वम् । पदेन व्यवाय इति वार्तिकमते कुम्भस्य मध्यमत्वेन उत्तरपदत्व इत्यस्याऽप्रवृत्या णत्वाभाव इति फलभेदः स्यात् कार्यित्वनिवेशे तु उत्तरपदस्य कार्यित्वाभावात् निषेधाप्रवृत्या पदे परत इति मतेऽपि न णत्वमित्यपास्तम् माषकुम्भवापेनेत्यर्थं पदत्वयोग्यार्थकत्वस्यावश्यकत्वेन प्रकृतेऽपि तत एव फलभेदाभावात् ।

न च पदत्वयोग्यत्वं यदि प्रातिपदिकसंज्ञकत्वं तदा पिब भव इति सततं यस्यां क्रियायां सा पिबभवा सुन्दरा पिबभवा येषां तेषां सुन्दरपिबभवाना-

मित्यत्र पिवेत्यस्य प्रातिपदिकत्वाभावेन पदव्यवायेऽपीति निषेधाप्रवृत्या णत्वापत्तिः ।

अत एव पदसंज्ञासंपादकसुप्तिविध्युद्देश्यतावच्छेदकान्तत्वरूपमपि न तदिति वाच्यम् । प्रातिपदिकत्वतिङन्तत्वैतदन्यराश्रयत्वरूपस्यैव पदत्वयोग्यत्वस्य स्वीकारेणादोषात् ।

न च गोचेत्यत्र गतिकारकोपपदानामित्यस्यानित्यत्वेन सुबुत्पत्तेरनन्तरं समासेऽपि न पदान्तेत्यत्र पदेऽन्त इति समासपक्षे निषेधाप्रवृत्तिः उत्तरपदत्वे चेति पदत्वनिषेधात् ततश्चावङ् स्यात् कार्यित्वनिवेशे तु उत्तरपदत्वे इत्यस्याप्रवृत्या नपदान्तेति निषेधेन नावङिति वाच्यम् । नपदान्तसूत्रे षष्ठीसप्तमीतत्पुरुषयोः फलैक्याय पदपदस्य पदत्वयोग्योपलक्षकत्वेन कार्यित्वनिवेशाभावेऽपि दोषाभावात् ।

न च निरुक्तपदत्वयोग्यत्वस्यान्यतरघटितत्वेन गौरवमिति वाच्यम् । स्वप्रयोजकसुप्तिविध्युद्देश्यतावच्छेदकाक्रान्तत्व स्वप्रयोजकप्रत्ययनिष्ठचरमावयवतानिरूपकत्वान्यतरसंसर्गेण पदत्वविशिष्टत्वस्यैव तत्त्वात् ।

न च परमश्चासावडश्चपरमाडः आचारक्विबन्तात् क्तिचि अल्लोपे परमाट्तिरिति भवति उत्तरपदत्वे इत्यस्य प्रत्याख्यानपक्षे नपदान्तेनिषेधात् इति आरम्भेऽपि फलैक्याय कार्यित्वनिवेश आवश्यकः । एवं न अः अनः स इवाचचार अनांचकारेत्यत्र निर्दिश्यमानपरिभाषयाऽकारमात्रस्य लोपे प्रत्याख्यानपक्षेऽसर्वनामस्थान इति निषेधाप्रवृत्या पदत्वेन ङमुट इष्टत्वम् इति आरम्भेऽपि फलैक्याय कार्यित्वनिवेशस्यावश्यकत्वमिति वाच्यम् । लेढीति लिह इगुपधेति कः परमलिहशब्दादाचारक्विबन्ताद्वनिपि परमलिह्वेत्यत्र आरम्भप्रत्याख्यानयोः फलैक्याय असर्वनामस्थाने यचीत्यत्र सर्वनामपदस्य स्वाद्यतिरिक्तप्रत्ययमात्रपरत्वेन उक्तलक्ष्ययोः प्रत्याख्यानेऽपि पदत्वस्य वक्तुमशक्यत्वात् ।

न च परमहरे गच्छेत्यत्र परमहरेत्यस्याविद्यमानवद्भावेऽपि कार्यित्वनिवेशे उत्तरपदत्व इत्यस्याप्रवृत्या हर इत्यस्य पदत्वेन तत्परत्वेन गच्छेत्यस्य निघातसिद्धिरेव कार्यित्वनिवेशफलमिति वाच्यम् परमहरे इत्यस्याविद्यमानत्त्वेऽवयवस्याप्यविद्यमानत्वेन तत्र निघातस्यानिष्टत्वात् अन्यथा इमं मे गङ्गे यमुने इत्यत्र गङ्गे इत्यस्याविद्यमानवत्त्वेऽपि गकारादिना व्यवधानात् मेशब्दमाश्रित्य यमुने इत्यादौ निघातो न स्यात् इति चेन्न याजयोः समासे आचरक्विपि लोटि हौ हेर्लुकि याज भवतीत्यत्र अजस्य पदत्वेन भवतीत्यस्य निघातो भवति । कार्यित्वनिवेशाभावे उत्तरपदत्वे इति निषेधे तन्न स्यादित्याशयात् समुदायनिष्ठं सुप्तिनिमित्तकं पदत्वमादायेष्टसिद्धिरिति तु न शङ्क्यम् प्रातिपदिकादेव क्विपो विधानात् ।

न च याजेत्यस्य तिङन्ततया अतिङ इति निषेधेन नेष्टो निघात इति वाच्यम् अतिङ इत्यस्य पर्युदासतया समुदायनिष्ठतिङन्तत्वनिमित्तकपदत्वमादाय निषेधेऽपि अजनिष्ठपदत्वमादाय स्वरस्य निषेद्धुमशक्यत्वात् तत्र पदपदस्य पदत्वयोग्यपरत्वेन नेदं दूषणमिति चेन्न यामजतीति कर्मण्यणि याजशब्दात्क्विपि हौ याजभवतीत्यत्र निघातापत्तेः ।

न च कार्यित्वनिवेशे उत्तरपदत्वे इत्यस्याप्रवृत्त्या परमदण्डिनावित्यत्र ङमुडापत्तिरिति वाच्यम् उञि च पदे इत्यतः पदे इत्यनुवर्त्याजादेः पदस्येत्यर्थेन परमदण्डिनावित्यत्र दोषाभावात् ।

नचाजादेः पदस्येत्यर्थकरणे प्रत्यङ्ङकैदित्यत्र ङमुट् न स्यादकचस्तन्मध्यपतितत्वाभावेन अकैदित्यस्य पदत्वाभावान्मम तु परमादण्डिनावित्यस्य परिभाषयैव सिद्धयाजादेः पदस्येत्यर्थाभावेन दोष इति वाच्यम् अकैदित्यस्य तिङन्तभिन्नत्वेन प्रातिपदिकत्वात्सौ पदत्वस्यैव सत्त्वेन दोषाभावात् ।

यत्तु यदागमपरिभाषया पदत्वसिद्धिरिति तन्न अकचोऽवयवत्वावच्छिन्नविधेयताश्रयत्वाभावेनागमत्वस्यैवाभावात् अत एव तन्मध्यपतितन्यायारम्भः ।

न च परमाट्तिः अनांचकारेत्यत्रोत्तरपदत्व इति निषेधः स्यात् उत्तरस्य कार्यित्वाभावात्

एवं चाद्ये ष्टुत्वापत्तिर्द्वितीये च ङमुट् स्यादिति वाच्यम् अनामिति पर्युदासेन नामशब्दावयवसदृशस्यैव ग्रहणेन सादृश्यस्य क्तिजवयवभिन्नत्वेन ग्रहणात् परमाट्तिरिति लक्ष्यस्याप्रमितत्वात् आरम्भप्रत्याख्यानयोः फलभेदाभावाद्वाऽद्ये न दोषः द्वितीयेऽजादित्वाभावान्न ङमुटः प्राप्तिरित्याशयात् ।

न च कार्यित्वनिवेशे परमकवयतीत्यत्र उत्तरस्य कार्यित्वाभावेन पूर्वरूपापत्तिः प्रत्याख्याने तु स्वाद्यतिरिक्ते प्रत्यये पूर्वस्य पदत्वनिषेधान्न दोष इति वाच्यम् एङः पदान्तादित्यत्र पूर्वपरयोरित्यस्यानुवृत्त्या उत्तरस्यापि कार्यित्वात् ।

नचैवं सन्नन्त इत्यत्र ङमुट् न स्यात् उत्तरस्य पदत्वाभावात् उत्तरपदत्वे चेति निषेधादिति वाच्यम् इष्टापत्तेः अत एव सनाद्यन्ता धातवः सुप्तिङन्तमित्यादिनिर्देशा यङन्तः तिङन्त इत्यादिप्रयोगाश्च संगच्छन्ते । इकोयणचीत्यादिनिर्देशेन ङमनुबन्धाव्यवहितोत्तरस्याजादेः पदस्य ङमुड् नेतिज्ञापनेनादोषाच्च सन्नन्तान्न सनिष्यते इत्यत्र सनन्तान्न इत्येव पाठः तस्यैव प्रामाणिकत्वे तु आर्षः प्रयोग इत्यवधेयम् तद्बलेन सन्नन्तपदे ङमुड् वा कल्प्यतामित्यलम् ।

वस्तुतस्तु सुगणीश इत्यत्र ङमुटा दर्शनेन वार्तिके कार्यित्वानिवेश एवोचितः इति परे याजभवतीत्यत्र स्वरापत्तिस्त्वकिंचित्करा इति विभावयन्तु ।

ननु परिभाषायां समासचरमावयवे रूढस्योत्तरपदशब्दस्य ग्रहणे मघोरपत्यानि मघव इत्यत्र प्रत्ययलक्षणेन पदत्वात्पूर्वरूपापत्तिः प्रत्याख्याने तु सर्व-

नामस्थाने यजादौ पूर्वं पदन्नेत्यर्थेन पदत्वनिषेधान्न दोष इति एवमत्रयः अङ्गिरस इत्यत्रापि वोध्यमिति चेन्न वृत्तिचरमावयवत्वरूपस्यैवोत्तरपदत्वस्य परिभाषायां ग्रहणेनादोषात् ।

ननु पञ्चगवमित्यत्र टचः समासान्त्यावयवत्वेन गोशब्दे वृत्तिचरमावयवत्वस्याभावेन वार्तिकाप्रवृत्त्या प्रत्ययलक्षणेनावङाद्यापत्तिः—

न च पदेऽन्त इति समासान्नावङ्पूर्वरूपादिरिति वाच्यम् । पञ्चगवमित्यत्र लोपः शाकल्यस्येति वलोपापत्तेरेव दोषत्वात् ।

नच लोपः शकल्यस्येत्यत्रापि पदेऽन्त इति समासोऽस्तु इति वाच्यम् । भाभ्यामित्यत्र हलिसर्वेषामित्यनेन यलोपार्थमस्मिन्प्रकरणे पदस्यान्त इति षष्ठीतत्पुरुषस्यैवावश्यकत्वात् ।

एतेन पञ्चगवमित्यत्र सत्यप्यवङि यस्येति चेत्यलोपान्न दोष इत्यपास्तम् वलोपस्यैव दोषत्वादिति चेन्न—

स्वघटकत्व स्वघटकार्थवन्निरूपितपूर्वत्वाभाववत्त्वोभयसंबन्धेन वृत्तिविशिष्टत्वरूपस्यैवोत्तरपदत्वस्य ग्रहणेन टचोऽर्थवत्त्वाभावाद्गोशब्दे उत्तरपदत्वस्यैव सत्त्वात् ।

नचैवमपि पञ्चगवधन इत्यत्र अर्थवद्धननिरूपितपूर्वत्वस्यैव सत्त्वेन उत्तरपदत्वाभावादवङाद्यापत्तिरिति वाच्यम् अव्यवहितपूर्वत्वस्य निवेशेन टचा व्यवधानेनादोषात् । राजेत्यादौ नलोपानापत्तिवारणाय स्वघटकत्वदलम् ।

नचातिराजेत्यत्र नलोपो न स्यात् इति वाच्यम् । प्रत्यासत्त्या उत्तरपदप्रकृतिकप्रत्ययप्रयोज्यप्रत्ययलक्षणस्यैव तेन निषेधात् समुदायोत्तरविभक्त्या पदत्वसिद्धेः ।

न च परमलोम्निचरः परमवाचिशयः दधिसेचिशय इत्यादौ वृत्तिघटकार्थवदिकारनिरूपितपूर्वत्वादुत्तरपदत्वाभावान्नलोपकुत्वाद्यापत्तिरिति वाच्यम्, वृत्तिघटकार्थवन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयभिन्नाव्यवहितपूर्वत्वाभाववत्स्वरूपस्य द्वितीयसंबन्धस्य निक्षेपेणादोषात् ।

न च परमदण्डिबहुपाचक इत्यत्र पाचकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयबहुच्भिन्नोदासीनाव्यवहितपूर्वत्वाभाववत्त्वेनोत्तरपदत्वात्परमदण्डिनो नलोपानापत्तिरिति वाच्यम् परत्वावच्छिन्नविधेयताया ग्रहणेनादोषात् ।

न च दण्डीयतीत्यत्र नलोपानापत्तिः । नः क्ये इति पदत्वेन निर्वाहात् न च राजकाम्यतीत्यत्र दोष इति वाच्यम् स्ववृत्तित्व स्वघटकेतरवृत्तित्वोभयसंबन्धेन स्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयभिन्नाव्यवहितपूर्वत्वाभाववत्त्वमेवोत्तरपदत्वमिति स्वीकारेणादोषात् ।

राजकाम्यतीत्यत्र काम्यनिष्ठविधेयतानिरूपितोद्देश्यताया राजवृत्ति-

त्वेऽपि न स्वघटकेतरवृत्तित्वमिति उद्देश्यताया स्वविशिष्टत्वाभावः । इति स्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयभिन्नकाम्यजव्यवहितपूर्वत्वस्यैव सत्त्वेन उत्तरपदत्वाभावान्नलोपसिद्धिः । दण्डीयतीत्यत्रापि प्रत्ययलक्षणेन सिद्धे नःक्ये इत्यस्य नियमार्थत्वं तेन गव्यतीत्यत्र न वलोपः । पूर्वदण्डिबहुपाचक इत्यत्रोत्तरपदत्वेनाभिमतं पूर्वदण्डिन्निति तद्विशिष्टोद्देश्यताया अभावात् बहुचः स्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयभिन्नत्वेन तदव्यवहितपूर्वत्वस्यैव सत्त्वान्नोत्तरपदत्वमिति नलोपसिद्धिः । परमलोम्निचर इत्यत्र इकारनिरूपितोद्देश्यताया लोमवृत्तित्वेन तद्घटकेतरपरमवृत्तित्वेन च स्ववैशिष्ट्यमस्तीति तन्निरूपितविधेयताश्रयङिभिन्नाव्यवहितपूर्वत्वाभाववत्त्वेनोत्तरपदत्वान्नलोपाभावसिद्धिः । उद्देश्यता चापर्याप्त्या गृह्यते ।

एवं च कार्यित्वनिवेशः मध्यमपदत्वानाक्रान्तत्वविशेषणं च मास्तु माषकुम्भवापेनेत्यत्र तादृशविधेयताश्रयभिन्नवापाव्यवहितपूर्वत्वेन पूर्वदण्डिप्रिय इत्यत्र तादृशविधेयताश्रयभिन्नप्रियाव्यवहितपूर्वत्वेन च उत्तरपदत्वाभावादेव पदत्वसिद्धेः ।

नन्वेवं मधव इत्यत्र उद्देश्यताया मधुवृत्तित्वेऽपि स्वघटकेतरवृत्तित्वाभावेन स्वविशिष्टत्वाभावात्तन्निरूपितविधेयताश्रयभिन्नजसव्यहितपूर्वत्वस्यैव सत्त्वेनोत्तरपदत्वाभावात्प्रत्ययलक्षणेन पदत्वापत्त्या पूर्वरूपापत्तिः ।

अथोद्देश्यताया मधुशब्दघटकेतराम्वृत्तित्वात् स्ववैशिष्ट्यमस्तीच्यते तर्हि राजकाम्यतीत्यत्रापि उद्देश्यताया अम्वृत्तित्वेन स्ववैशिष्ट्यात् उत्तरपदत्वापत्त्या नलोपानापत्तिरिति चेन्न—

उत्तरपदत्वेनाभिमतवृत्तिसुप्त्वानवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयभिन्नाव्यवहितपूर्वत्वाभाववत्त्वरूपस्यैवोत्तरपदत्वस्य स्वीकारेणादोषात् परमलोम्निचर इत्यत्र सुप्त्वानवच्छिन्नोद्देश्यता इति तन्निरूपितविधेयताश्रयभिन्नाव्यवहितपूर्वत्वाभाववत्त्वसत्त्वेनोत्तरपदत्वम् राजकाम्यतीत्यत्र च काम्यनिष्ठविधेयतानिरूपितोद्देश्यतायाः सुप्त्वानवच्छिन्नत्वाभावेन न दोषः मधव इत्यत्र च सुप्त्वानवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयजसभिन्नघटादिनिरूपितपूर्वत्वाभाववत्त्वेन तत्त्वान्निषेधसिद्धिः राजेत्यादौ निषेधापत्तिस्तु न लुक एव तेन प्रत्ययलक्षणनिषेधात् ।

एवं च कार्यित्वनिवेशः मध्यमपदत्वानाक्रान्तत्वविशेषणं चावश्यकमिति चेदत्रोच्यते—

एवमुत्तरपदत्वस्वीकारे बहुदण्डिका बहुचर्मिकेत्यादौ सुप्त्वानवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयकब्भिन्नोदासीनाव्यवहितपूर्वत्वाभावसत्त्वादुत्तर-

पदत्वेन पदत्वाभावान्नलोपानापत्तिः।

अथ विधेयता अवयवत्वानवच्छिन्ना गृह्यत इति न दोषस्तदा पञ्चगवमित्यत्र वलोपापत्तिः यदि च बहुदण्डिकेत्यत्र स्वादिष्विति पदत्वान्नलोपसिद्धिरित्युच्यते तदा बहुदण्डिन्नित्यस्य प्रातिपदिकत्वाभावादेव नलोपो न स्यात् कपः समासान्तत्वेन तद्विशिष्टस्यैव प्रातिपदिकत्वात्।

न च प्रातिपदिकान्तस्य सतः पदान्तस्य नस्य लोप इत्यर्थान्न दोष इति वाच्यम् पचेरन् यजेरन् ययोर्व्यापारयोः पचेरन्यजेरानावित्यत्र नलोपापत्तेरिति चेदत्र केचिद्—

वृत्तिविशिष्टत्वमुत्तरपदत्वं स्वघटकत्व स्वोत्तरभसंज्ञाप्रयोजकप्रत्ययभिन्न प्रत्ययनिरूपितपूर्वत्वाभाववत्त्वोभयसंबन्धेनेति बहुदण्डिकेत्यत्र न दोष इति तन्न—

परमलिह्वेत्यत्र वनिपो भसंज्ञाप्रयोजकत्वाभावेन पदत्वापत्त्या ढत्वापत्तेः।

येऽपि मघव इत्यादिसिद्ध्यर्थं स्वोत्तराजादिप्रत्ययभिन्नप्रत्ययनिरूपितपूर्वत्वाभाववत्त्वमित्यूचुस्तेऽपि परमलिह्वेत्यस्यासिद्ध्यैव हेयाः।

केचित्तु वृत्तिविशिष्टत्वमुत्तरपदत्वं वै० स्वघटकत्व स्वविशिष्टपदनिरूपितान्यवहितपूर्वत्वाभाववत्त्वोभयसम्बन्धेन अत्र वै० स्वनिष्ठोद्देश्यता निरूपिताविधेयताश्रयभिन्नत्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वानवच्छिन्नाजादिप्रत्ययनिष्ठविधेयताश्रयभिन्नत्वसम्बन्धभ्यां पदं च शक्तमेव गृह्यते। प्रथमसम्बन्धनिवेशान्न मघव इत्यत्र दोषः। अजादिप्रत्ययेति निवेशाद्बहुदण्डिकेत्यत्र नलोपसिद्धिः। परलिह्वेत्यादौ सम्बधघटकद्वितीयसम्बन्धसत्त्वेऽपि उभयसम्बन्धेन तादृशविधेयताश्रयभिन्नोदासीनपदान्यवहितपूर्वत्वाभाववत्त्वेनादोष इति वदन्ति।

## अस्मत्तातचरणास्तु

अत्रेत्थं प्राचामाशयः—पूर्वोदण्डी प्रियो यस्येति त्रिपदे बहुव्रीहौ उत्तरपदस्य कार्यित्वस्यापि सत्त्वेन नलोपसिध्यर्थमुत्तरपदत्व इत्यस्याऽप्रवृत्तये उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणमित्यवश्यं वक्तव्यम्। तेनैव माषकुम्भवापेनेत्यादावपि कुम्भ इत्यत्र मध्यमपदत्वस्यैव सत्त्वेन दोषाऽभावे सिद्धे परिभाषायां कार्यित्वनिवेशो निष्फलः। मध्यमत्वं च समुदायविशिष्टत्वम् वैशिष्ट्यं वृत्तिघटकयत्किंचिदवधिकपूर्वत्व वृत्तिघटकयत्किंचिदवधिकपरत्वमित्युभयसम्बन्धेन।

नन्वेवं प्रत्यङन्यार्थमित्यत्रमध्यमत्वानाक्रान्तोत्तरपदत्वस्यैव सत्त्वेन निषेधाप्रवृत्तौ प्रत्ययलक्षणेन ङमुडागमापत्तिः पदत्वादिति चेन्न तत्र ङमुडागमस्येष्टत्वात्।

किंचात्रय इत्यत्रात्रिशब्दाड् ढकि बहुवचने लुकि प्रत्ययलक्षणेन पदान्तत्वादेङः पदान्तादति इति पूर्व्वरूपापत्तिवारणाय वृत्तिघटकार्थवन्निरूपितपूर्व्वत्वाभाववत्त्वमुत्तरपदत्वमित्युत्तरपदत्वपरिष्कारस्य सर्वैरवश्यवक्तव्यतया माषकुम्भवापेन

पूर्व्वदण्डिप्रिय इत्यादवुत्तरपदत्वाऽभावादेव परिभाषाऽप्रवृत्तौ कार्यित्वनिवेश-पर्य्यन्तानुधावनं निष्फलमेव ।

नचैवं परमलोम्निचर इत्यादौ वृत्तिघटकार्थवन्ङिनिरूपितपूर्व्वत्वेनोत्तरपदत्वाभावान्निषेधाऽप्रवृत्तौ प्रत्ययलक्षणेन लोमन्इत्यस्य पदत्वान्नलोपापत्तिरिति वाच्यम् । यद्वृत्त्यारम्भकस्य सुपः प्रत्ययलक्षणं चिकीर्षितंतद्वृत्तिघटकार्थवन्निरूपितपूर्वत्वाभाववत्त्वमुत्तरपदत्वमिति स्वीकारेणोक्तस्थले तथासत्त्वेन निषेधप्रवृत्तेः सुलभत्वात् ।

यत्तु परमलोम्निचर इत्यत्र लोमनित्यस्य उत्तरपदत्वसिद्धये वृत्तिघटकनिष्ठोद्देश्यतानिरूपिताविधेयताश्रयभिन्नवृत्तिघटकावधिकपूर्वत्वाभाववत्त्वमुत्तरपदत्वमिति परिष्कारेण न दोष इति तन्न,

परमदण्डिबहुपाचक इत्यत्र पाचकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयबहुज्भिन्नावधिकपूर्वत्वाभावादुत्तरपदत्वेन प्रत्ययलक्षणप्रतिषेधाद् दण्डिन्शब्दस्य पदत्वाऽभावेन नलोपापत्तेः ।

नचात्रावयवत्वानवच्छिन्नवृत्तिघटकनिष्ठोद्देश्यतानिरूपिताविधेयताश्रयभिन्नेतिविशेषणेन प्रकृते बहुचस्तथा विधेयतानाश्रयत्वेन तदवधिकपूर्वत्वस्य दण्डिन्शब्देऽसत्त्वेनोत्तरपदत्वाभावाददोष इति वाच्यम् । परमलोम्निचर इत्यादौ च ङेस्तथाविधेयताश्रयत्वेन तदवधिकपूर्वत्वेऽपि तद्भिन्नोदासीनपूर्वत्वस्य लोमन्छब्देऽभावेनोत्तरपदत्वाऽभावान्निषेधाप्रवृत्तौ प्रत्ययलक्षणेन लोपापत्तेस्तदवस्थत्वात्;

न च परत्वाऽवच्छिन्नविधेयतानाश्रयेति विशेषणदानेन परमदण्डिबहुपाचक इत्यत्र बहुचस्तथाऽसत्त्वेन तदवधिकपूर्वत्वाभावाऽभावेनोत्तरपदत्वाभावान्निषेधाप्रवृत्तौ न दोषः एवम्परमलोम्निचर इत्यत्रापि ङेस्तथाविधेयतानाश्रयत्वाऽभावेन तदवधिकपूर्वात्ववतो लोम्न उत्तरपदत्वस्य स्पष्टत्वेन दोषाऽभाव इति वाच्यम् । पूर्वदण्डीयतीत्यादौ क्यचः अवयवत्वाऽवच्छिन्नविधेयतानाश्रयत्वेन दण्डिन्शब्दस्योत्तरपदत्वात् उत्तरपदत्वे चेति निषेधान्नलोपानापत्तेः ।

न च नः क्ये इत्यस्योक्तोदाहरणे विधायकत्वेन तत्सिध्यतीतिवाच्यम् राजकाम्यतीत्यादौ निरुक्तोत्तरपदत्वसत्त्वेन नलोपानापत्तेः । किञ्चपदव्यवायेपीतितृतीयासप्तमीसमासयोः फलभेदवारणाय पदपदस्य पदत्वयोग्यपरत्वेन व्याख्यानस्यावश्यकत्वेन निषेधप्रवृत्तावपि माषकुम्भवापेनेत्यत्र पदव्यवायेऽपीति निषेधप्रवृत्त्या कार्यित्वनिवेशोऽनावश्यकः ।

न च तदभावेऽटतीत्यट् अट् च अश्च अडः परमाश्चासावडः परमाडः ततः आचारक्विपि क्विचि अतोलोप इत्यनेनाकारस्य लोपे तितुत्रेत्यनेनेड्निषेधे परमाट्तिरिति रूपमत्र ष्टुत्वनिषेधो भवति न पदान्तादित्यनेन उत्तरपदस्य कार्यित्वाऽभावात् । तदनिवेशे तु उत्तरपदत्व इत्यनेन निषेधात्प्रत्ययलक्षणाप्रवृत्तौ प-

दान्तत्वाऽभावेन न पदान्तादित्यस्याप्रवृत्तौ ष्टुत्वं स्यात् । तत्र परमाट्टिरित्यस्यै-वेष्टत्वात् अन्यथोत्तरपदत्व इत्यस्य सत्त्वे परमाट्टतिरिति तत्प्रत्याख्याने च परमाट्टिरिति आरम्भप्रत्याख्यानयोः फलभेदापत्तेः ।

तथापरमलिह्शब्दाद्ढुनिपि परमलिह्वेत्यत्रैतदारम्भे पदत्वाभावेन ढत्वाप्राप्त्यानारम्भे च यजादिस्वादिपरतः पूर्वस्य पदत्वनिषेधेन प्रकृते तथा विरहान्निषेधाप्रवृत्तौ पदत्वापत्त्या ढत्वे फलभेदः स्पष्ट एव तस्माद्य-जादिपदस्य धातुविहितप्रत्ययस्याप्युपलक्षणताया अवश्यं वक्तव्यतया प्रकृते क्तिजादिपरतः पदत्वाभावेन निषेधाप्रवृत्त्या ष्टुत्वे परमाट्टिरित्येवेति ।

एतेनानितेःक्विपि अन् तस्य अशब्देन समासे अनः तत आचारक्विपि लिटि अनाञ्चकारेत्यादौ ङमुडभावः फलं कार्यित्वनिवेशस्येति वदन्तः परास्ताः ।

आरम्भप्रत्याख्यानयोः फलभेदात् आरम्भे उत्तरपदस्य कार्यित्वाऽभावेन नि-षेधाप्राप्त्या प्रत्ययलक्षणेन पदत्वात् ङमुडागमः यजादिपदस्य धातुविहितप्र-त्ययस्याप्युपलक्षणत्वेन पदत्वनिषेधात् ङमुडागमाभाव इति फलभेदः स्पष्ट एव किंच कार्यित्वनिवेशे सन्नन्तान्नसनिष्यते इत्यत्र ङमुड् नैव स्यात् उत्तरपदस्य कार्य्यित्वस्यैव सत्त्वेन प्रत्ययलक्षणाप्रवृत्या अन्त इत्यस्य पदत्वाभावात् ।

किंच स्ववृत्तिसुप्त्वानवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयभिन्नाव्यवहि-तपूर्व्वत्वमुत्तरपदत्वमिति स्वीकर्त्तव्यम् तथा च राजकाम्यतीत्यादौ राजन्निष्ठो-द्देश्यतानिरूपितकाम्यनिष्ठविधेयतायाः सुप्त्ववच्छिन्नोद्देश्यतानिरूपितत्वेन तादृशविधेयताश्रयभिन्नो घटादिस्तदव्यवहितपूर्वत्वाभावेन राजन्शब्दस्यो-त्तरपदत्वाभावान्न दोष इति परमलोम्निचर इत्यत्र लोमनिष्ठसुप्त्वानवच्छि-न्नोद्देश्यतानिरूपितविधेयताश्रयभिन्नोङिस्तदव्यवहितपूर्वत्वेनोत्तरपदत्वान्न दोषः एवमत्रय इत्यत्रापि न दोष ॥

यद्वा वृत्तिघटकत्वेसति वृत्तिघटकचरमवर्णप्रागभावानधिकरणक्षणवृत्तित्व-मुत्तरपदत्वमेवं च कार्यित्वमध्यमपदत्वानाक्रान्तेतिविशेषणं न देयम् भाषकुम्भ-वापेन पूर्वदण्डप्रिय इत्यादौ दोषाभावात् अतएव मधव इत्यादौ प्रत्ययलक्षणा-भावादेङः पदान्तादतीति पूर्व्वरूपन्नेति वदन्ति ॥

## प्रतिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।

प्रातिपदिकनिष्ठशक्तिनिरूपकोऽर्थः । प्रातिपदिकार्थः तत्र घटादिशब्दानां व्य-क्तौ शक्तिस्वीकारे आनन्त्यव्यभिचारापत्तिरिति जातावेव शक्तिः । व्यक्तौ लक्षणा व्रीहीनवहन्तीत्यादौ जातेरमूर्ततया अवहननान्वयायोगात्, स्वाश्रयकर्मकत्वस-म्बन्धेन जातेरेववान्वयोऽवहनने इति मीमांसकाः ।

नित्यो घट इति प्रयोगवारणाय व्यक्तावपि शक्तिरेवेति तार्किकाः अन्यथा नित्यत्वस्य पदार्थे घटत्वेऽबाधात्स प्रयोगो दुर्वारः स्यात् ।

वागादिशब्दे टाबादीनामभावेऽपि लिङ्गप्रतीत्या तत्रापि प्रातिपदिकस्य शक्तिः टाबादीनां तु द्योतकत्वमिति प्राचीनाः ।

दधि पश्यतीत्यादौ विभक्त्यभावेऽपि कारकसंख्ययोः प्रतीत्या तत्रापि प्रातिपदिकस्य शक्तिरिति शाब्दिका महाभाष्यकारादयः ।

एवं च—

जातिर्द्रव्यं च लिङ्गं च संख्याकारकमेव च ।
अमी पञ्चैव नामार्थास्त्रयः केषांचिदग्रिमाः ॥

इति कारिकापि संगच्छते ।

अत एव लिङ्गस्य संख्यायां कारकस्य च व्यक्तौ विशेषणत्वम् द्योत्यार्थस्य विशेषणताया एवौचित्यात् प्रत्ययवाच्यत्वे तु प्रकृतिप्रत्ययौ सहार्थमिति न्यायात्प्राधान्यमेव स्यात् टाप्सुबाद्यातिरक्तत्वेन संकोचे तु संकोच एव दोष इति विभावयन्तु ।

प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च तान्येवेति विग्रहे मयूरव्यंसकादित्वान्मात्रशब्देन समासे प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं तस्मिन् एकत्रान्वयित्वरूपसाहित्ये एव द्वन्द्वविधानमूलकेन द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं प्रत्येकमभिसम्बध्यते इति वचनेन मात्रशब्दार्थे द्वन्द्वघटकपदार्थानां सर्वेषामन्वयः । मात्रशब्दार्थश्च अन्ययोगव्यवच्छेदः तत्र प्रातिपदिकार्थादेः प्रतियोगित्वसम्बन्धेन भेदेऽन्वयः तस्य स्वरूपेणाश्रये तस्य च प्रतियोगित्वसम्बन्धेन योगपदार्थे सम्बन्धे स च प्रकृते विषयतानिरूपकबोधजनकत्वरूपः ग्राह्यः तस्य च प्रतियोगित्वसंबन्धेनाभावे तस्य च स्वरूपेण प्रातिपदिकेऽन्वयस्तथाच प्रातिपदिकार्थत्रोधकं प्रातिकार्थप्रतियोगिकभेदविशिष्टनिष्ठविषयतानिरूपकबोधकत्वाभावविशिष्टं यत्प्रातिपदिकं तस्मात्प्रथमा इत्यादिरर्थः ।

अत्रेदमवधेयम् मात्रशब्दस्य अन्ययोगव्यवच्छेदे शक्तिस्वीकारे सर्वत्र भेदाश्रयसम्बन्धस्यैव सत्वेन तदभावरूपशक्यार्थाप्रसिद्धिरिति अन्ययोगे व्यवच्छेदे च खण्डशः शक्तिः स्वीकार्येति ।

नचोक्तार्थस्वीकारे घटा इत्यादौ प्रथमा न स्यात् तद्घटभेदवद्घटान्तरबोधकत्वस्यैव घटशब्दे सत्त्वादिति वाच्यम् प्रातिपदिकार्थतावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्य ग्रहणेनादोषात् ।

न चैवं प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्या प्रमेयशब्दात्प्रथमानापत्तिः, अप्रसिद्धप्रतियोगिकाभावस्य वैयाकरणैः स्वीकृततयाऽदोषात् ।

वस्तुतः सर्वत्राऽप्रसिद्धप्रतियोगिकाभाव एव अत्र भूतले घटोनास्तीत्यस्य

एतद्भूतलवृत्तिघटकर्तृकसत्ताभाव इति बोधात् एतद्भूतलवृत्तिघटकर्तृसत्त्वस्यासिद्धत्वेनाप्रसिद्धप्रतियोगिकत्वादिति ।

अन्ये तु स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यत्व स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयत्वोभयसम्बन्धेन प्रातिपदिकविशिष्टनिरवच्छिन्नविषयताप्रतियोगिकभेदवन्निरवच्छिन्नविषयत्वाप्रयोजकात्प्रथमेत्यर्थात् प्रमेयत्वनिष्ठनिरवच्छिन्नविषयताप्रतियोगिकभेदो घटत्वनिष्ठविषयतायां वर्तते तादृशनिरवच्छिन्नविषयत्वाप्रयोजकात्प्रमेयशब्दात्प्रथमासिद्धिः प्रमेयवानित्यादौ तु प्रमेयनिष्ठविषयतायां सम्बन्धद्वयसत्त्वेऽपि निरवच्छिन्नविषयत्वविरहात्प्रथमासिद्धिरित्याहुः।

परे तु स्वार्थविषयकबोधजनकत्व स्वाभाववत्त्वसम्बन्धाभ्यां प्रातिपदिकविशिष्टात्प्रातिपदिकात्प्रथमेत्यर्थं प्रतियोगिता च स्वार्थप्रतियोगिकभेदवद्विषयकबोधनिष्ठजन्यतानिरूपितजनकत्वसम्बन्धावच्छिन्ना ग्राह्या । प्रमेयादेरुक्तसम्बन्धस्याप्रसिद्धत्वेऽपि अन्यत्र तादृशसम्बन्धस्य प्रसिद्धतया तत्सम्बन्धावच्छिन्नाभावमादाय प्रमेयशब्दे प्रथमासिद्धिरिति वदन्ति ।

अथ वीरः पुरुष इत्यत्र विशेष्यविशेषणभावस्याधिकस्य भानात्कथं प्रथमा इति शङ्कायां तस्य वाक्यार्थत्वेन समाधाय तिङ्कृत्तद्धितसमासैरभिहितेप्रथमेति प्रकारान्तरेणापि समाधाय वृत्त इत्यत्राध्याहृतास्तिक्रियायाः सत्त्वेन दोषाभावेऽपि प्रासाद आस्त इत्यत्र प्रथमाप्राप्तिमुद्भाव्य तिङ्समानाधिकरणे प्रथमेति समाहितं भाष्ये ।

तत इदमपि सूत्रं क्रियायोग एव प्रवर्तत इति लभ्यते इति शेखरकृत् ।

तस्य यदि क्रियानिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकात्प्रथमेत्यर्थस्तदा राहोः शिर इत्यत्र राहुशिरसोरैक्येन राहुपदादपि प्रथमा स्यादथ क्रियानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारतेत्यादिरर्थस्तदा घटोऽस्तीत्यत्रापि प्रथमा न स्यात् क्रियानिष्ठविशेष्यतानिरूपितसाक्षात्प्रकारताया आश्रये सत्त्वेन घटेऽसत्त्वादिति चेन्न—

क्रियानिष्ठविशेष्यतानिरूपिताधेयत्वसम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूताश्रयत्वावच्छिन्नविशेष्यतानिरूपितसाक्षात्प्रकारताप्रयोजकात्प्रथमेत्यर्थान्न दोषः नीलोघट इत्यादावपि धर्मिपरस्य नीलस्यापि क्रियायामन्वयः प्रधानान्वयलाभाय इति तत्रापि प्रथमासिद्धिरिति एतन्मूलकमेव सर्वाणि कारकाणि क्रियामन्वियन्तीति नियम इति वदन्ति ।

केचित्तु क्रियानिष्ठविशेष्यतानिरूपिताधेयत्वसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणप्रकारताप्रयोजकात्प्रथमेत्यर्थान्नीलोघटोऽस्तीत्यादौ नीलादेरपि प्रकारतासामानाधिकरण्यान्न दोषः प्रकारतायां संसर्गानवच्छिन्नत्वस्यापि निवेशान्न राहोः शिर इत्यादौ राहुशब्दात्प्रथमापत्तिरिति वदन्ति ।

परे तु क्रियानिष्ठविशेष्यतानिरूपिताधेयत्वसम्बन्धावच्छिन्नप्रकारतासमानाधिकरणविशेष्यतया साक्षात्परम्परया वा संसर्गानवच्छिन्नप्रकारताप्रयोजकात्प्रथमेत्यर्थान्नीलो घटोस्तीत्यादौ आश्रयत्वावच्छिन्नप्रकारतासमानाधिकरणाश्रयनिष्ठविशेष्यतया परम्परया संसर्गानवच्छिन्ना प्रकारता नीलेऽस्तीति प्रथमासिद्धिरिति प्राहुः।

ननु प्रातिपदिकार्थत्वादेव लिङ्गेऽपि प्रथमासिद्धौ लिङ्गग्रहणं व्यर्थमिति चेन्न—तत्सामर्थ्येन पारिभाषिकस्य नियतोपस्थितिकत्वरूपस्य प्रातिपदिकार्थत्वस्य प्रकृते ग्रहणेन तटशब्दे प्रथमार्थ लिङ्गग्रहणस्यावश्यकत्वात्।

नियतोपस्थितिक इति। निपूर्वकयमधातोर्व्यापकत्वमर्थः कर्तरि क्तस्याश्रयोर्थः ततश्च नियतेत्यस्य व्यापकताश्रयीभूतेत्यर्थः व्यपकतायाश्च निरूपकांशे नित्यसाकाङ्क्षतया प्रातिपदिकनिष्ठव्याप्यतानिरूपता सा ततश्च प्रातिपदिकनिष्ठव्याप्यता निरूपिता या व्यापकता तद्वती योपस्थितिस्तद्विषयीभूतोऽर्थः प्रातिपदिकार्थ इति तदाह—यस्मिन् प्रातिपदिके इति

ननूपस्थितेः स्मरणरूपज्ञानत्वेन तस्याः समवायेनात्मनि विद्यमानत्वात् प्रातिपदिकस्य च शब्दरूपत्वेनाकाशे समवायेन सत्त्वात् तयोः समानाधिकरण्यस्यैवाभावेन कुतो व्याप्यव्यापकभाव इति चेदत्रोच्यते—

स्वजन्यश्रावणप्रत्यक्षसमवायित्वरूपस्य व्याप्यतावच्छेदकसम्बन्धस्य स्वीकारः। ततश्च विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणतया प्रतिपदिकजन्यो यः श्रावणप्रत्यक्षस्तस्य समवायी आत्मा तत्त्वसम्बन्धेन प्रातिपदिकस्याप्यात्मनि सत्त्वेन न तयोर्व्याप्यव्यापकभावस्य हानिः।

न च तेन सम्बन्धेन प्रातिपदिकस्य सत्त्वेऽपि यत्र शक्तिज्ञानाभावादुपस्थितिर्न जाता तत्र समवायेनोपस्थितेरसत्त्वेन व्यापकत्वं न स्यादिति वाच्यम्, स्वनिष्ठशक्तिज्ञानसमवायित्वस्यापि व्याप्यतावच्छेदकसम्बन्धस्य स्वीकारेणादोषात्।

नचैवमपि पूर्वोक्तसम्बन्धद्वयेन प्रातिपदिकस्य सत्त्वेऽपि उपस्थितिकाले एव मूर्च्छादिना यत्रोपस्थितिर्न जाता तत्रोपस्थितेरसत्त्वेन व्यापकतानापत्तिरिति वाच्यम् स्वजन्योपस्थितिसामग्रीमत्त्वरूपस्यैकस्यैव व्याप्यताच्छेदकसम्बन्धस्य स्वीकारेणादोषात्। तथा हि उपस्थितौ शक्तिज्ञानादेरिव मूर्च्छाऽभावस्यापि कारणत्वेन तत्र च मूर्च्छाऽभावस्यासत्त्वेन कारणकलापरूपसामग्रीमत्त्वसम्बन्धेन प्रातिपदिकस्याप्यभावान्नोपस्थितौ व्यापकत्वहानिः। सामग्रीमत्ता च समवायस्वरूपान्यतरसम्बन्धेन शक्तिज्ञानादयः समवायेन, मूर्छाभावश्च स्वरूपेणात्मनि वर्तते इति यावत्। व्यापकतावच्छेदकसम्बन्धश्च समवाय एव।

ननु घटशब्दश्रवणमात्रेणोद्बोधकान्तरप्रयोज्या यत्र पटस्याप्युपस्थितिस्तत्र

घटःपटश्चेति समूहालम्बनोपस्थितीयविषयताश्रयत्वस्य पटपदार्थेऽप्यबाधात् पटस्यापि घटरूपप्रातिपदिकार्थत्वापत्तिः घटरूपप्रातिपदिकश्रवणेन सर्वत्र घटविषयकोपस्थितेरेव सत्त्वेन पटविषयकोपस्थितेश्च सर्वत्राभावेऽपि तादृशसमूहालम्बनोपस्थितौ घटरूपप्रातिपदिकनिष्ठव्याप्यतानिरूपितव्यापकत्वं घटविषयकत्वेनाक्षतमेवेति चेदत्रोच्यते—

प्रातिपदिकनिष्ठव्याप्यतानिरूपिता योपस्थितिनिष्ठा व्यापकता तादृशव्यापकतावच्छेदकीभूता या विषयता तदाश्रयीभूतोऽर्थः प्रातिपदिकार्थ इति स्वीकारेणादोषात् । तथा हि घटरूपप्रातिपदिकस्य श्रवणेन यत्र यत्र घटादिविषयकोपस्थितिस्तत्र तत्र सर्वत्रैव तादृशोपस्थितौ विशेष्यताख्यघटविषयता प्रकारताख्यघटत्वविषयता संसर्गताख्यसमवायविषयतानां तथा विशेष्यताख्यप्रकारताख्यसंसर्गताख्यपुंस्त्वपुंस्त्ववत्वसमवायविषयतानां निरूपकत्वसम्बन्धेन सत्त्वात् व्यापकतायाश्च स्वरूपसम्बन्धेन सत्त्वादन्यूनानतिरिक्तवृत्तित्वेन तादृशविषयतानां तादृशोपस्थितिनिष्ठव्यापकतावच्छेदकत्वेऽपि पटादिविषयतायांश्च न्यूनवृत्तित्वेन तादृशव्यापकतावच्छेदकत्वस्य वक्तुमशक्यतया तादृशव्यापकतावच्छेदकीभूतविषयताश्रयत्वस्य पटादावभावेन न तस्य घटरूपप्रातिपदिकार्थत्वापत्तिरिति ।

नन्वेवमपि घटत्वावच्छिन्ने घटपदस्य शक्तिस्वीकारेऽपि तत्रत्यं घटमानयेत्याद्युक्तौ श्रोतुस्तत्रत्यघटस्यैवोपस्थित्या सकलघटविषयकोपस्थितेरभावेन यद्घटविषयकोपस्थितिर्न जाता तद्घटविषयताया उपस्थितघटविषयतायाश्च भेदात् उपस्थितीयघटादिविषयताया निरवच्छिन्नत्वेन निवच्छिन्नविषयतायाश्चाश्रयभेदेन भेदस्वीकारात् तद्घटस्य चैतद्घटापेक्षया भिन्नत्वेन तदीयविषयतयोरपि परस्परं भिन्नत्वेन घटत्वस्य जातिरूपत्वेनैकत्वात् घटत्वविषयतयोरभेदेऽपि अनुपस्थितघटविषयतायास्तादृशोपस्थितौ निरूपकत्वसम्बन्धेनासत्त्वात् न्यूनवृत्तित्वेन तद्घटविषयताया व्यापकतावच्छेदकत्वाभावेन सकलघटादीनां घटादिरूपप्रातिपदिकार्थत्वानापत्तिरिति चेन्न—

प्रातिपदिकनिष्ठव्याप्यतानिरूपिता योपस्थितिनिष्ठा व्यापकता तद्वच्छेदकीभूतविषयताविशिष्टोऽर्थः प्रातिपदिकार्थः इत्यर्थेनादोषात् वै० स्वाश्रयत्व स्वाश्रयाश्रयत्व एतदन्यतरसम्बन्धेन एवं च स्वं विषयता तदाश्रयत्वसम्बन्धेन तादृशविषयतावैशिष्ट्यं घटत्वादौ स्वाश्रयाश्रयत्वसम्बन्धेन घटादौ चेति सर्वेषां प्रातिपदिकार्थत्वं तत्तद्घटविषयतानामाश्रयभेदेन भिन्नत्वेऽपि घटत्वनिष्ठतद्विषयताया ऐक्यात् घटत्वविषयतायास्तादृशव्यापकतावच्छेदकत्वे बाधकाभावात् परं चायं दोषो मीमांसकमते तथा हि तन्मते उपस्थित्यविषयीभूतघटादेः शाब्दे भानं नास्तीति नियमो नास्ति यस्मिन् घटे बालेन घटपदस्य शक्ति-

गृहीता तद्घटस्यैवोपस्थितावपि प्रकारणादिनान्यघटस्य शाब्दे भानाङ्गीकारात् अत एव तन्नये प्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारतासम्बन्धेनोपस्थितेः कारणत्वम्, घटत्वस्यैक्येनोपस्थितेस्तत्र तेन सम्बन्धेन सत्त्वे बाधकाभावेन न दोषः । नैयायिकानां तु नये सामान्यलक्षणाप्रत्यासत्त्या घटत्वेन सकलघटविषयकोपस्थितेः स्वीकारेण सकलघटादिविषयतानां तादृशव्यापकतावच्छेदकत्वे बाधकाभावेन दोषलेशानवकाशः ।

नचैवमपि घट इत्याकारकोपस्थितौ पुंस्त्वत्वविषयतायाः निरूपकत्वसम्बन्धेन सत्त्वेऽपि पटइत्याकारकोपस्थितावपि पुंस्त्वत्वविषयतायाः सत्त्वेन तादृशविषयतानां चैक्यात् पुंस्त्वत्वस्य घटरूपप्रातिपदिकार्थत्वानापत्तिः घट इत्याकारकोपस्थितिनिष्ठव्यापकतायाः स्वरूपसम्बन्धेन पटइत्याकारकोपस्थितावसत्त्वेऽपि पुंस्त्वत्वविषयतायाः तत्रापि सत्त्वेनातिप्रसक्ततया तादृशव्यापकतावच्छेदकत्वाभावादिति. वाच्यम् अतिप्रसक्तधर्मे कार्यताकारणतावच्छेदकत्वाभावेऽपि व्यापकताव्याप्यतावच्छेदकत्वस्य सर्वैरेवाङ्गीकृतत्वेनातिप्रसक्तस्यापि पुंस्त्वत्वादेस्तादृशव्यापकतावच्छेकत्वे बाधकाभावेन दोषाभावात् ।

नन्वत्रोपस्थितिशब्देन स्मरणं शब्दबोधो वा नाद्यः तटादिशब्दे लिङ्गादावपि शक्तिसत्त्वेन सकललिङ्गविषयकस्मरणस्य सत्त्वात् सकललिङ्गविषयतानां तादृशव्यापकतावच्छेदकत्वेन लिङ्गस्यापि प्रादिपदिकार्थत्वापत्तेः । नान्त्यः हर्यादिशब्दे सकलवानरादिनिष्ठशाब्दबोधीयविषयतानां चालनीन्यायेन तत्रतत्राभावस्य सत्त्वात्तादृशव्यापकतावच्छेदकत्वाभावेन कस्यापि प्रातिपदिकार्थत्वानापत्तेः ।

न च प्रकरणादेःशक्तिसंकोचकतायां एव स्वीकारात् तटादिशब्दे तट इत्यादौ पुंस्त्वादेरुपस्थितावपि सकललिङ्गविषयकोपस्थितेरेवाभावेन कस्यापि लिङ्गविषयतायाश्चालनीन्यायेन व्यापकतावच्छेदकत्वाभावात् लिङ्गस्य न तादृशप्रातिपदिकार्थत्वापत्तिरिति वाच्यम् एवमपि हर्यादिपदे प्रकरणादिवशात्तत्तदर्थविषयकोपस्थितेः स्वीकारेऽपि सर्वत्र सकलार्थविषयकोपस्थितेरसत्त्वात् चालनीन्यायेन कस्या अपि विषयतायास्तादृशव्यापकतावच्छेकत्वाभावेन कस्यापि प्रातिपदिकार्थत्वानापत्तेर्दुरुद्धरत्वादिति चेदत्रोच्यते इत्यरुचेराह-शेखरे परेत्वित्यादिनेति केचिद् ।

गुरवस्तु प्राचीनमतमेव परिष्कुर्वन्ति तथा हि प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयीभूतोऽर्थः प्रातिपदिकार्थः वै० स्वप्रयोज्यत्व स्वज्ञानाधीनोपस्थिति प्रयोज्यशाब्दबोधीयविषयतात्वावच्छिन्नव्यापकत्वैतदुभयसम्बन्धेन । ततश्च तटादिशब्दे उपस्थितीयतटत्वतटसमवायविषयतानां शाब्दबोधीययावद्विषयताव्यापकत्वेऽपि उपस्थितीयलिङ्गविषयतानां सर्वासामपि चालनीन्यायेन तत्र

तत्राभावेन शाब्दबोधीययावद्विषयताव्यापकत्वाभावेन लिङ्गस्य न प्रातिपदिकार्थत्वम् स्वप्रयोज्यत्वरूपसम्बन्धस्तु क्रियाविनिर्मुक्तवाक्यार्थस्याभावेन सर्वत्र क्रियाविषयतायास्तादृशशाब्दबोधीययावद्विषताव्यापकत्वेन क्रियायाः प्रातिपदिकार्थत्ववारणाय ।

नचैतादृशार्थस्वीकारे हर्यादिशब्दे सकलार्थविषयकोपस्थितीयविषयतानां चालनीन्यायेन यावच्छाब्दबोधीयविषयताव्यापकत्वाभावेन कस्यापि प्रातिपदिकार्थत्वं न स्यादिति वाच्यम् स्वप्रयोज्यत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयप्रवृत्तिनिमित्तविषयताव्यापकत्व एतदुभयसम्बन्धेन तादृशप्रातिपदिकनिष्ठशक्तिवैशिष्ट्यस्योपस्थितीयविषयतायां स्वीकारेणादोषात् । तथा हि तट शब्दविषये शाब्दबोधीया या प्रवृत्तिनिमित्तभूततटत्वनिष्ठा विषयता तादृशविषयताव्यापकत्वस्य तटसमवायविषयतयोः सत्त्वेऽपि लिङ्गविषयतानां चालनीन्यायेन तत्र तत्राभावस्य सत्त्वान्न लिङ्गस्य प्रातिपदिकार्थत्वम् हर्यादिपदेतु प्रवृत्तिनिमित्तस्य नानात्वेन तत्तच्छाब्दबोधीयतत्तत्प्रवृत्तिनिमित्तविषयताव्यापकत्वस्य सूर्यादिनिष्ठविषयतायां निर्बाधतया दोषाभावः ।

परंत्वत्र वारिशब्दे नपुंसकत्वस्य घनरसशब्दे पुंस्त्वस्य च प्रातिपदिकार्थत्वानापत्तिर्दोषः ।

तथाहि वारिशब्दजन्यबोधस्य घनरसशब्दजन्यबोधस्य च परस्परं भिन्नत्वेऽपि उभयपदजन्यबोधीयजलत्वरूपप्रवृत्तिनिमित्तविषयतयोरैक्येन चालनीन्यायात् वारिशब्दजन्यबोधे पुंस्त्वविषयताया घनरसशब्दजन्यबोधे नपुंसकत्वविषयतायाश्चाभावेन तादृशजलत्वरूपप्रवृत्तिनिमित्तविषयताव्यापकत्वाभावात् तद्वारणाय—

प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् वै० स्वप्रयोज्यत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वोभयसंबधेन । एवं चोभयपदजन्यबोधयोर्भिन्नत्वेन वारिशब्दनिष्ठशक्तिज्ञानाधीनोपस्थितिविषयतायां शक्तिज्ञानाधीनोपस्थितिप्रयोज्ये 'वारि' इत्याकारकशाब्दबोधे निरूपकत्वसम्बन्धेनायं वारिशब्दजन्यबोधो नपुंसकत्वविषयताको नेत्याकारकभेदस्य वक्तुमशक्यत्वेन नपुंसकत्वविषयतायास्तातादृशभेदप्रतियोगितानवच्छेदकत्वेऽन तस्य प्रातिपदिकार्थत्वम् । तटशब्दे च तन्निष्ठशक्तिज्ञानोपस्थितिप्रयोज्ये 'तट' इत्याकारकबोधे तटविषयताको न तटत्वविषयताको नेत्यादि भेदस्याभावेऽपि स्त्रीत्वविषयताको नेति भेदस्य एवं तटी इत्याकारकबोधे तटविषयताको नेत्यादेर्भेदस्याभावेऽपि पुंस्त्वविषयताको नेत्यादि भेदस्य सत्त्वेन चालनीन्यायात् सकललिङ्गविषयतानां भेदप्रतियोगिताच्छेदकत्वेन लिङ्गस्य न प्रातिपदिकार्थत्वं

तटादेश्च तत्सिद्धम् ।

स्वप्रयोज्यत्वरूपसम्बन्धफलं तु सर्वत्र क्रियारूपार्थस्य तत्त्ववारणम् ।

नचैवमपि घटपदजन्ये 'घट' इत्यादि बोधेऽयंबोधो घटविषयताकशाब्दबोधो नेत्याकारकभेदस्याभावेऽपि अयं बोधो घटविषयताकानुमितिर्न घटविषयताकप्रत्यक्षं नेत्यादिभेदस्य वक्तुं शक्यत्वेन सर्वविषयतानां भेदीयप्रतियोगितावच्छेदकतया घटादिशब्दे कस्यापि प्रातिपदिकार्थत्वानापत्तिः किं च वारिशब्दजन्यबोधे नपुंसकत्वविषयताको नेत्याकारकभेदस्याभावेऽपि घनरसशब्दजन्यबोधीयनपुंसकत्वविषयताको नेत्याकारकभेदस्य घनरसशब्दजन्यबोधे वारिशब्दजन्यशाब्दबोधीयपुंस्त्वविषयताको नेति भेदस्य च सत्त्वेन वारिशब्दादौ नपुंसकत्वादीनां प्रातिपदिकार्थत्वानापत्तिः ।

एतेन वारिशब्दादौ दोषवारणाय प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् वै० स्वप्रयोज्यत्व स्वविशिष्टाधिकरणतावन्निष्ठात्यन्ताभावाप्रतियोगित्वोभयसम्बन्धेन अत्र वै० स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दनिष्ठत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयविषयतात्वाच्छिन्नाधेयतानिरूपितत्वोभयसंबधेन । एवं च वारिशब्दजन्यबोधे निरूपकत्वसम्बन्धेन नपुंसकत्वविषयता नास्तीत्याकारकाभावस्याभावेन न दोष इत्यपास्तम् ।

वारिशब्दजन्यबोधे तादृशाभावस्याभावेऽपि अनुमितीयनपुंसकत्वविषयता नास्तीतित्याकारकाभावस्य वक्तुं शक्यत्वात् किं च तटशब्दे तादृशाधिकरणताऽप्रसिद्ध्या लिङ्गस्यापि तत्त्वापत्तिरिति वाच्यम्

प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् । वै० स्वप्रयोज्यत्व स्वविशिष्टभेदप्रतियोगिताऽनवच्छेदकत्वोभयसंबधेन । अत्र वै० स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दनिष्ठत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिकत्वोभयसंबन्धेन इति परिष्कारेणादोषात्

तथा हि वारिशब्दजन्यबोधेऽयं बोधो नपुंसकत्वविषयताकानुमितिर्नेत्यादिभेदस्य सत्त्वेऽपि तादृशभेदस्य तादृशानुमितिप्रतियोगिकत्वेन स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिकत्वाभावेन धर्तुमशक्यतया नपुंसकत्वविषयताको नेत्यादि भेदस्य तादृशस्यापि तस्य भेदस्य वक्तुमशक्यत्वेन वारिशब्दादौ दोषाभावः ।

तटशब्दे च लिङ्गादिसाधारण्येन शक्तेरैक्यात् स्त्रीत्वादिविषयकबोधस्यापि स्वज्ञानाधीनोपस्थितिप्रयोज्ये 'तट' इत्यादि बोधे स्त्रीत्वविषयको नेत्यादिभेदस्य सत्त्वेन तादृशभेदस्य सम्बन्धद्वयेन स्वविशिष्टत्वात् चालनीन्यायेन सर्वलिङ्गविषयतानां तादृशभेदीयप्रतियोगितावच्छेदकत्वेन लिङ्गस्य न प्रातिपदिकार्थत्वम् ।

परन्त्वयं भेदस्तटशब्दादावेव प्रसिद्धः घटशब्दादौ तु 'घट' इत्यादिबोधे पटविषयताको नेत्यादिभेदस्य सत्त्वेऽपि तस्य स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिकत्वाभावेन स्वविशिष्टत्वाभावात् घटविषयताको नेत्यादिभेदस्य स्वविशिष्टत्वेऽपि तस्य भेदस्यैव वक्तुमशक्यत्वेन स्वविशिष्टभेदस्यैवाप्रसिद्ध्या घटशब्दे कस्यापि प्रातिपदकार्थत्वाप्रसक्तेरत:—

प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् स्वप्रयोज्यत्व स्वभाववत्त्वोभयसम्बन्धेन अभावीयप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टभेदप्रतियोगितावच्छेदकत्वरूपः । अत्र वैशिष्ट्यं स्वप्रयोज्यशाब्दबोधप्रतियोगिकत्व स्वप्रयोज्यशाब्दबोधानुयोगिकत्वोभयसंबधेन भेदस्य स्वविशिष्टस्य प्रसिद्धत्वात् तद्घटितसंबन्धस्यापि तत्रैव स्त्रीत्वादिविषयतायां निर्बाधत्वेन न दोषः तटादौ तु तादृशसम्बन्धेन स्त्रीत्वादिविषयकशक्तेरेव सत्त्वेन स्वभाववत्त्वाभावात् न लिङ्गस्य प्रातिपदिकार्थत्वम् ।

अत्रेदं बोध्यम्, पूर्वलक्षणे स्वविशिष्टभेदाप्रसिद्ध्या तदीयप्रतियोगितावच्छेदकत्वरूपसम्बन्धाप्रसिद्धौ अप्रसिद्धप्रतियोगिकाभावस्य नैयायिकैरस्वीकृतत्वेन तन्मते घटादावेव दोषः अप्रसिद्धप्रतियोगिकाभावस्वीकर्तृमते च तादृशाप्रसिद्धभेदीयप्रतियोगितावच्छेदकत्वप्रतियोगिकाभावस्य घटादिविषयतायां निर्बाधत्वेन घटादौ दोषाभावेऽपि तच्छब्दे दोषः ।

तथाहि घटपटादिनिरूपितायाः शक्तेस्तच्छब्दनिष्ठाया ऐक्यात् तच्छब्दजन्ये घट इत्याकारकबोधे पूर्वोक्तसम्बन्धद्वयेन स्वविशिष्टपटविषयताको नेत्यादिभेदस्य वक्तुं शक्यत्वेन सर्वासां विषयतानां तादृशभेदीयप्रतियोगितावच्छेदकतया कस्यापि प्रातिपदिकार्थत्वं न स्यात् नैयायिकनये च पूर्वलक्षणे घटादावेव दोषसत्त्वेन तद्वारणायोत्तरलक्षणेऽपि पूर्वोक्तरीत्या तच्छब्दे दोषः सकलघटपटादिविषयतायां चालनीन्यायेन स्वविशिष्टभेदप्रतियोगितावच्छेदकत्वरूपसम्बन्धस्यैव सत्त्वेन तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्वभाववत्त्वस्य वक्तुमशक्यत्वात् इति ।

तच्छब्दे दोषवरणायाप्रसिद्धप्रतियोगिताकाभावस्वीकर्तृनये—

प्रातिपदिकनिष्ठशक्तिज्ञानविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् वै० स्वप्रयोज्यत्व स्वविशिष्टभेदप्रतियोगितावच्छेदकवत्त्वोभयसंबन्धेन अत्र वै० स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठत्व स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिकत्वोभयसंबन्धेन ।

सकलसाधारणमते च वै० स्वप्रयोज्यत्व स्वभाववत्त्वोभयसंबन्धेन अभावीयप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टभेदप्रतियोगितावच्छेदकत्वरूपः । वै० स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठत्व स्वाधीनोपस्थितिप्रयो-

न्यशाब्दबोधप्रतियोगिकत्वोभयसंबन्धेन तच्छब्दे घटपटादिसकलार्थनिरूपितशक्तेरैक्येऽपि शक्तिज्ञानानां भेदः—

तथा हि घटत्वपटत्वादिशक्यतावच्छेदकनानात्वेऽपि शक्तेरैक्याय सकलघटत्वपटत्वादिवृत्तिबुद्धिस्थत्वरूपधर्मोपलक्षिततत्तद्धर्मावच्छिन्नवाचकं तत्पदमित्येकं शक्ति ज्ञानम् एतस्य च शाब्दबोधोपयोगित्वाभावेनाजागलस्तनवन्निष्फलत्वमेव बोध्यम् ।

घटत्वावच्छिन्नः पुंस्त्वावच्छिन्नश्च तत्पदवाच्य इति द्वितीयं घटइत्याकारकशाब्दोपयोगि तटत्वावच्छिन्नः स्त्रीत्वत्वावच्छिन्नश्च तत्पदवाच्य इति तृतीयं तटीत्याकारकशाब्दोपयोगि नपुंसकत्वत्वावच्छिन्नः तटत्वावच्छिन्नश्च तत्पदवाच्य इति चतुर्थं तटमित्याकारकशाब्दोपयोगि लिङ्गत्वोपलक्षिततत्तद्धर्मावच्छिन्नः तटत्वावच्छिन्नश्च तत्पदवाच्यः लिङ्गत्वोपलक्षिततत्तद्धर्मावच्छिन्नो घटत्वावच्छिन्नश्च तत्पदवाच्य इत्यादिज्ञानं लिङ्गविषयकशाब्दोपयोगि यत्र सामान्ये नपुंसकं भवति लिङ्गविषयकतत्तच्छाब्दोपयोगि तत्तज्ज्ञानंलिङ्गविषयक घट इत्यादि शाब्देऽपि कारणम् ।

न च घटत्वावच्छिन्नः पुंस्त्वत्वावच्छिन्नश्च तत्पदवाच्य इत्यादिज्ञानस्य लिङ्गविषयकघटइत्यादिज्ञानोत्पादनायावश्यमङ्गीकर्तव्यत्वेन तेनैवोपपत्तौ लिङ्गाविषयकज्ञानोपयोगिज्ञानस्यात्र ज्ञाने कारणतास्वीकारो व्यर्थ एव इति वाच्यम् ।

लिङ्गाविषयकघट इत्यादिज्ञानोत्पादनाय शाब्दोपयोगितादृशशक्तिज्ञानकार्यतावच्छेदकत्वस्य घटत्वावच्छिन्नविषयकत्वरूपलघुधर्मे एवाङ्गीकरणीयत्वेन लिङ्गाविषयकघटत्वाद्यवच्छिन्नविषयकत्वरूपगुरुधर्मस्य तादृशज्ञानीयकार्यतावच्छेदकत्वाभावेन तादृशलिङ्गविषयकज्ञानस्यापि घटत्वाद्यवच्छिन्नविषयकत्वेन प्रयोजनाभावेऽपि तादृशज्ञानबाधकत्वे बाधकाभावात् ।

एवं तटशब्दोऽपि तटत्वाच्छिन्नः पुंस्त्वत्वावच्छिन्नश्च तटपदवाच्य इति शक्तिज्ञानतटइत्याकारकशाब्दोपयोगितटत्वावच्छिन्नः स्त्रीत्वत्वावच्छिन्नश्च तटपदवाच्य इति ज्ञानं तटीतिशाब्दोपयोगि तटत्वावच्छिन्नो नपुंसकत्वत्वावच्छिन्नश्च तटपदवाच्य इति ज्ञानं तटमित्याकारकशाब्दोपयोगि लिङ्गत्वोपलक्षिततत्तद्धर्मावच्छिन्नस्तटत्वावच्छिन्नः तटपदवाच्य इति ज्ञानं लिङ्गाविषयकतटमिति ज्ञानोपयोगि इदमपि ज्ञानं पूर्वोक्तरीत्या लिङ्गविषयकतटस्तटीतटमित्यादिसकलज्ञाने कारणम् लिङ्गाविषयकतादृशज्ञानोपपत्तये तस्यावश्यमङ्गीकरणीयत्वात् तादृशज्ञानीयकार्यतावच्छेदकत्वस्य लघुधर्मे तटत्वावच्छिन्नविषयकत्वे एवाङ्गीकारेण तटस्तटीत्यादौ सर्वत्र तटत्वावछिन्न विषयकत्वस्य निर्बाधत्वात् ।

ततश्च तच्छब्दजन्ये 'घट'इत्यादिबोधे घटादिविषयताको नेति भेदो वक्तुमशक्यः तस्य घटत्वावच्छिन्नः पुंस्त्वत्वावच्छिन्नश्च तत्पदवाच्य इति ज्ञाना-

धीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठत्वेऽपि ताद्दशज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिकत्वाभावात् एवमेव तच्छब्दजन्यपटइतिबोधे घटविषयताको नेतिभेदोऽपि तच्छब्दजन्यघट इत्यादि बोधे घटविषयताको नेति भेदस्योक्तसम्बन्धद्वयेन ताद्दशशक्तिज्ञानविशिष्टत्वेऽपि तस्य वक्तुमशक्यत्वात् ।

न च तटशब्देऽपि शाब्दोपयोगि तत्तच्छक्तिज्ञानानां भिन्नत्वेन तट इति बोधे स्त्रीत्वविषयताको नेति भेदस्य तटीत्याकारकबोधे पुंस्त्वविषयताको नेत्यादि भेदस्य चोक्तसम्बन्धद्वयेन ताद्दशशक्तिज्ञानविशिष्टत्वाभावेन ताद्दशभेदस्यैवाप्रसिद्ध्या तद्घटितसम्बन्धस्याप्यप्रसिद्धत्वेन तटादेरेव प्रतिपदिकार्थत्वानापत्तिरिति वाच्यम् लिङ्गविषयकशाब्दोपयोगिताद्दशतटः तटीत्यादिसकलबोधे करणतया ताद्दशक्तिज्ञानविशिष्टभेदस्य तट इति बोधे स्त्रीत्वषियताको नेत्यादेः प्रसिद्धत्वेन तद्घटितसम्बन्धस्यापि ताद्दशलिङ्गविषयकशक्तिज्ञानमादाय स्त्रीत्वादिविषयतायां सुप्रसिद्धत्वेन दोषाभावात्

नन्वेवमपि ताद्दशज्ञानमादाय तस्य सम्बन्धस्य प्रसिद्धावपि लिङ्गविषयकशाब्दोपयोगितत्तज्ज्ञानमादाय तटशब्दे लिङ्गस्याप्रतिपादिकार्थत्वापत्तिः तत्तज्ज्ञानजन्ये तटइत्यादिबोधे स्त्रीत्वादिविषयताको नेतिभेदस्योक्तसम्बन्धद्वयेन तत्तज्ज्ञानविशिष्टतया चालनीन्यायेन सर्वलिङ्गविषयतानां ताद्दशभेदीयप्रतियोगितानवच्छेदकतया ताद्दशभेदीयप्रतियोगितावच्छेदकतया ताद्दशभेदीयप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वभाववत्त्वस्वप्रयोज्यत्वोभयसम्बन्धेन तत्तच्छक्तिज्ञानवैशिष्ट्यस्य तत्तद्लिङ्गविषयतायां सत्वादिति चेदत्रोच्यते ।

प्रातिपदिकनिष्ठशक्तिज्ञानविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् वै० स्वप्रयोज्यत्व स्वनिष्ठज्ञानाभाववत्त्वोभय संम्बन्धेन ज्ञानवैशिष्ट्यं ज्ञाने स्वीयजन्यताच्छेदकरूपावच्छिन्नजन्यतानिरूपितजनकताश्रयत्वस्वीयजन्यतानवच्छेदकरूपावच्छिन्नजन्यतानिरूपिजनकतानाश्रयत्व स्वविषयशक्तिविषगकत्व एतत्त्रितयसम्बम्धेन अभावीयप्रतियोगितावच्छेदकसम्बन्धश्च स्वविशिष्टभेदप्रतियोगितावच्छेदकत्वरूपः वै० स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठत्व स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधप्रतियोगिकत्वोभयसम्बन्धेनेति केचित् ।

अथवा नियता उपस्थितिर्यस्येति विग्रहः निपूर्वकयमधातोर्व्यापकत्वं क्तप्रत्ययस्या भयः षष्ठ्याश्च विषयत्वमर्थः तथा च यन्निष्ठविषयता निरूपिका व्यापकत्वविशिष्टाभिन्ना उपस्थितिरिति विग्रहार्थः व्यापकत्वविशिष्टाभिन्नोपस्थितिविषयीभूतोऽर्थ इति समासार्थः ।

यस्मिन्प्रातिपादिके उच्चारिते यस्यार्थस्य नियमेन भानं स तत्प्रातिपदिकार्थ इति शेखरः । सप्तम्यर्थो निरूपितत्वं षष्ठ्यार्थो विषयत्वं नियमपदार्थो व्याप-

कत्वम् इत्थंभूतेति तृतीयाया वैशिष्टचमर्थः यत्पदार्थस्याभेदेनोच्चरितपदार्थे तस्याभेदेन प्रतिपदिके तस्य निरूपितत्वसम्बन्धेन व्यापकतायां तस्या वैशिष्टचसम्बन्धेनोपस्थितौ तत्रैव विषयत्वसम्बन्धेन यत्पदार्थस्यान्वयः ।

तथा च यदभिन्नोच्चारिताभिन्नप्रातिपादिकनिरूपितव्यापकत्वविशिष्टा यन्निष्ठविषयतानिरूपकोपस्थितिस्स प्रातिपदिकार्थ इति तदर्थः ।

व्यापकत्वं च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं तस्य व्याप्यत्वांशे नित्यसाकाङ्क्षतया व्याप्यतानिरूपितस्य ग्रहणम् व्याप्यत्वं च स्वाभाववदवृत्तित्वम् आश्रयत्वं क्तप्रत्ययार्थः तस्य स्वरूपेण विषयताया अन्वयः ।

तथा च उच्चरिताभिन्नप्रतिपदिकनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिनिरूपितविषयताश्रयीभूतोर्थः प्रातिपदिकार्थ इति समासार्थः ।

न च घटशब्दस्य समवायेनाकाशनिष्ठतयोपस्थितेश्चात्मनिष्ठतया द्वयोः समानाधिकरण्याभावेन कथं व्याप्यव्यापकभाव इति वाच्यम् स्वविषयकश्रावणप्रत्यक्षसमवायित्वसम्बन्धस्य व्याप्यतावच्छेदकसम्बन्धत्वाङ्गीकारेण तेन सम्बन्धेन प्रतिपदिकस्याप्यात्मनिष्ठत्वात् ।

न च प्रतिबन्धवशाददुपस्थित्यभाववति आत्मनि निरुक्तसम्बन्धेन प्रतिपदिकस्य सत्त्वेऽप्युपस्थितेरभावात्पुनरपि दोषस्तदवस्थ इति वाच्यम् स्वजन्योपस्थितिसमवायित्वस्यैव व्याप्यत्वावच्छेदकसम्बन्धत्वोपगमेनादोषात् ।

ननु निरुक्तपरिष्कारे उपस्थितैतिपदस्य स्मरणपरत्वे लिङ्गत्वोपलक्षितधर्मावच्छिन्ने तटत्वावच्छिन्ने चोपस्थितेस्सत्त्वात् तटप्रातिपादिकव्यापकत्वापत्त्या तद्विषयस्य प्रातिपदिकार्थत्वापत्तौ लिङ्गग्रहणवैयर्थ्यापत्तिरिति चेन्न—उपस्थितिपदस्य शाब्दबोधपरत्वाङ्गीकारेणादोषात् पुंस्त्वादिविषयकबोधस्य तु न तटप्रातिपदिकव्यापकत्वं तटीत्यादावभावादित्यदोषः ।

न चैवं सति हरिशब्दे भेकादिबोधस्य व्यापकत्वाभावेन तद्विषयस्य भेकादेः प्रातिपदिकार्थत्वं न स्यादिति वाच्यम् स्वज्ञानाधीनोपस्थितिप्रयोज्यत्वं स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयविषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावत्त्वोभयसम्बन्धेन प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वस्यैव प्रातिपदिकार्थत्वाभ्युपगमेनादोषात् तथा हि हरिपदे विष्णुत्वावच्छिन्ननिरूपितशक्तिज्ञानाधीनोपस्थितिप्रयोज्यत्वस्य निरुक्तशक्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधीयविषयताव्यापकत्वस्य च विष्णुविषयतायां सत्त्वेन तदाश्रयस्य प्रातिपदिकार्थत्वसिद्धिः एवं भेकादावपि बोध्यम् तटपदे तु लिङ्गत्वोपलक्षितधर्मावच्छिन्नशक्तिज्ञाधीनोपस्थितिप्रयोज्यत्वस्य पुंस्त्वविषयतायां सत्त्वेऽपि निरुक्तशक्तिज्ञानाधीनोपस्थितिप्रयोज्यबोधीयविषयताव्यापकत्वस्याभावात् तादृशशक्त्यैव स्त्रीत्वबोधस्याप्युत्पादादिति न लिङ्गस्य प्रातिपदिकार्थत्वम्

न च निरवच्छिन्नविषयताया आश्रयभेदादेव भेदस्याङ्गीकारेणान्यघटवृत्ति-घटत्वनिष्ठविषयताव्यापकत्वस्यैव तद्घटवृत्तिघटत्वनिष्ठविषयतायामभावेन तंस्य प्रातिपदिकार्थत्वं न स्यादिति वाच्यम् । वैशिष्ट्यनियामकद्वितीयसम्बन्ध-स्थाने स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदक-त्वरूपसम्बन्धनिवेशेनादोषात् हरिशब्दे विष्णुनिरूपितशक्तिज्ञानाधीनबोधे विष्णुविषयतावन्नेत्यादिभेदस्य वक्तुमशक्यतया विष्ण्वादेः प्रातिपादिकार्थत्व-सिद्धिः तटशब्दे तु लिङ्गत्वोपलक्षितधर्मावच्छिन्ननिरूपितशक्तिज्ञानाधीनपुंस्त्व-विषयताकबोधे स्त्रीत्वविषयतावान्नेत्यादिभेदस्य वक्तुं शक्यतयां न लिङ्गस्य प्रातिपदिकार्थत्वमिति बोध्यम् ।

यत्तु नियतोपस्थिक इत्यत्रोपस्थितिपदस्य शाब्दबोधपरत्वे हरिशब्दे दोष माशङ्क्य स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यत्रो-धीयप्रवृत्तिनिमित्तविषयतात्वावच्छिन्नव्याप्यतानिरूपितव्यापकतावत्त्वोभयसम्ब-न्धेन प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं तत्त्वमिति परिष्कुर्वन्ति ।

तन्न घनरसवारिशब्दयोरेकप्रवृत्तिनिमित्तकत्वेन वारिशब्दप्रयोज्यजलत्व-रूपप्रवृत्तिनिमित्तनिष्ठविषयताव्यापकत्वस्य क्लीवत्वेऽसत्त्वात् घनरसपदप्रयोज्य-पुंस्त्वविषयकबोधेऽपि जलत्वरूपप्रवृत्तिनिष्ठविषयतायाः सत्त्वात् घनरसशब्दस्या-नियतालिङ्गतया तत्रलिङ्गग्रहणेन सिद्धावपि वारिशब्दस्य नियतलिङ्गतया प्रथ-माया असिद्धेरिति ।

न च पटशब्दनिष्ठशक्तिज्ञानाधीनबोधे पटविषयताकानुमितिर्नेति भेदस्य वक्तुं शक्यतया निरुक्तबोधनिष्ठभेदीयप्रतियोगितावच्छेदकत्वं पटविषयतायां-मपीति तदाश्रयस्य प्रातिपदिकार्थत्वानापत्तिरिति वाच्यम् स्वज्ञानाधीनोपस्थि-तिप्रयोज्यबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वमित्यस्य स्थाने स्वविशिष्टभेद प्रतियोगितानवच्छेदकत्वमित्यस्य निवेशेनादोषात् वै० स्वज्ञानाधीनोपस्थिति-प्रयोज्यबोधनिष्ठत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधप्रतियोगिकत्वोभयसम्ब-न्धेनेति बोध्यम् ।

न च वस्तुपदजन्यपटत्वविषयतावद्बोधोनेत्याकरकभेदमादाय पटत्वविषय-तायास्तादृशभेदीयप्रतियोगितावच्छेदकत्वेन घटत्वस्य प्रातिपदिकार्थत्वानापत्ति-रिति वाच्यम् निरुक्तभेदप्रतियोगितानवच्छेदकत्वमित्यस्य निरुक्तभेदप्रतियोगि-तावच्छेदकतापर्याप्त्यधिकरणत्वाभाववत्त्वमित्यर्थेन प्रकृतभेदीयप्रतियोगितावं-च्छेदकताया वस्तुपदजन्यत्वपटत्वविषयतात्वोभयपर्याप्तत्वेन तादृशपर्याप्त्यधि-करणत्वाभावस्य पटत्वविषयतायां सत्त्वेन दोषाभावात् ।

न च तत्पदनिष्ठा या बुद्धिस्थत्वोपलक्षिततत्तद्धर्मावाच्छिन्नार्थनिरूपिता-शक्तिस्तज्ज्ञानाधीने घटविषयताकबोधे पटविषयताकबोधस्य पटविषयताकत्रोधे

घटविषयताकबोधस्य च भेदो वर्तत इति चालनीन्यायेन सर्वा विषयता: प्रतियोगितावच्छेदिका एवेति तत्पदप्रातिपदिकार्थत्वं कस्यापि न स्यादिति वाच्यम् स्वज्ञानाधीनोपस्थितिप्रयोज्यत्व स्वाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वाभाववत्त्वोभयसम्बन्धेन प्रातिपदिकष्ठशक्तिज्ञानविशिष्टविषयताश्रयत्वस्यैव प्रातिपदिकार्थत्वोपगमेनादोषात् प्रातिदिकनिष्ठा शक्तिश्च शब्दबोधजनिका ग्राह्या तत्पदे शब्दबोधजनिका शक्तिः घटत्वावच्छिन्नस्तत्पदशक्य इत्येव तथाच तज्ज्ञानाधीनाबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्य घटविषयतायां सत्वात्तादृशशक्तिज्ञानाधीनोपस्थितिप्रयोज्यत्वस्य चाभावायादोषः ।

न च घटत्वावच्छिन्नः पटत्वावच्छिन्नश्च तत्पदशक्यः इति समूहालम्बनात्मकः शक्तिज्ञानात्कदाचिद्घटविषयकः कदाचित्पटविषयकश्च बोधो जायते इति घटविषयतयोः तादृशशक्तिज्ञानधीनोपस्थितिप्रयोज्यत्वस्य सत्त्वेऽपि तादृशशक्तिज्ञानाधीनबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावस्यासत्त्वात् कस्यापि प्रातिपदिकार्थत्वं न स्यादिति वाच्यम् स्वज्ञानाधीनोपस्थितीयविषयताप्रयोज्यत्व स्वाभाववत्वोभयसम्बन्धस्य प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वस्य तत्त्वाभ्युपगमेनादोषात् अभावीयप्रतियोगितावच्छेदकसम्बन्धौ स्वप्रयोज्यधर्मितानिरूपितप्रकारतावत्त्व स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपौ ग्राह्यौ तथा च लिङ्गत्वव्याप्यत्वापलक्षितधर्मावच्छिन्ने तटे तटपदशक्तेरेकस्याः स्वीकारेण तत्प्रयोज्यतत्वावच्छिन्ननिष्ठधर्मितानिरूपितप्रकारता वत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यपुंस्त्वविषयकबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य च स्त्रीत्वविषयतायां सत्त्वेन उभयसम्बन्धेन शक्त्यभावस्यासत्वात् लिङ्गस्याप्रतिपादिकार्थत्वाल्लिङ्गग्रहणं चरितार्थम् तत्पदप्रयोज्यघटनिष्ठविषयतायां द्वितीयसम्बन्धेन शक्तिवैशिष्ट्यस्य सत्त्वेऽपि प्रथमसम्बन्धेन तत्त्वाभावादेकसत्त्वेऽपि द्वयं नास्तीति प्रत्ययेन उभयसम्बन्धेन शक्त्यभावसत्त्वेन प्रातिपदिकार्थत्वसिद्धिः हरिशब्दे तु शक्तेर्नानात्वेन इन्द्रनिष्ठविषयतायां प्रथमेन द्वितीयेन च शक्तेरभावादुभयसम्बन्धेन शक्त्यभावस्य सत्त्वेन शक्तिवैशिष्ट्यात्तदाश्रयस्येन्द्रादेः प्रातिपदिकार्थत्वं सिद्धम् ।

न च यत्रैकस्तच्छब्दो नीलत्वावच्छिन्नतात्पर्येणोच्चरितोऽपरो घटतात्पर्येण अभेदश्च संसर्ग आकांक्षाभस्यस्तत्र नीलनिष्ठनिषयतायामुक्तोभयसम्बन्धावच्छिन्नत्वाभावविरहेण तत्त्वानापत्त्या सः स इति वाक्यप्रामाण्यानापत्तिरिति वाच्यं स्वप्रयोज्यधर्मितानिरूपितसंसर्गावच्छिन्नप्रकारतावत्त्वरूपसंसर्गस्य निक्षेपेण अभेदस्य संसर्गत्वानङ्गीकारेण तदवच्छिन्ननीलनिष्ठप्रकारतायाः संसर्गावच्छिन्नप्रकारत्वाभावेनादोषात् ।

न च स्वत्वसम्बन्धेन राजविशिष्टपुरुषतात्पर्येणोच्चरितपदप्रातिपदिकार्थत्वं राज्ञो न स्यात् राजनिष्ठविषयतायामुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वविरहादिति वाच्यम् प्रकारतायामाकांक्षाभास्यसंसर्गावच्छिन्नत्वस्य निवेशेन प्रकृते स्वत्वस्य शक्तिभास्यत्वेनाकांक्षाभास्यत्वाभावात् ।

न च पुंस्त्वनिष्ठविषयत्वस्य निवेशेन प्रकृते स्वत्वस्यशक्तिभास्यत्वेनाकांक्षाभास्यसंसर्गावच्छिन्नप्रकारतारूपत्वाभावेन उभयसम्बन्धावच्छिन्नस्वाभाववत्त्वेन पुंस्त्वादेः प्रातिपदिकार्थत्वापत्त्या लिङ्गग्रहणवैयर्थ्यमिति वाच्यम् स्वप्रयोज्यधर्मितेत्यादेः स्थाने स्वनिरूपितापदार्थसम्बन्धावच्छिन्नप्रकारतारूपत्वानाश्रयत्वस्वनिरूपितापदार्थसम्बन्धावच्छिन्नप्रकारतावृत्त्यवच्छेद्यतानिरूपितनिरूपितत्वानाश्रयत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वप्रयोज्यधर्मित्वाभाववत्त्वसम्बन्धनिवेशेन पुंस्त्वादिनिष्ठविषयतायां स्वप्रयोज्यतटत्वावच्छिन्नधर्मितानिरूपिततादृशप्रकारतावृत्त्यवच्छेद्यतानिरूपितत्वेन उभयसम्बन्धावच्छिन्नधर्मित्वाभाववत्त्वस्य सत्वेन उभयसम्बन्धावच्छिन्नस्वाभाववत्त्वविरहेणादोषात् ।

न च यत्र देवदत्ततात्पर्येण स इत्युच्चारितं धनतात्पर्येण तदिति तत्र देवदत्तत्वावच्छिन्नविषयतायां तत्पदनिष्ठशक्तिप्रयोज्यधनत्वावच्छिन्नधर्मितानिरूपितस्वत्वरूपापदार्थसंसर्गावच्छिन्नप्रकारतारूपत्वस्य वक्तुमशक्यतया एकसत्त्वेपीति रीत्या तादृशधर्मित्वाभावस्य सत्त्वेन स्वज्ञानाधीनोपस्थितिप्रयोज्य बोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य च सत्त्वेन उभयसम्बन्धावच्छिन्नप्रतियोगिताकतत्पदनिष्ठशक्त्यभाववद्विषयताश्रयत्वाभावात् देवदत्तस्य तत्पदप्रातिपादिकार्थत्वं न स्यादिति वाच्यम् अपदार्थसंसर्गावच्छिन्नेत्यत्रापदार्थत्वं न पदप्रयोज्यसंसर्गाभाववत्त्वमपि तु पदशक्त्यभाववत्त्वमेवं च तत्पदस्य सकलार्थनिरूपितशक्तिमत्त्वेन स्वत्वसंसर्गे तत्पदशक्त्यत्वस्यैव सत्त्वेन देवदत्तनिष्ठविविषयतायां तादृशप्रकारतरूपत्वानाश्रयत्वस्य तादृशप्रकारतावृत्त्यवच्छेद्यतानिरूपितत्वानाश्रयत्वस्य चोक्तोभयसम्बन्धेन धर्मित्वाभाववत्त्वस्यासत्त्वेन एकसत्त्वेपीति रीत्या उभयसम्बन्धेन स्वाभाववत्त्वस्य सत्त्वात्प्रतिपदिकार्थत्वसिद्धेः ।

न च घटादितात्पर्येणोच्चरिततत्पदप्रातिपदिकार्थत्वं पुंस्त्वादीनां न स्यात् पुंस्त्वादिप्रतियोगिकस्वरूपसम्बन्धस्योक्तरीत्या तत्पदार्थत्वेन पुंत्वस्त्वावच्छिन्नविषयतायाः तत्संसर्गावच्छिन्नायाःस्वप्रयोज्यघटत्वावच्छिन्नधर्मितानिरूपितापदार्थसंसर्गावच्छिन्नप्रकारतारूपत्वानाश्रयत्वेन तादृशप्रकारतावृत्त्यवच्छेद्यतानिरूपितत्वानाश्रयत्वेन चोक्तोभयसम्बन्धेन तादृशधर्मित्वाभावविरहादुक्तयुक्त्या तादृशधर्मित्वाभाववत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धाभ्यां शक्त्याभाववद्विषयताश्रयत्वादिति वाच्यम् अ-

भावीयप्रतियोगितावच्छेदकसम्बन्धघटकप्रकारतायां स्वप्रयोजकपदाप्रयोज्यत्व स्वनिरूपतत्वोभयसम्बन्धेन स्वविशिष्टत्वस्य निवेशेन पुंस्त्वादेरप्रातिपदिकार्थत्वात् तथा हि धनत्वावच्छिन्नधर्मितानिरूपितदेवदत्तत्वावच्छिन्नप्रकारतायाः स्वाप्रयोजकतत्पदप्रयोज्यत्वेन निरुक्तप्रकारतानाश्रयत्वस्य देवदत्तत्वावच्छि· प्रकारतयाः स्वाप्रयोजकतत्पदप्रयोज्यत्वेन निरुक्तप्रकारताश्रयत्वस्य देवदत्तत्वावच्छिन्नविषयतायां सत्त्वेन तादृशधर्मित्वाभाववत्वस्य वक्तुमशक्यत्वेनैकसत्वे द्वयं नास्तीति रीत्या निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताक शक्त्यभाववद्विषयताश्रयत्वविरहात् पुंस्त्वादेस्तत्पदप्रातिपदिकार्थत्वं वक्तुमशक्यम् अनियतलिङ्गास्तु लिङ्गमात्राधिक्यस्येति ग्रन्थेन तत्पदस्य लिङ्गोदाहरणताया एवाभिमतत्वात् ।

नन्वत्र लक्षणे तत्तद्घटगतलिङ्गानन्त्येन घटादिपदजन्यबोधे एकत्वादिविशिष्टविषयके सर्वघटगतलिङ्गानानेन लिङ्गविषयतायां एतत्पुंस्त्वविषयतावान्नेतिभेदीयप्रतियोगितावच्छेदकतायाः सत्त्वेन निरुक्तोभयसम्बन्धेन घटादिपदनिष्ठशक्तिविशिष्टविषयताया असत्त्वेन लिङ्गस्य प्रातिपदिकार्थत्वं न स्यादितिचेन्न स्वज्ञानाधीनोपस्थितिप्रयोज्येत्यादिसम्बन्धं विहाय स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधनिष्ठभेदप्रतियोगितातिरूपितत्व स्वविषयीभूतविषयतावच्छेदकधर्मावच्छिन्नत्वविषयतात्वोभयधर्मावच्छिन्नावच्छेदकताकताभेदप्रतियोगितानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टावच्छेदकताश्रयत्वस्य निवेशेनान्यपुंस्त्वादिविषयतानिष्ठावच्छेदकतायां प्रथमसम्बन्धसत्वेऽपि घटादिपदनिष्ठशक्तिविषयीभूतपुंस्त्वादिविषयतावच्छेदक पुंस्त्ववाद्यच्छिन्नत्वविषयवात्वोभयधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितानिरूपितत्वस्याभावेन;निरुक्तस्वविशिष्टावच्चेदकताश्रयत्वस्य पुंस्त्वादीनामसत्वेनादोषात् ।

न च पुंस्त्वादिनिष्ठविषयतायां तटनिष्ठशक्तिज्ञानजन्योपस्थितिविषयताप्रयोज्यशाब्दबोधवृत्ति पुंस्त्वत्ववृत्तिविषयतावान्नेत्याकारकभेदीयप्रतियोगितानिरूपितत्वस्य : तादृशपुंस्त्वत्वावच्छिन्नत्वविषयतात्वोभयधर्मवच्छिन्नावच्छेदकताकप्रतियोगिताकभेदप्रतियोगितानिरूपितत्वस्या भावेनोभयसम्बन्धावच्छिन्नप्रतियोगिताकतटादिपदनिष्ठशक्त्यभावस्य सत्वेन पुंस्त्वादीनां तटप्रातिपदिकार्थत्वं दुर्वारमिति वाच्यम् स्वविशिष्टावच्छेदकताश्रयत्वघटकवैशिष्ट्यनियामकसम्बन्धे स्वनिरूपितत्वान्वतरसंसर्गेणोक्तभेदीयप्रतियोगिताविशिष्टत्वस्य निवेशेन पुंस्त्वादिविषयतायां द्वितीयसंसर्गेण तादृशावच्छेदकताश्रयत्वे निरुक्तप्रतियोगिताकाभावविरहादिति ध्येयम् ।

केचित्तु प्रातिपदिकानिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् वैशिष्ट्यं स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधविषयत्वेनतात्पर्यविषयत्व स्वनिष्ठजन-

कतानिरूपितशाब्दबोधनिष्ठजन्यतावच्छेदकत्वस्वाभाववत्व त्रितयसंबन्धेन प्रतियोगितावच्छेदकः सम्बन्धश्च स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधनिष्ठभेद निष्ठभेदप्रतियोगितावच्छेदकताश्रयत्वरूपः इन्द्रतात्पर्येणोच्चरितहरिपदप्रातिपदिकार्थत्वस्याश्वादौ वारणाय प्रथमः क्रियाया क्रियानिष्ठविशेष्यतानिरूपितघटनिष्ठप्रकारताकबोधविषयत्वेन तात्पर्यविषयत्वात् तत्त्ववारणाय द्वितीयः पुंस्त्वादेस्तटपदप्रातिपदिकार्थत्ववारणायः तृतीयः घटादेस्तुतत्वं सुलभमित्याहुः ।

अन्ये तु स्वनिष्ठशक्तिविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वम् वै० स्वज्ञानाधीनोपस्थितिजन्यत्वप्रकारकतात्पर्यविषयशब्दबोधनिरूपितत्वं स्वविषयकयत्किंचिज्ज्ञानाभाववत्वसम्बन्धाभ्याम् । अभावीयप्रतियोगितावच्छेदकः सम्बन्धश्च स्वविशिष्टशक्तिज्ञानजन्योपस्थितिजन्यशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपः स्वप्रयोज्योपस्थितिप्रकारत्वासमानाधिकरणधर्मितानिरूपितप्रकारतावत्त्वोभयरूपः अत्र वैशिष्ट्यं च स्वविषयशक्तिविषयकत्व स्वजन्यतानवच्छेदकीभूतशाब्दबोधनिष्ठविषयतात्वावच्छिन्नजन्यतानिरूपितजनकत्वाभाववत्वसम्बन्धाभ्याम् ।

अश्वतात्पर्येणोच्चरितहरिपदप्रातिपदिकार्थत्वमिन्द्रादेर्माभूदिति प्रथमः घटत्वावच्छिन्नो लिङ्गत्वोपलक्षितधर्मावच्छिन्नश्च तत्पदशक्यः इत्याकारकशक्तिज्ञानवैशिष्ट्यस्यात्रोभयसम्बन्धेन घटत्वावच्छिन्नो बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नश्चतत्पदशक्यः इत्याकारकशक्तिज्ञाने सत्त्वेन तादृशशक्तिज्ञानप्रयोज्यपटादिविषयकशाब्दबोधनिष्ठभेदप्रतियोगितावच्छेदकत्वस्य घटादिविषयतायां सत्त्वेन तत्वाभाववारणायाभावीयप्रतियोगितावच्छेदकसम्बन्धे प्रयोज्यत्वं विहाय तादृशशक्तिज्ञानजन्योपस्थिजन्यत्वनिवेशः संप्रसारणपदस्य स्वपदप्रयोज्यत्वे यण्निष्ठस्थानितानिरूपितादेशताश्रये च खण्डशः शक्तेः सत्त्वेन संप्रसारणपदप्रयोज्यत्वनिष्ठविषयतायां यण्निष्ठस्थानितानिरूपितेक्निष्ठादेशताश्रयः संप्रसारणपदशक्यः इत्याकारकशक्तिज्ञानजन्योपस्थितिजन्यशब्दबोधनिष्ठसंप्रसारणपदप्रयोज्यत्वविषयतावान्नेत्याकारकभेदप्रतियोगितावच्छेदकत्वस्यैव सत्वात्प्रतिपदिकार्थत्वाभाववारणायाभावीयप्रतियोगितावच्छेदको द्वितीयः सम्बन्धः वृन्दारकपदनिष्ठशक्तिज्ञानविशिष्टं देवत्वावच्छिन्नो लिङ्गत्वोपलक्षितधर्मावच्छिन्नश्च देवतापदशक्य इति ज्ञानं माभूदतोऽभावीयप्रतियोगितावच्छेदकसम्बन्धघटकः प्रथमः घटत्वावच्छिन्नः पटत्वावच्छिन्नश्च तत्पदशक्य इत्याकारके ज्ञाने कालभेदेन घटपटोभयविषयकबोधजनके विशिष्टस्य तत्त्ववारणाय तद्घटको द्वितीयः लिङ्गनिष्ठविषयतायां निरुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वविरहान्न तत्त्वमित्याहुः ।

परे तु प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं तत्त्वम्० वै० स्वप्रयो-

ज्यत्व स्वविशिष्टविषयताभिन्नत्वसम्बन्धाभ्याम् अत्र वैशिष्ट्यं च स्वप्रयोज्यविषयत्वाव्यापकत्वस्वविशिष्टत्वोभयसम्बन्धायां अत्र वैशिष्ट्यं च स्वप्रयोज्यापदार्थसंसर्गावच्छिन्नविशेष्यतानिरूपितप्रकारतावत्व स्वप्रयाज्यापदार्थसंवन्धवच्छिविशेष्यतानिरूपितप्रकारतावच्छेदकतावत्वोभयसम्बन्धेन घटादिनिष्ठविषयतानां तादृशशक्तिविशिष्टत्वेन तत्त्वम् इदं च खण्डशः शक्त्यभ्युपगमे ।

विशिष्टशक्त्यभ्युपगमे तु प्रातिपदिकनिष्ठशक्तिविशिष्टविषयताश्रयत्वं तत्त्वम् वै० स्वप्रयोज्यत्व स्वविशिष्टविषयताभिन्नत्वोभयसम्बन्धेन अत्र वैशिष्ट्यं च स्वप्रयोज्यविषयत्वाव्यापकत्व स्वप्रयोज्यनिरवच्छिन्नमुख्यविशेष्यतानिरूपितप्रकारत्वाभाववत्त्व स्वप्रयोज्यनिरवच्छिन्नमुख्यविशेष्यतानिरूपितसाक्षात्परम्परावच्छेदकतात्वाभाववत्वसम्बन्धैः पुंस्त्वादीनां तटप्रातिपदिकार्थत्ववारणाय मुख्यत्वनिवेशः पशुशब्दे दोषवारणाय साक्षात्परम्परानिवेशो लक्षणसमन्वयः स्वयमूहनीय इत्याहुः ।

केचित्तु प्रातिपदिकविशिष्टत्वं प्रातिपदिकार्थत्वम् वै० च स्वप्रयोज्यबोधविषयत्वेन तात्पर्यविषयत्व स्वाभाववत्त्वसम्बन्धाभ्यां अभावीयप्रतियोगितावच्छेदकः सम्बन्धश्च स्वप्रयोज्यधर्मितानिरूपितप्रकारताश्रयत्व स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वोभयरूपः प्रातिपदिकार्थत्ववारणाय प्रथमः पुंस्त्वादेस्तटप्रातिपदिकार्थत्ववारणाय द्वितीयः घटादेः प्रातिपदिकविशिष्टत्वेन तत्त्वमित्याहुः ।

प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थ इति नागेशः प्रवृत्तिनिमित्तत्वं च वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वम् आकाशशब्दस्य स्वरूपतः शब्दाश्रये शक्तेः सत्त्वेन शब्दाश्रयत्वस्य तत्त्ववारणाय प्रथमं सत्यन्तम् इति प्राञ्चः घटत्वाद्युपलक्षितघटादौ शक्तिग्रहात् द्रव्यादिपदादपि घटत्वादिना घटादेरुपस्थितेः सत्त्वेन द्रव्यादिपदानां घटत्वादौ प्रवृत्तिनिमित्तत्ववारणाय तदिति नव्याः गवादिपदानां जात्याकृतिविशिष्टवाचकत्वमिति तेषामाकृतौ प्रवृत्तिनिमित्तत्ववारणाय वाच्यवृत्तित्वे सतीति द्वितीयं सत्यन्तम् ।

नचावयवविशेषसंयोगरूपस्य संस्थानस्य स्वसमवायिसमवेतत्वसम्बन्धेन गवादौ वृत्तित्वसत्त्वादतिव्याप्तितादवस्थ्यमिति वाच्यम् वृत्तित्वस्य साक्षात्सम्बन्धेन विवक्षणेनादोषात् द्रव्यदधिपदादेः घटादिरूपद्रव्ये अवयविरूपदध्यादौ च वाच्यत्वस्य तद्वाच्यकपालादिवृत्तित्वस्य च सत्त्वाद् दध्यादौ प्रवृत्तिनिमित्तत्ववारणाय वाच्योपस्थितीयप्रकारताश्रयत्वमिति तदर्थश्च भ्रमान्यशक्तिज्ञानजन्या योपस्थितिस्तन्मुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वम् द्रव्यपदं द्रव्यवतिशक्तम् इति शक्तिभ्रमजन्योपस्थितिमादाय द्रव्यपदादेर्घटादावतिव्याप्तितादवस्थ्याद्भ्र-

मान्येति द्रव्यपदं द्रव्यवति लाक्षणिकमिति ज्ञानजन्योपस्थितिमादाय उक्तातिव्याप्तिवारणाय शक्तीति मुख्यविशेष्यतानिवेशात् पशुपदादीनां शक्यतावच्छेदकतावच्छेदके लोमादौ नातिव्याप्तिरिति द्रष्टव्यम् ।

अन्ये तु प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तत्वम् वै० स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतानाश्रयत्व स्वविशिष्टविषयतावत्त्वसंबन्धाभ्यां अत्र वैशिष्ट्यं च स्वप्रयोज्यत्व स्वप्रयोज्यलिङ्गवृत्तिविषयताभिन्नत्व स्वप्रयोज्यलिङ्गत्वव्याप्यधर्मवृत्तिविषयताभिन्नत्वसम्बन्धैः घटादेस्तत्त्ववारणाय प्रथमः लिङ्गादेस्तत्त्ववारणाय द्वितीयः घटत्वादेस्तथात्वात्तत्त्वमिति वदन्ति ।

## कर्तुरीप्सिततमं कर्म ।

कृधातोरुत्पत्त्यनुकूलव्यापारोऽर्थः तत्रोत्पत्तिरविवक्षिता बहुलक्ष्यानुरोधा द्वितीयाश्रितेत्यादिसामर्थ्याच्च अनन्यलभ्यो हि शब्दार्थ इति न्यायेन व्यापारस्य धातुना लाभात् आश्रयत्वमात्रं तृजर्थः आप्नोतेः सनन्तान्मतिबुद्धीति कर्मणि क्तः ।

ईप्सितशब्दश्च वारणार्थानामिति सूत्रे भाष्ये 'माषेभ्यो गा वारयतीत्यादौ यस्य माषा मसन्ति न गावस्तस्य माषा ईप्सिता स्युः यस्य तु गावो न माषास्तस्य कथं माषा ईप्सिताः स्युरिति अभिप्रेतपरत्वमीप्सितशब्दस्य विज्ञायापादानत्वमाशङ्क्य क्रियापरत्वमीप्सितशब्दस्याभिप्रेत्य तस्यापि माषा एवेप्सिता यदेभ्यो गा वारतीत्युक्तम् ।

अत्र कैयटः परकीया अपि माषा वारयितुरिष्टा भवन्ति मानश्नन्त्वेते इत्येतेभ्योऽसौ गा वारयतीति इति भाष्यकैयटाभ्यां स्पष्टमेव क्रियापरत्वमीप्सितशब्दस्योक्तम् । अग्रे च अग्नेर्माणवकं वारयतीत्यत्र माणवकेऽपादानसंज्ञाया अतिप्रसङ्गमाशङ्क्य अग्न्यादौ ईप्सितमात्रे सावकाशाया अपादानसंज्ञाया माणवकादौ कर्मसंज्ञया परत्वाद्बाध इत्युक्तम् । कर्तुरीप्सिततममित्यत्र अभिप्रेतार्थकस्यैव ग्रहणे तु अनभिप्रेते अग्न्यादौ अपादानसंज्ञायाश्चारिताथ्येंनानवकाशत्वाद्बाधशङ्काऽनुपपन्ना तस्मादुभयत्रापि ईप्सितशब्दः क्रियापर इति स्थितम् ।

वस्तुतस्तु तमब्ग्रहणमेव क्रियापरत्वे लिङ्गम् भाष्यस्वरसात्क्रियापरत्वमयुक्तं ततस्तस्याप्रतीतेः ?

न च सम्बन्धरूपकर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वेन स्पर्धवत्कर्मणि क्तो दुर्लभ, इति वाच्यम् शब्दायतेर्नेत्यत्र बहिर्भूतपुत्रादिरूपकर्मणोऽभावे मानाभाव इति शेखरे उक्तत्वेन प्रकृतेऽपि बहिर्भूतपुत्रादिकर्मादायैव क्तप्रत्ययसिद्धेः क्तस्य च वर्तमान इति कर्तरि षष्ठी तदर्थो व्यापाराश्रयः ।

ननु कटं कृतवान् कटं करिष्यतीत्यादौ वर्तमानकालिकेच्छाविरहेण कर्मत्वानापत्तिरिति चेन्न क्तप्रत्ययोपात्तवर्तमानत्वस्याविवक्षणेनादोषात् ।

नन्वेवमुक्तसूत्रेण षष्ठ्या अनुपपत्तिरिति चेन्न गमेरिडिंत्यत्र परस्मैपदपदेन तङानयोरभावस्य लक्षणया ग्रहणवत् वर्तमानपदस्यापि वर्तमानकलेतरकालाबोधकपरत्वस्वीकारेण वर्तमान इत्यधिकृत्य विहितस्य क्तस्य योगे षष्ठीत्यर्थस्वीकारेण वाऽदोषात् ।

यद्वा तस्यापत्यमित्यत्र लिङ्गवचनयोरुपलक्षणतया भानेऽप्युद्देश्यतावच्छेदकविशेषणतया भानाभाववदत्राप्युपलक्षणतया वर्तमानत्वस्य भानेऽपि उद्देश्यतावच्छेदकविशेषणताया भानविरहेणादोष इति ।

केचित्तु कर्मणिद्वितीयेति शास्त्रघटकर्मपदजन्यलक्ष्यधर्मिकसाधुत्वप्रकारकबोधानुपयोगिवर्तमानविषयकबोधो जायतामिति पाणिनेरिच्छां कल्पयित्वा कर्तृशब्दाद्विभक्तिमानीय ततः कटं कृतवानित्यादिलक्ष्यानुरोधेन कर्मणिद्वितीयेतिशास्त्रघटककर्मपदजन्यलक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिवर्तमानत्वाविषयकबोधोजायतामित्युक्तमुनेरिच्छां कल्पयन्तो द्वितीयबाक्यार्थबोधस्यैव लक्ष्यसंस्कारोपयोगित्वेनानुपपत्त्यभाव इति वदन्ति ।

परे तु कर्मपदशक्यतावच्छेदकतया क्तप्रत्ययोपात्तवर्तमानत्वस्याविवक्षितत्वमित्यर्थः तथा हि तत्पदजन्यबोधविषयतात्वच्छिन्नप्रकारताकभगवदिच्छीयबोधविषयतायां धर्मिपारतन्त्र्येण यद्विशेषणं तत्तत्पदशक्यतावच्छेदकमित्युच्यते धर्मिपारतन्त्र्यं च स्वविशिष्ये यद्विशेषणं तन्निरूपित यद्विशेषणं तत् 'घटपदजन्यबोधविषयतावान् घटो भवतु' इति इच्छायां स्वं घटत्वं तद्विशेष्यो घटस्तत्रविशेषणं बोधविषयता तन्निरूपितविशेषणत्वाद् घटस्य घटपदशाक्यतावच्छेदकबोधविषयतायां धर्मिपारतन्त्र्येण यद्विशेषणं घटत्वं तदेव शक्यतावच्छेदकम् अत एव गुणवत्त्वेनद्रव्यं बोद्धव्यमितीच्छायां गुणवत्त्वमेव शक्यतावच्छेदकम् बोधविषयत्वे स्वावच्छिन्नत्वसम्बन्धेनान्वये धर्मिपारतन्त्र्येण बोधविषयत्वे विशेषणत्वात् एवं च यथा बुद्धिविषयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्नस्तत्पदजन्यबोधविषयतावान् भवतु इतीच्छायां बोधविषयत्वे धर्मिपारतन्त्र्येण विशेषणं तत्तद्धर्मविशेष एव शक्यतावच्छेदको न तु बुद्धिविषयतावच्छेदकत्वं तच्चापलक्षणम् तथा प्रकृतेऽपि कर्तृवृत्तिव्यापारविशिष्टफलाश्रयत्वप्रकारवर्तमानकालिकेच्छाद्देश्यं कर्मपदशक्यमिति सामान्येन शक्तिज्ञाने जाते पश्चात्कर्तृवृत्तिव्यापारविशिष्टफलत्वप्रकारकेच्छाद्देश्यं कर्मपदशक्यमिति जातं वर्तमानत्वाघटितम् मानसशक्तिज्ञानमादायास्योदायोक्तप्रयोगसिद्धिरित्याहुः ।

वस्तुतस्तु प्रारब्धापरिसमाप्तक्रियाश्रयत्वस्य वर्तमानत्वेऽतीतेऽह्नि कृतस्य पाकस्य तात्पर्येणापीदानीं पाकं करोतीति प्रयोगापत्तिः तत्कालस्यापि तथात्वादतः स्वोच्चारणसमानाधिकरणत्व स्वघटकधातुजन्यबोधविषयत्वेन तात्पर्यविषयप्रा-

त्वोभयसम्बन्धेन प्रयोगविशिष्टक्रियाबोधनेच्छायां स्वोत्तरं प्रत्यय इत्यर्थस्यैव वर्त्तमाननिमित्तकप्रत्ययविधायकशास्त्राणां सत्त्वेन भूतकालतात्पर्येण नेदानीं पचतीति प्रयोगापत्तिः एवं च क्तप्रत्ययोपात्तवर्तमानत्वस्य विवक्षायाम् कर्तृवृत्तिव्यापारविशिष्टफलाश्रयत्वप्रकारकवर्तमानकालिकेच्छोद्देश्यस्यैव कर्मत्वं भवेत् क्तप्रत्ययार्थो वर्तमानकालश्च पाणिन्युच्चरितेप्सितपदप्रयोगसमयः तत्र कटकरणेच्छायां कटं करोतीति प्रयोगः स्यात् तादृशवर्तमानकालिकेच्छाविरहेणास्मदाद्युच्चरिताः कटं करोतीत्यादयः प्रयोगा नैव स्युः पाणिनिकर्तृकेप्सितेत्येतदुच्चारणाधिकरणकालवृत्तीच्छामादाय कटं कृतवानित्यस्येदानीन्तनप्रयोगस्य तामेवेच्छामादाय तस्याः प्राक् कालवृत्ति कटं करिष्यतीत्यस्य चोपपत्तौ शेखरकृता वर्तमानत्वाविवक्षाफलत्वेनोपन्यस्तस्य कटं कृतवान् कटं करिष्यतीत्यस्य सिद्धिरित्यस्यासङ्गत्यापत्तिः भूतभविष्यत्प्रत्ययघटितप्रयोगासिद्ध्युद्भावनसूचितायाः कटं करोतीत्येत्सिद्धेरसंगत्यापत्तिश्चेति बोध्यमिति केचित् ।

परेतु पूर्वपरदिनाधिकरणकेच्छाविषयस्य कर्मत्वापत्तितात्पर्यणैव शेखरोक्तिसामञ्जस्यम् इदानींतनस्य कटं करोतीत्यस्याप्युपलक्षकत्वाच्चेति तत्त्वम् ।

परेतु धातुसम्बन्धे प्रत्यया इत्यनेनात्र क्तप्रत्ययः वर्तमानत्वं च द्विविधं स्वबोधकोच्चारणाधिकरणीभूतकालवृत्तित्वम् स्वसमभिव्याहृतप्रधानीभूतक्रियाधिकरणीभूतकालवृत्तित्वं च भूतत्वं च निरुक्तकालवृत्तिध्वंसप्रतियोगित्वं भविष्यत्वं च निरुक्तकालवृत्तिप्रागभावप्रतियोगिक्षणवृत्तित्वम् यथा वसन् ददर्शेत्यत्र ददर्शेति शब्दोच्चारणाधिकरणीभूतकालवृत्तिध्वंसप्रतियोगिक्षणवृत्तित्वरूपभूतकालिकत्वबोधः लिटा स्वसमभिव्याहृतप्रधानीभूतक्रियाधिकरणत्वेन निश्चितो यः दर्शनाधिकरणीभूतः कालः तद्वृत्तित्वमेव वासक्रियायां वर्तमानकालिकत्वं शतृप्रत्ययो बोधयति । वसन् ददर्शेत्यत्र भूते लडित्युक्तिस्तु चिन्त्यैव प्रकृते प्रत्ययोपात्तवर्तमानत्वं न विवक्षितमित्यस्य स्वबोधकशब्दोच्चारणाधिकरणीभूतकालवृत्तित्वरूपं वर्तमानत्वं न विवक्षितमित्यर्थः, धातुसम्बन्धे प्रत्यया इति सूत्रलभ्यवर्तमानत्वस्य विवक्षणेऽपि स्वसमभिव्याहृतप्रधानीभूतक्रिया 'कर्मसंज्ञं भवति' इत्यत्र धातूपस्थाप्या सत्तारूपा तदधिकरणत्वेन निश्चितोयस्सत्ताधिकरणीभूतः कालस्तद्वृत्तित्वं सम्बन्धेच्छायां बोधयति क्ते सत्यप्यदाषादिति ब्रुवन्ति ।

न च वर्तमानत्वाविवक्षायां मानाभावः, 'कर्मणि इन्' इति सूत्रस्यैव मानत्वात् ।

न च तृचाऽऽश्रयत्वस्योक्तत्वेनोक्तार्थानामप्रयोग इति न्यायेन तदर्थबाधिका षष्ठी दुर्लभैवेति वाच्यम् तृचा कर्तृपदार्थव्यापारविशिष्टाश्रयत्वस्योक्तत्वे-

ऽपि ईप्सधात्वर्थसम्बन्धप्रकारकेच्छानुकूलव्यापारविशिष्टाश्रयत्वस्यानुक्ततयोक्तार्थानामित्यस्य निर्विषयत्वेन तस्याः सौलभ्यात् ।

ननु व्यापाराश्रयस्य व्यापाराश्रयेऽभेदेनान्वयो दुर्लभः अभेदान्वयबोधे विरूपोपस्थितेः कारणत्वादिति चेन्न षष्ठ्या इच्छीयप्रकारताश्रयफलप्रयोजकव्यापाराश्रयो वाच्यः कर्तृपदस्य व्यापाराश्रय इति समान्यविशेषयोरभेदान्वये बाधकाभावात् ।

नव्यास्तु प्रत्ययवाच्यतावच्छेदको धर्मो विलक्षण एव तदवच्छिन्ने प्रकृत्यर्थतावच्छेदकावच्छिन्नस्यान्वये क्षत्यभावादित्याहुः ।

प्राञ्चस्तु यथा क्रियाजन्यफलशालित्वस्य कर्मत्वेन व्यापारफलयोर्धातुलभ्यत्वेन जन्यजनकभावस्याकांक्षाभास्यत्वेनाश्रयत्वमात्रं कर्मप्रत्यार्थः तथा व्यापारस्य धातुलभ्यत्वेन आश्रयमात्रं तृप्रत्यार्थः एवं चाश्रये व्यापाराश्रयस्यान्वय इति वदन्ति ।

अन्ये तु कर्तृपदार्थः स्वतन्त्रः षष्ठ्यर्थो व्यापाराश्रयः एवं च कर्तृपदवाच्यत्वषष्ठीपदवाच्यत्वयोर्विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्वैलक्षण्यात् तदाश्रययोर्भवत्यभेदान्वय इति वदन्ति ।

परे तु 'अनन्यलभ्यो हि शब्दार्थ' इति न्यायाद्व्यापाराश्रयस्य कर्तृपदलभ्यत्वादत्र षष्ट्यर्थपरित्यागेनापि निर्वाह इत्याहुः ।

आप्नोतेः सम्बन्धोऽर्थः । स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारकः सनर्थ इच्छा विषयताश्रयः क्तप्रत्ययार्थः व्यापाराश्रयस्य वृत्तितया व्यापारे तस्य वैशिष्ट्यनियामकाभ्यां स्ववाचकधातुवाच्यत्वस्वप्रयोज्यत्वाभ्यां फले तस्य प्रकारित्वसंबन्धेनेच्छायां तस्या निरूपितत्वेन विषयतायां तस्या स्वरूपेणाश्रये तस्याभेदेन कर्मणि तथा च व्यापाराश्रयाभिन्नाश्रयवृत्तिव्यापारविशिष्ट फलवत्त्वप्रकारिकेच्छानिरूपितविषयताश्रयाभिन्नं कारकं सत् कर्म भवतीत्यर्थः वैशिष्ट्यं च स्ववाचकधातुवाच्यत्वस्वप्रयोज्यत्वाभ्याम् माषक्षेत्रे पुष्ट्यर्थमश्वबन्धने माषाणां कर्मत्ववारणायाद्यः अग्नेर्माणवकं वारयतीत्यत्राग्नेः कर्मत्ववारणाय द्वितीयः ।

ननु तण्डुलं पचतीत्यत्र इच्छीयविषयताश्रयतया ऽस्मदादीनामपि कर्मत्वं स्यादिति चेन्न, इच्छीयमुख्यविशेष्यताश्रयस्यैव तत्त्वाङ्गीकारेणादोषात् ।

न च यत्र मद्वृत्तिव्यापारजन्या तण्डुलनिष्ठा विक्लित्तिर्भवतु तण्डुलनिष्ठविक्लित्यनुकूलो व्यापारो भवतु तण्डुलनिष्ठविक्लित्यनुकूलव्यापारवानहं भवेयमित्यादि नानेच्छा वर्तते तत्र फलाश्रयत्वप्रकारकेच्छाविरहेण तण्डुलस्य कर्मत्वं न स्यात् यदि च तादृशेच्छीयविषयताश्रयः कर्मेत्येवार्थस्तथाच तादृशेच्छीयविषयता तण्डुले वर्तते इति न तण्डुलस्य कर्मत्वानुपपत्तिरित्युच्यते

तदा व्यापारफलादीनामपि विषयत्वाविशेषात् व्यापारं पचति फलं पचतीति प्रयोगापत्तिः स्यादिति वाच्यम् मद्वृत्तिव्यापारप्रयोज्यफलाश्रयस्तण्डुलो भवत्वितीच्छाया एवाभिलापः मद्वृत्तिव्यापारजन्या तण्डुलनिष्ठा विक्लित्तिरित्यादिवाक्यैः क्रियते तथाचैतद्वाक्याभिलप्यमानेच्छीयमुख्यविशेष्यतायास्तण्डुले सत्त्वेन दोषाभावः। अत एव मुख्यविशेष्यताया इच्छार्थकधातुसमभिव्याहारे कर्मप्रत्ययेन सुखमिच्छतीत्यादौ प्रतीतिः तथा चाहं सुखी स्यामितीच्छास्थले सुखमिच्छतीति प्रयोगानुपपत्तिरित्याशङ्क्य मम सुखं भवत्वितीच्छाया एव अहं सुखी स्यामिति वाक्येनाभिलापः इति द्वितीयाव्युत्पत्तिवादे गदाधरेणोक्तम् इत्याशयात्।

निरुक्तनानेच्छास्थलेऽपि मद्वृत्तिव्यापारजन्यविक्लित्याश्रयस्तण्डुलो भवतु इतीच्छायाः सत्त्वेन, इच्छीयविषतायाः फलाश्रयनिष्ठाया एव ग्रहणेन, वाऽदोषात्।

अथवा यथा विधेयता प्रकारताविशेष्यताभ्यां भिन्ना विषयता न तु विशेष्यविशेषणसाधारणी न तु विशेषणमात्रनिष्ठा पर्वतो वन्हिमानिति बुद्धौ पर्वते वन्हिरिति बुद्धौ च वन्हेरेव विधेयत्वात् तथोद्देश्यतापि ताभ्यां भिन्नैव नतु विशेष्यमात्रनिष्ठा उक्तबुद्धिद्वये पर्वतस्यैव उद्देश्यत्वात् इत्यपि गदाधरेण द्वितीयाव्युत्पत्तिवादे प्रतिपादितम् तथाच यथा मद्वृत्तिव्यापारप्रयोज्यफलाश्रयस्तण्डुलो भवत्वितीच्छीयोद्देश्यता तण्डुले एव तथा तण्डुलनिष्ठविक्लित्त्यनुकूलव्यापारवानहं भवेयमितीच्छीयोद्देश्यतापि तण्डुले एव तथाच यद्वृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारिकेच्छाजन्यकृतिजनकेच्छीयोद्देश्यताश्रयः कर्मेति सूत्रार्थः इति पूर्वोक्तानामिच्छानां समानकृतिजनकत्वेन तदीयेद्देश्यतायाश्च तण्डुले एव सत्त्वेन तासु कस्या अपीच्छायाः सत्त्वेन न दोष इत्यलम् सूत्रे एकस्या एवोपादानं समानफलकत्वेन तासामेकत्वमित्यभिप्रायेणेति सर्वं सुस्थम्।

ननु कालिकसम्बन्धेन मद्वृत्तिव्यापारजन्यफलाश्रयः कालो भवत्वितीच्छया कालस्य, कालिकसम्बन्धेन विक्लित्त्याश्रयः पाषाणो भवत्वितीच्छया पाषाणस्य, च कर्मत्वापत्त्या कालं पचति पाषाणं पचतीति प्रयोगापत्तिः। समवायसम्बन्धेन फलाश्रयत्वविवक्षणेन दोषवारणे च घटं नाशयतीत्यादेरनुपपत्तिः घटस्य प्रतियोगितासंबन्धेनैव नाशरूपफलाश्रयत्वात् घटमिच्छति घटं जानातीत्यादेरनुपपत्तिश्च घटस्य विषयतासम्बन्धेनैव इच्छाज्ञानरूपफलाश्रयत्वात्। कालिकान्यसम्बन्धेन फलाश्रयः कर्मेत्यस्य विवक्षणेन पूर्वोक्तदोषवारणं तु न सम्यक् तथाहि—कालानुयोगिकविशेषणतारूपकालिकसम्बन्धस्य भेदविवक्षणे पाषाणं पचतीत्यस्यानिस्तारः। स्वाधिकरणकालवृत्तित्वरूपकालिकभेदविवक्षणे च कालं पचतीत्यस्यानिस्तारः उभयभेदविवक्षणे च जनकत्वसम्बन्धेन फलाश्रयो व्यापारोभ-

-वत्त्वितीच्छामादाय व्यापारं पचतीत्यस्यापत्तिः कालिकातिरिक्तवृत्तितानियामक-संबन्धेनफलाश्रयत्वविवक्षणे च विषयितासम्बन्धेन मद्वृत्तिव्यापारजन्यविक्लित्याश्रयो ज्ञानं भवत्वितीच्छामादाय ज्ञानं पचतीत्यापत्तिः विषयिताया 'ज्ञाने घट' इति प्रत्ययेन वृत्तितानियामकत्वादिति चेदत्र वदन्ति—

फलतावच्छेदकसम्बन्धेन फलाश्रयस्य विवक्षणेन सकलदोषपरिहार इति।

फलतावच्छेदकः सम्बन्धश्च फलनिष्ठाधेयतावच्छेदकतया यो धात्वर्थतावच्छेदकः स एव। सर्वेषां च धातूनां फलविशिष्टव्यापारे शक्तिः। वै० स्वजनकत्व स्वाधिकरणवृत्तित्वोभयसंबन्धेन।

तत्तद्धातुस्थले फलनिष्ठाधेयतावच्छेदकतया तत्तत्संबन्धो निवेश्यः यथा पचधातोर्विक्लित्तिविशिष्टव्यापारोऽर्थः वै० स्वजनकत्व स्वनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वोभयसम्बन्धेन तथा च तत्र फलतावच्छेदकः संबन्धः समवाय एव इति कालिकेन फलाश्रयत्वविवक्षायाम् न कालं पचपि पाषाणं पचतीतिप्रयोगः समवायेन विक्लित्याश्रयः कालः पाषाणो वा भवत्वितीच्छायां कालं पचति पाषाणं पचतीति इष्यते एव। एवं नाशयतीत्यादौ नाशविशिष्टो व्यापारो धात्वर्थः वै० च स्वजनकत्वस्वनिष्ठप्रतियोगित्वसंबन्धावच्छिन्नाधेयतानिरूपिताधारतावद्वृत्तित्वोभयसम्बन्धेन। घटं जानाति घटमिच्छतीत्यादौ च ज्ञानेच्छाविशिष्टो व्यापारो धात्वर्थः वै० स्वजनकत्व स्वनिष्ठविषयतासम्बन्धावच्छिन्नाधेयतानिरूपिताधारतावद्वृत्तित्वोभयसंबन्धेन। एवं रीत्या यद्यद्धातुसमभिव्याहारे यस्य यस्य कर्मत्वमिष्टं तत्तन्निष्ठकर्मत्वोपयोगि तत्तत्सम्बन्धमन्तर्भाव्य धात्वर्थो वक्तव्यः प्रतीत्यनुसारेणैव शब्दार्थस्य कल्पनीयत्वात्।

ननु स्तोकं पचतीत्यादौ विक्लित्तिरूपे फलेऽभेदेनान्वितस्य स्तोकस्य विक्लित्याश्रयत्वाभावेन कर्मत्वानापत्तिरिति चेन्न फलस्यापि व्यपदेशिवद्भावेन समवायेन फलसम्बन्धित्वात्कर्मत्वेन तत्समानाधिकरणस्यापि कर्मत्वसिद्धेः।

न च घटकत्वघटितत्वयोरेव तयाऽतिदेशः अन्यथा रामशब्दे जराशब्दत्वातिदेशेन जरसादेशापत्तिः स्यात् मुख्यधर्मवदघटकत्वे सति मुख्यधर्मवदघटितत्वेसति मुख्यधर्मवदसमभिव्याहृतत्वसत्वादिति वाच्यम् अतिदिदिक्षितधर्मघटकमुखप्रविष्टधर्मवति सर्वेषां धर्माणां तयातिदेशेन रामादेरतथात्वेनादोषात् घटकत्वघटितत्वयोरेव तयाऽतिदेश इत्यर्थस्यानङ्गीकारात्। अत्र चातिदिदिक्षितफलश्रयत्वधर्मघटकमुखप्रविष्टफलत्वधर्मवतस्तोकादेः कर्मत्वसिद्धेः।

अन्ये तु सर्वेषां धातूनामुत्पत्तिघटितार्थकत्वेन पचेर्विक्लित्युत्पत्त्यनुकूलव्यापारार्थकतया उत्पत्तेः समवायेन विक्लित्तावभेदेनान्विते स्तोके सत्वात्तादृश फलाश्रयत्वप्रकारकेच्छोद्देश्यस्य कर्मत्वमित्याहुः।

केचित्तु फलतावच्छेदकतादात्म्यान्यतरसंबन्धेन फलसंन्धिन एव कर्मत्वमिति स्वीकारेणादोष इत्याहुः ।

केचित्तु—कालं पचतीत्यादौ समवायसम्बन्धेन फलाश्रयस्य कर्मत्वमिति विवक्षणेन न दोषः ।

न च घटं जानातीत्यादौ विषयतासम्बन्धेन फलाश्रयस्य घटस्य कर्मत्वं न स्यादिति वाच्यम् समवायविषयतान्यतरसम्बन्धेन फलाश्रयत्वविवक्षणेनादोषात् ।

न च ग्रामं त्यजतीत्यादौ प्रतियोगित्वसम्बन्धेन विभागाश्रयस्य ग्रामस्य कर्मत्वं न स्यादिति वाच्यम् समवायविषयताप्रतियोगित्वान्यतमसम्बन्धेन फफलाश्रयस्य विवक्षणेनादोषात् समवायविषयताप्रतियोगित्वरूपसमुदायत्वावच्छिन्नप्रतियोगिताकभेदवद्भिन्नत्वस्यैवान्यतमत्वेन तत्कुक्षौ जगतः प्रवेशामात्रेन गौरवस्याप्यभावादिति वदन्ति ।

केचित्तु—फलतायाः कार्यतारूपत्वेन कार्यतावच्छेदको यः सम्बन्धः स एव फलतावच्छेदकः सम्बन्धः । स च यादृशाधिकरणं मत्वा कार्यकारणभावस्तादृशाधिकरणे येन सम्बन्धेन कार्यं प्रतीयते स एव सम्बन्धः । तण्डुलादौ समवायेन विक्लित्तिं प्रति व्यापारस्य कारणतया पचेः फलतावच्छेदकः समवाय एव कालादौ समवायेन विक्लित्तेरसत्त्वेन न कालं पचतीति प्रयोगः स्तोकं पचतीत्यादि लक्ष्यानुरोधेनाभेदेन विक्लित्त्यदिकं प्रति स्वसमानकालिकत्वादिसम्बधेन व्यापारस्य कारणत्वेन तादात्म्यमपि फलतावच्छेदकः । विषयतासम्बन्धेन ज्ञानं प्रति व्यापारस्य कारणत्वेन विषयतापि फलतावच्छेदकः सम्बन्धो ज्ञाधातोः । प्रतियोगितासंबन्धेन नाशं प्रति व्यापारस्य कारणतया नश्धातो प्रतियोगिता फलतावच्छेदकः सम्बन्धः एवमन्यत्राप्यूहनीयमिति वदन्ति ।

तन्न अर्थभेदेनैव कार्यकारणभावभेदात् वृक्षंत्यजति वृक्षाद्विभजते इत्यत्र द्वयो र्धात्वोर्विभागानुकूलव्यापारार्थकतया समवायसम्बन्धेन विभागत्वावच्छिन्नं प्रति व्यापारः कारणमितिकार्यकारणभावेन समवाय एव फलतावच्छेदकः तथाच समवायसम्बन्धेन विभागाश्रयो वृक्षइति वृक्षाद्विभजते इत्यत्रापि वृक्षं त्यजतीति वत् वृक्षं विभजते इति प्रयोगापत्तिः ।

न च वृक्षं त्यजतीत्यत्र प्रतियोगित्वसमानाधिकरणः समवायः वृक्षाद्विभजते इत्यत्रानुयोगित्वसमानाधिकरणः समवायः कार्यतावच्छेदक इति न दोष इति वाच्यम् अर्थभेदाभावेन कार्यकारणभावभेदस्य दुर्वचत्वात् ।

धात्वर्थतावच्छेदकस्य फलतावच्छेदकत्वे तु त्यजधातोः विभागविशिष्टो व्यापारोऽर्थः वै० च प्रतियोगित्वसमानाधिकरणसमवायसम्बन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपिताधिकरणताश्रयवृत्तित्व स्वजनकत्वोभयसम्बन्धेनेति फल-

तावच्छेदकः प्रतियोगित्वसमानाधिकरणः समवायः इति वृक्षस्य तेन सम्बन्धेन फलाश्रयत्वात् कर्मत्वम् विभजतेस्तु अनुयोगित्वसमानाधिकरणसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वस्वजनकत्वोभयसम्बन्धेन विभागविशिष्टव्यापारोर्थः एव चानुयोगित्वसमनाधिकरणः समवायः फलतावच्छेदकः इति तेन सम्बन्धेन फलाश्रयत्वं खगस्यैव न वृक्षस्येति न वृक्षस्य कर्मत्वम् खगस्य तेन सम्बन्धेन फलाश्रयत्वेऽपि न कर्मत्वं परयाकर्तृसंज्ञयाबाधात् ।

नन्वेवमपि वृक्षाद्विभजते इत्यादौ वृक्षस्य कर्मत्वापत्तिः वृक्षं त्यजतीत्यनुरोधेन प्रतियोगित्वसमानाधिकरणसमवायस्यापि फलतावच्छेदकत्वेन विभजति समभिव्याहारेऽपि तेन सम्बन्धेन वृक्षस्य विभागाश्रयत्वादिति चेन्न यद्धातौ यः फलतावच्छेदकः सम्बन्धस्तेन संबन्धेन फलाश्रयस्य तद्धातुसमभिव्याहारे कर्मत्वमितिविवक्षणेन त्यजधातौ प्रतियोगित्वसमानाधिकरणः समवाय एवफलतावच्छेदकः विभजतौ चऽनुयोगित्वसमानाधिकरणः समवाय ऐवति दोषाभावात् । एतेन कर्तृग्रहणसत्त्वेऽपि माषेष्वश्वं बध्नातीत्यादौ माषाणां कर्मत्वापत्तिः अश्वोगच्छतीत्यादौ अश्वस्यापि कर्तृत्वादित्यपास्तम् । यद्धातुसमभिव्याहारे कर्मत्वं तद्धात्वर्थकर्तुरेव विवक्षणात् । न च यत्तदर्थयोरननुगतत्वेनाननुगम एव दोष इति वाच्यम् प्रकृतधातुसमभिव्याहारे इत्यादिविवक्षणेनोनुगमसम्भवात् ननु प्रकृतत्वमपि अननुगतमेवेति चेदत्रोच्यते—स्वविशिष्टेच्छीयविषयताश्रयः स्वकर्मेति सूत्रार्थः । स्वं धातुः इच्छायां धातुवैशिष्ट्यं स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतप्रधानीभूतव्यापाराश्रयवृत्तित्त्व स्वविशिष्टाश्रयत्वप्रकारकत्वोभयसम्बन्धेन अत्रवैशिष्ट्यं स्वविशिष्टफलनिरूपितत्व स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतफलनिष्ठाधेयतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसंबन्धेन अत्रवैशिष्ट्यं स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतप्रधानीभूतव्यापार प्रयोज्यत्व स्वबोध्यत्वेन तात्पर्यविषयत्वोभयसम्बन्धेनेति । स्वनिरूपितकर्मत्वमेव च स्वसमाभिव्याहृतकर्मप्रत्ययार्थ. इति न कोऽपि दोष इत्यलम् ।

नन्वेवमपि नरकं गच्छति कारागारं गच्छतीत्यादयः कथं प्रयोगाः न हि नरकं कारागारं वा कश्चिज्जिगमिषतीति चेद्—

न तादृशफलवत्त्वप्रकारकेच्छोद्देश्यत्वेन विवक्षितं कर्मेत्यर्थेन वक्तुः क्रियाकर्मभावसम्बधेन देवदत्तव्यापारविशिष्टसंयोगरूपफलाश्रयत्वप्रकारकदेवदत्तवृत्तीच्छोद्देश्याभिन्ननरकवृत्तिसंयोगानुकूलदेवदत्तभिन्नाश्रयवृत्तिव्यापारविषयकबोधो भवत्वितीच्छायाः सत्त्वेन नरकादीनां तादृशोच्छोद्देश्यत्वेन विवक्षितत्वात्कर्मत्वसिद्धेः । तथा च भाष्यम्—आतश्च विषमीप्सितं यद्भक्षयति ताडनादिनेति ।

न च तण्डुलं न पचति इत्यादौ तण्डुलादेः कर्मत्वानापत्तिः तादृशफला-

श्रयत्वेनाविवक्षितत्वादिति वाच्यम् पचेः विक्लित्तित्वेन आरोपितसंयोगवास्तविकसंयोगयोर्बोधकतयाऽऽरोपितसंयोगस्य नञ्द्योत्यतया कर्मत्वसिद्धेः ।

केचित्तु नञ्समभिव्याहारे फलाभावानुकूलव्यापारो धातूनामर्थ इति फलाभावरूपफलाश्रयत्वस्य ग्रामे सत्त्वेन ग्रामस्य कर्मत्वमित्याहुस्तन्न—फूत्कारादीनामेव पचधातुवाच्यतया तेषां विक्लित्तिं प्रति जनकत्वेन विलित्त्यभावं प्रत्यजनकत्वात् असमस्तनञः क्रियाभावबोधकत्वेनैव साधुत्वस्य साधुत्वमष्टकस्यास्य क्रिययैवावधार्यतामित्यनेन बोधितत्वाच्च । तण्डुलो विक्लित्त्यभाववान् भवतु इतीच्छाया असत्त्वे तथा प्रयोगस्येष्टस्यानापत्तेर्दुर्वारत्वाच्च ।

परेतु यत्र केवलं तण्डुलं पचतीत्युच्यते तत्र कर्मत्वं कर्तुरध्याहारेणोपपाद्यम् अन्यथा सूत्रार्थसमन्वयाभावेन कर्मत्वं न स्यात् तथा तण्डुलं न पचतीत्यत्रापि कर्तुरध्याहारेण तद्वृत्तीच्छामादाय कर्मत्वमुपपाद्य चैत्रादौ तण्डुलनिष्ठविक्लित्त्यनुकूलव्यापाराभावो नञा बोध्यत इति न काप्यनुपपत्तिः ।

न चैवमपि गगनं न पचतीति प्रयोगानुपपत्तिः गगनविषयकपाकाप्रसिद्ध्या कर्तुरध्याहारेऽपि कस्यापि पाकक्रिययेप्सितत्वस्य गगनादावभावादिति वाच्यम् गगनादौ पाकासम्भवेऽपीच्छाया अनिवार्यतया पाकक्रियया गगनादेरव्याप्तुमिष्टत्वे बाधकाभावः अतएव गगनं पचतीत्यादौ योग्यताविरहेण शाब्दबोधा भावेऽपि न व्याकरणासाधुत्वम् योग्यताभ्रमे शाब्दबोधस्येष्टत्वाच्च ।

नन्वेवमपि यत्र चैत्रो न पचति नापीच्छति तत्र चैत्रस्तण्डुलं पचतीति प्रयोगो न स्यात् तण्डुलस्य तादृशेच्छीयोद्देश्यत्वाभावात् कर्तृत्वाभावाच्च न च तत्र कर्त्रन्तरमध्याहृत्य कर्मत्वमुपपाद्यमिति वाच्यम्—कर्त्रन्तरबोधस्यानुभवविरुद्धत्वादिति चेद्—

न विवक्षातः कारकाणि भवन्तीत्यभियुक्तोक्तेः चैत्रवृत्तिव्यापारप्रयोज्यफलाश्रयत्वस्य तण्डुले विवक्षणेनादोषात् । तदानीं कर्मत्वोपयोगीच्छायाः चैत्रे कल्पनेन तामादाय सूत्रप्रवृत्तेस्सूपपादत्वात् । अतएव रथो ग्रामं गच्छतीत्यत्र ग्रामस्योद्देश्यताया आरोपेण कर्मत्वमिति लघुमञ्जूषायामुक्तम् ।

वस्तुतस्तु ग्रामं न गच्छति चैत्र इत्यादावपि फलाश्रयत्वप्रकारकेच्छीयोद्देश्यतामारोप्यैव कर्मत्वमुपपाद्यम् कर्त्रन्तराध्याहारस्तु न युक्तः ग्रामं न गच्छन्ति चैत्र इत्यस्य तण्डुलं पचति नत्वमित्यस्यापत्तेश्च कर्त्रन्तराध्याहारे तेनैव सह तिङर्थकर्तुरन्वयेन चैत्रेण सह समानवचनत्वाप्राप्तेः त्वंपदार्थेन सहानन्वयेन त्वं पदस्य तिङ्सामानाधिकरण्याभावेन मध्यमपुरुषाप्राप्तेश्चेत्याहुः ।

यत्तु परमलघुमञ्जूषायाम् उद्देश्यत्वयोग्यस्य कर्मसंज्ञेत्यर्थकरणेन ग्रामं न गच्छतीत्यादौ कर्मत्वोपपादनं कृतम् तदयुक्तम् योग्यताया अनुगमासंभवात् लघुमञ्जूषायामनुक्तेश्च ।

अन्येतु पदार्थौ द्विविधौ बौद्धो बाह्यश्च नञ्समभिव्याहारे बौद्धस्यैव बोधो नञ्पदं तात्पर्यग्राहकमिति बौद्धार्थमादायैव कर्मत्वमिति वदन्ति ।

अन्ये तु चैत्रश्चैत्रं गच्छतीत्यत्र चैत्रस्य कर्मत्ववारणाय क्रियाजन्यफलशालित्वमिति कर्मलक्षणघटकक्रियायां परसमवेतत्वमपि विशेषणं देयम् तत्र च परत्वं द्वितीयाप्रकृत्यर्थापेक्षया बोध्यम् । ननु प्रकृत्यर्थगततत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्त्वं प्रकृत्यर्थतावच्छेदकावच्छेदकावच्छिन्नप्रतियोगिताकभेदवत्त्वं वा आद्ये सर्वत्रातिव्याप्तिः द्वितीये मल्लो मल्लं गच्छतीत्यत्र कर्मत्वं न स्यादिति चेद्—

स्वानुकूलत्व स्वसमानाधिकरणभेदप्रतियोगिवृत्तित्वसंबन्धाभ्यां फलविशिष्टव्यापाराश्रयसमवेतत्वं स्वान्यसमवेतत्त्व स्ववृत्तिसंयोगजनकत्वसंबन्धाभ्यां फलाश्रयविशिष्टव्यापाराश्रयसमवेतत्वं वा परसमवेतत्वमिति स्वीकारेणोक्तस्थलेष्वदोष इति बोध्यम् ।

ननु कर्तृवृत्तिव्यापारविशिष्टफलाश्रयः कर्मेत्यर्थेन कर्तुराप्ततमं कर्मेति सूत्रेण ग्रामं गच्छति तृणं स्पृशतीत्युभयोः सिद्धया कर्तुरीप्सिततमं कर्म तथायुक्तं चानीप्सितमिति सूत्रद्वयं किमर्थमिति चेद्—

न काशीं गच्छन्पथि मृत इत्यत्र काश्या कर्मत्वार्थमीप्सिततममिति तथाचानीप्सितार्थं द्वितीयमिति न हि काश्याः संयोगरूपफलाश्रयत्वमस्ति एवं तण्डुलं पिपक्षन्मृत इत्यादौ तण्डुलस्य फलाश्रयत्वाभावेन कर्मत्वं न स्यात् ईप्सिततममित्युक्तौ तु फलाश्रयत्वप्रकारकेच्छाविषयत्वात्कर्मत्वसिद्धिरित्यवधेयम् ।

## लः कर्मणि च भावे चाकर्मकेभ्यः ।

अत्र नैयायिकाः लकाराणां कृतावेव शक्तिर्लाघवात् नतु कर्तरि कृत्याश्रयस्य कर्तृत्वेन तत्रानन्तायाः कृतेः शक्यतावच्छेदकत्वेन गौरवात् । कृतौ शक्त्यभ्युपगमे तत्र कृतित्वस्य शक्यतावच्छेदकत्वेन लाघवात् । तण्डुलं पचतीति वाक्यजन्यशाब्दं प्रति शाब्दिकनये आश्रयत्वत्वविशिष्टावच्छिन्नवाचकताज्ञानाश्रयत्वत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थित्योः कारणत्वेन गौरवात् ।

न्यायनये तिपदं कृतिविषयकबोधजनकत्वप्रकारकभगवदिच्छीयविषयतावदित्याकारकशक्तिज्ञानजन्यकृतित्वप्रकारकोपस्थितित्वेन कारणत्वाभ्युपगमात् कृतिविषयकोपस्थितिशक्तिज्ञानयोः कार्यकारणभावेन लाघवात् ।

विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमते शाब्दिकनये तण्डुलं पचतीति वाक्यजन्यशाब्दसामग्रीघटकाश्रयत्वप्रकारकोपस्थितेराश्रयत्वत्वप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थितित्वेन एवं विशेष्यतानिरूपितप्रकारत्वावच्छिन्नाश्रयत्वनिष्ठविशेष्यतानिरूपिताश्रयत्वप्रकारकोपस्थितित्वेन च प्रतिबन्धकत्वे विनिगमकाभावेन प्रतिबन्धकताधिक्यात् ।

न्यायनये विभिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति कृतित्वप्रकारकोपस्थितित्वेन प्रतिबन्धकत्वाभ्युपगमेन लाघवाच्च । अश्रयत्वस्याखण्डोपाधितया स्वरूपतो भानस्वीकारान्न शक्यतावच्छेदकत्वे गौरवं न वा प्रतिवन्धकताधिक्यमिति वक्तुमशक्यम् आश्रयभेदेनाश्रयत्वस्य भिन्नत्वात् अन्यथा चैत्रनिष्ठाश्रयत्वस्य शक्यत्वावच्छेदकत्वे मैत्रः पचतीति वाक्यस्याप्रामाण्यप्रसङ्गात् ।

न च सकलाश्रयनिष्ठाश्रयत्वमेकमेव स्वीक्रियत इति वाच्यम् कालिकसम्बन्धेन काले पाकस्य सत्त्वेन कालं पचतीतिप्रयोगापत्तेः समवायसम्बन्धावच्छिन्नत्वस्य निवेशेऽप्याश्रयत्वस्यैक्येन समवायसम्बन्धावच्छिन्नाश्रयताया भेदात् पाकनिरूपिताश्रयत्वस्य काले दुर्वारत्वात् ।

नचैवं रथो गच्छतीत्यादावचेतने रथे कृतेर्बाधादाश्रयत्वे लक्ष्यतावच्छेदकगौरवेण साम्यमिति वाच्यम् अतिरिक्तशक्तिकल्पनापेक्षया क्लृप्तशक्यसम्बन्धरूपलक्षणायां लाघवात् । नापि युगपद्वृत्तिद्वयविरोधः लक्षणाश्रयणे ततश्च वर्तमानत्वादीनां तत्रान्वयानुपपत्तिः, शक्ततावच्छेदकलक्षकतावच्छेदकयोर्भेदात् । लट्त्वेन वर्तमानत्वे शक्तेर्लकारत्वेन लक्षणायाश्चाश्रयणात् । नापि तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति लक्षणाज्ञानजन्याश्रयत्वाद्युपस्थितेर्हेतुत्वकल्पनाद्गौरवापत्तिः तद्विषयकवृत्तिज्ञानजन्योपस्थितित्वेन हेतुतया लक्षणाज्ञानस्य पृथग्हेतुत्वात् ।

न च लः कर्मणि चेति पाणिनिस्मृतितिबलाल्लस्य कर्तृवाचकत्वमध्यवसीयते इति वाच्यम् चादनुकृष्टस्य कर्तरीत्यस्य कर्तृत्वपरत्वे बाधकाभावात् कर्तृत्वस्य कृतिरूपत्वात् ।

न च तिङ्समानाधिकरणे प्रथमेतिवार्तिकात् तिङर्थाभिन्नार्थबोधकप्रातिपदिकात्प्रथमेत्यर्थेन तिङर्थकृत्यभेदस्य चैत्रे बाधात् पचति चैत्र इत्यादि प्रयोगानुपपत्तिरिति वाच्यम् समवायस्वरूपान्यतरसम्बन्धेन तिङर्थान्वितार्थबोधकप्रातिपदिकात्प्रथमेत्यर्थेन तिङर्थकृतेः समवायेन चैत्रे सत्त्वात् अनुपपत्त्यभावात् । नापि पचन्तं चैत्रं पश्येत्यादौ सामानाधिकरण्यानुपपत्तिः यतस्तस्याश्रयतासम्बन्धेन चैत्रेऽन्वयसंभवात् नामार्थयोरभेद एवेति नियम तु कर्तर्येव शत्रादीनां शक्तेरभ्युपगमेनादोषात् स्थान्यर्थेन निराकांक्षतया कर्तरि कृदित्यस्य तत्रानुपस्थितौ तु आश्रये लक्षणाया अपि वक्तुं शक्यत्वात् । लक्षणया पाको देवदत्त इति प्रयोगापत्तिस्तु वक्तुमशक्या तादृशप्रयोगादर्शनेन तत्र लक्षणाया अनभ्युपगमात् नापि पचति चैत्र इत्यत्र कर्तुरनुक्तत्वात्तृतीयापत्तिः कर्तृगतसंख्यानभिधानस्य तत्र तन्त्रत्वात् । संख्याभिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः । कर्मत्वादीत्यस्येतरविशेषणत्वतात्पर्याविषयत्वमर्थः तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रे न संख्यान्वयः यद्वा धात्वर्थातिरिक्ताविशेषणत्वं

प्रथमदलार्थः स्तोकं पचतीत्यादौ स्तोकादेस्तद्वारणाय द्वितीयदलम् इति वृथैत्र कर्तरि शक्तिरित्याहुः ।

अत्र विचार्यते आख्यातस्य कर्तृवाचकत्वाभावे पच्यते तण्डुलेनेत्यादौ कर्मवत्कर्मणेत्यतिदेशात् कर्मणि द्वितीयापत्तिः मन्मते तु लिङ्याशिष्याङिति-द्विलकारकाल्ल इत्यस्यानुवृत्तेर्लकारवाच्य एव कर्ता कर्मवदित्यर्थेन भावे लकारे तेन कर्तुरनुपस्थितत्वेनादोषात् । एवं भेत्तव्यं कुसूलेनेत्यत्रापि कर्मवत्कर्मणेति कर्मत्वे भावे प्रत्ययानापत्तिः मन्मते चोक्तरीत्या कर्मत्वाभावात् नापि लकार-वाच्यकृत्याश्रयः कर्ता कर्मवदित्यर्थेनापि निर्वाहः पच्यमानस्तण्डुल इत्यादौ लकारेण संख्याया अनुपस्थित्या कर्मवद्भावानुपपत्तेः नापि लकारवाच्यकर्तृ-त्वाश्रयः कर्ता कर्मवदित्यर्थः वाचनिकार्थातिरिक्तार्थकल्पने मानाभावात् पूर्व-लक्षणाप्रसङ्गभियैव निषादस्थपतिं याजयेदित्यत्र कर्मधारयमङ्गीचकार जैमिनिः एवं कृञो यत्नार्थकत्वे क्रियते घटः स्वयमेवेत्यादौ कर्मवद्भावानापत्तौ यगाद्यना-पत्तेः ज्ञानेच्छादिवद्यत्नस्य कर्तृस्थत्वात् बीजादिनाऽङ्कुरः कृतः रथो गमनं क-रोतीत्यादौ कृञो यत्नार्थकत्वस्यासिद्धेश्च आश्रयत्वस्य नित्यत्वेन गौरवात् उ-त्पादविनाशव्यहारस्तु निरूपिताद्युत्पादमादायैव वायुत्वरूपयोः समवाय-स्यैकत्वेऽपि रूपनिरूपितत्वाभावेन वायौ रूपवत्ताप्रतीत्यभावात् एवं सति गौर-वविरहेण तस्य कर्तृवाचकत्वपरित्यागोऽपि बलादेवेत्यलम् ।

मीमांसकास्तु लकाराणां कर्तरि शक्तौ नानृतं वदेत् इति विधिगताभावना श्रौतत्वात्प्रयोजनाकांक्षिणी प्रकरणगम्यक्रत्वर्थत्वबाधेन पुरुषार्थो भवेत् ।

ननु कर्तुरुक्तत्वेऽपि प्राधान्याद्भावनायाः तां प्रत्युपादीयमानस्य कर्तुः श्रौतोऽपि सम्बन्धः प्रकरणानुगुणत्वादविरुद्धो नैव क्रत्वर्थतां बाधेत विरो-धिनौ हि तुल्यकक्षौ सम्बन्धौ परस्परं बाधेयाताम् न तु गुणप्रधानभूतौ इति चेन्न—साधकमपेक्षमाणाया क्रियया गुणत्वेन गृहीतेऽपि कर्तरि तस्याः प्रयोजना-काङ्क्षायां कर्तैव सन्निहितः तां निवर्तयितुं क्षमः सन्मुख्यः कृदन्तवत्क्रमेण स्थितयोः प्रकृतिप्रत्यययोर्मध्ये प्रत्ययार्थस्यैव प्राधान्यावगमश्च ।

न च भावप्रधानमाख्यातमिति यास्कवचनादेव भावनाप्राधान्यमध्यव-सीयते इति वाच्यम् तद्वचनस्य मत्पक्षाभिप्रायकत्वात् नापि प्रकृत्यर्थप्रत्यया-र्थयोरितिवचनविरोधः भावनाप्रत्ययार्थवादिनो मे प्रत्ययर्थस्यैव प्रधान्यात् तदुक्तम्—

यद्यप्यादौ गुणत्वेन कर्ता कर्मणि गम्यते ।
तथाप्यस्य प्रधानत्वं न पश्चात्प्रतिषिध्यते ॥
यद्वैतदविशेषेण स्थितं क्रमवशादुभौ ।
प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति ॥

तेनाख्यातेऽपि कर्तैव प्रकृत्यर्थोपसर्जनः ।
प्राधान्येनाभिधीयेत द्वाभ्यामपि कृदन्तवत् ॥
धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि ।
औत्सर्गिको न च न्यायो मत्पक्षे हि निवर्त्स्यति ॥

न च लः कर्मणीति सूत्रादेव कर्तुराख्यातवाच्यत्वमस्तु वाच्यवाचकभावस्य व्यवहारैकगम्यत्वात् अन्यार्थे प्रयुक्तानां शब्दानामन्यार्थे प्रयुञ्जाना आचार्या अपि प्रत्यवयेयुः शास्त्रैकदेशालोचनेन विरोधोद्भावनेऽपि शास्त्रसमुदायपर्यालोचनेऽविरोधात् । न हि सुरा न पातव्येत्यस्यैकदेशेन विहितं पानमकुर्वन् शास्त्रविरुद्धं कुर्यात् । तस्माल्लः कर्मणि, द्व्येकयोः, तिप्तस्झीत्यादीनामेकवाक्यतया कर्तुरेकत्वे एकवचनं कर्तुर्द्वित्वे द्विवचनमित्यर्थेन सर्वत्र निर्वाहात् । तदुक्तम्—

सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैः सह ।
एकवाक्यतया युक्तमुपदेशं प्रतन्वते ॥
अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥

कर्तर्येकत्वे चान्योन्यनिरपेक्षतिबादिविधाने तु द्विबहुष्वपि कर्तृषु तिप्प्रसज्येत तस्मादावश्यकी चैकवाक्यता महाभाष्येऽपि यदैकत्वादयो विभक्त्यर्थास्तदा कर्मादयो विशेषणत्वेनेति द्वाभ्यामपि भाष्यकारवार्तिककाराभ्यां बहुवचनवार्तिकेऽभिहितवार्तिके च द्वावपि कर्मत्वाद्येकत्वादिवाच्यत्वपक्षौ दूरमनुसृत्यान्तेनिर्दोषतयावधारितम् । यदा कर्मादयो विभक्त्यर्थास्तदैकत्वादयो विशेषणत्वेनेत्यस्य पूर्वपक्षाभिप्रायकत्वात् । यदापि कर्मादयो विशेष्यभूतास्तदाप्येकत्वादय एव विशेषणत्वेनावस्थिताः सन्तोऽभिधीयन्तेऽनभिहितानां विशेषणत्वानुपपत्तेरित्यर्थकरणात् । अर्थशब्दस्य प्रयोजनवाचितयोभयोर्वचनयोर्यथासम्भवं पूर्वस्य तिङ्विषयत्वादपरस्य सुब्विषयत्वाच्चाविरोधात् ।

ननु द्व्येकयोरित्यादिशास्त्राणां तिङादिविधायकशास्त्रेणेव सुबादिविधायकशास्त्रेणैकवाक्यतया कर्मादिविशिष्टसंख्याभिधानं भवेन्न कारकाभिधानमिति चेन्न एकस्यापि शास्त्रस्य प्रयोजनवशात्सम्बन्धिभेदेन भिन्नत्वात् तिङ्क्षु विशेष्यत्वेन सुप्सु विशेषणत्वेन चान्वयसम्भवात् ।

न च केवलकारकपदप्रयोगाभावादवश्यंभाव्याख्यातपदाभिहितभावनोपनीतानामेव कारकाणां तिङ्दिव संख्यासम्बन्धो भवेदिति वाच्यम् । इतरेतराश्रयवारणाय क्रियान्वयमन्तरेणापि कारकस्य संख्यासम्बन्धत्वाभ्युपगमात् ।

न च देवदत्तः पचतीत्यादौ कर्तुरनभिधानात् तृतीयापत्तिरिति वाच्यं स हि कर्तृप्रतिपत्त्यर्थं तद्गतसंख्याप्रतिवत्त्यर्थं वा विधीयते प्रकृते चाक्षेपात्कर्तु-

स्तिपैकत्वस्य च लाभेन तद्बोधकतृतीयाया अप्रवृत्तेः नापि सामानाधिकरण्यानुपपत्तिः भावनायाः कर्तुराक्षेपादेकार्थबोधकत्वोपपत्तेः गङ्गायां घोष इत्यस्य लक्षितस्य तीरस्य घोषेन्वयवदशाब्देनापि कर्त्रा शाब्दसंख्यान्वयसंभवात् ।

न च लक्षणया सामानाधिकरण्यस्योपपत्तावपि मुख्यं सामानाधिकरण्यं नोपपद्येतेति वाच्यम् । भवन्मतेऽपि तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात् शक्तिमद्द्रव्यस्याकृत्यधिकरणेनानभिधानात् देवदत्तशब्देन च द्रव्यमात्राभिधानान्मुख्यसामानाधिकरण्यस्य वक्तुमशक्यत्वात् नापि पचन्तं पचमानं वा चैत्रं पश्येत्यादौ सामानाधिकरण्यानुपपत्तिः लः कर्मणि चेत्यस्य लटः शतृशानचावित्यनेनैकवाक्यतया कर्त्रादावेव शत्रादेर्विधानात् । कर्तरि शबित्यत्र भवन्मते कर्तृपदस्य तदर्थकपरत्वस्यावश्यकतया तन्मतेऽपि कर्तृगतैकत्वादिबोधके लक्षणया निर्वाहात् युष्मद्युपपदे समानाधिकरण इत्यत्र तु समानाधिकरणपदबलाल्लिङ्वाच्यकारकवाचिनीत्यर्थवत्समवायस्वरूपान्यतरसम्बन्धेन लिङर्थान्वितार्थबोधके युष्मद्युपपदे इत्यर्थेन तिङ्वाच्यभावनाक्षिप्तकर्तृवाचिनीत्यर्थेन वाऽदोषात् । कर्मवत्कर्मणा तुल्यक्रिय इत्यस्य समवायेन लकारार्थान्वितार्थः कर्ता कर्मवदित्यर्थेन पच्यते तण्डुलेनेत्यत्रापि निर्वाहात् । भावे प्रत्यये लकारेण भावनाया अनुपस्थितेः स्वयुक्ताख्यातार्थभावनाव्यधिकरणफलवाचकत्वस्य सकर्मकत्वेन तादृशभावनासमानाधिकरणफलवाचकत्वस्याकर्मकत्वेन सकर्मकत्वाकर्मकत्वव्यवहारस्याप्यनुच्छेदात् ग्रामो गमनवानित्यादिप्रयोगस्तु पाकवांस्तण्डुल इत्यादिवदिष्ट एवेत्याहुः ।

इति न्यायव्याकरणाचार्यसूर्यनारायणशुक्लविरचिते वादरत्ने द्वितीयो भागः संपूर्णतामभजत् ।

---





